DAT

# BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 249.



## आथर्व्वणोपनिषदः

नारायणकृतदीपिकासहिताः ।

## THE A'THARVANA UPANISHADS,

WITH THE

COMMENTARY OF NA'RA'YANA,

EDITED BY

RA'MAMAYA TARKARATNA,

*Professor of Rhetoric, Sanskrit College, Calcutta.*

FASCICULUS I. — 5

**CALCUTTA.**

PRINTED AT THE GANES'A PRESS.

1872.

| नम्बर। | ग्रन्थनाम। |
| --- | --- |
| 11<br>12 | आथर्व्वणोपनिषदः (दीपिकाख्यटीकासहिता)<br>१ शिर उपनिषद्<br>२ गर्भोपनिषद्<br>३ नादविन्दूपनिषद्<br>४ ब्रह्मविन्दूपनिषद्<br>५ अमृतविन्दूपनिषद्<br>६ ध्यानविन्दूपनिषद्<br>७ तेजोविन्दूपनिषद्<br>८ योगशिखोपनिषद्<br>९ योगतत्त्वोपनिषद्<br>१० सन्न्यासोपनिषद्<br>११ आरुणेयोपनिषद्<br>१२ ब्रह्मविद्योपनिषद्<br>१३ क्षुरिकोपनिषद्<br>१४ चूलिकोपनिषद्<br>१५ अथर्व्वशिखोपनिषद्<br>१६ ब्रह्मोपनिषद्<br>१७ प्राणाग्निहोत्रोपनिषद्<br>१८ नीलरुद्रोपनिषद्<br>१९ कण्ठश्रुत्युपनिषद्<br>२० पिण्डोपनिषद्<br>२१ आत्मोपनिषद्<br>२२ रामतापनीयोपनिषद् (पूर्व्वोत्तरौ)<br>२३ रामोपनिषद्<br>२४ सर्व्वोपनिषत्सारः<br>२५ हंसोपनिषद्<br>२६ परमहंसोपनिषद्<br>२७ जाबालोपनिषद्<br>२८ कैवल्योपनिषद् (with शङ्करानन्दकृत-दीपिका) |




# ADVERTISEMENT.

The following MSS. have been used in the preparation of this edition of the A'tharvana Upanishads ; viz:

1. क. Text, belonging to the Library of the Asiatic Society of Bengal ; 81 folia, having 10 lines on each page ; complete but incorrect.

2. ख. Text, belonging to Bábu Harischandra of Benares ; 177 folia, having 9 lines on each page ; old, generally correct, but imperfect, a few leaves at intervals being wanting.

3. ग. Text, belonging to Bábu Harischandra of Beneras ; a newly written manuscript of 128 folia having 8 lines on each page ; incomplete, but correct.

4. घ. Text and commentary, belonging to the Asiatic Society, recently copied from a MS. belonging to a Dandi ; foolscap folio of 378 pages, having 26 lines on each page. Complete, and, with the exception of a few copyists' errors, throughout correct.

5. ङ. Text and commentary, from Bábu Hitalála Mis'ra of Mánakar, Zillah Burdwan. 186 folia having 10 lines on each page. Complete, but incorrect.

Besides these, a great number of codices, containing portions of the different Upanishads or commentary on them, have been consulted and collated. These will be duly noticed in the Preface on the completion of the work.

ओं नमो गणेशाय ।

---

## शिरउपनिषत् ।

ओं देवा ह वै स्वर्गलोकमायंस्ते रुद्रमपृच्छन् को भवानिति । सोऽब्रवीदहमेकः प्रथममासीद्वर्त्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति । सोऽन्तरादन्तरं प्राविशत्, दिशश्चान्तरं प्राविशत्, सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोऽहम् अधश्चोर्द्ध्वश्चाहं दिशश्च प्रतिदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं साविन्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप्चाहं छन्दोऽहं सत्योऽहं गार्हपत्यो दक्षिणाग्निराहवनीयोऽहं गौरहं गौर्य्यहमृगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहं गुह्योऽहमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहमुग्रञ्च बलिश्च पुरस्ताज्ज्योतिरित्यहमेव, सर्वेभ्यो मामेव स सर्वः समायो मां वेद स देवान् वेद सर्वांश्च वेदान् साङ्गानपि ब्रह्म ब्राह्मणैश्च गां गोभिर्ब्राह्मणान् ब्राह्मण्येन हविर्हविषा आयुरायुषा सत्येन सत्यं धर्म्मेण धर्म्मं

तर्पयामि स्वेन तेजसा। ततो ह वै ते देवा रुद्रमपृच्छन्, तं देवा रुद्रमपश्यन्, ते देवा रुद्रमध्यायन्, ते देवा ऊर्द्धबाहवो रुद्रं स्तुवन्ति ॥ १ ॥

ओं यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमोनमः ॥१॥
यो वै रुद्रः स भगवान् यश्च विष्णुस्तस्मै व नमोनमः ॥२॥
यो वै रुद्रः स भगवान् यश्च स्कन्दस्तस्मै वै नमोनमः ॥३॥
यो वै रुद्रः स भगवान् यश्चेन्द्रस्तस्मै वै नमोनमः ॥ ४ ॥
यो वै रुद्रः स भगवान् यश्चाग्निस्तस्मै वै नमोनमः ॥ ५ ॥
यो वै रुद्रः स भगवान् यश्च वायुस्तस्मै वै नमोनमः ॥ ६ ॥
यो वै रुद्रः स भगवान् यश्च सूर्य्यस्तस्मै वै नमोनमः ॥ ७ ॥
यो वै रुद्रः स भगवान् यश्च सोमस्तस्मै वै नमोनमः ॥८॥
यो वै रुद्रः स भगवान् ये चाष्टौ ग्रहास्तस्मै वै नमोनमः॥९॥
यो वै रुद्रःसभगवान् ये चाष्टौ प्रतिग्रहास्तस्मै वै नमोनमः॥१०॥
यो वै रुद्रः स भगवान् यच्च भूस्तस्मै वै नमोनमः ॥११॥
यो वै रुद्रः स भगवान् यच्च भुवस्तस्मै वै नमोनमः ॥१२॥
यो वै रुद्रः स भगवान् यच्च स्वस्तस्मै वै नमोनमः ॥१३॥
यो वै रुद्रः स भगवान् यच्च महस्तस्मै वै नमोनमः ॥१४॥
यो वै रुद्रः स भगवान् या च पृथिवी तस्मै वै नमोनमः॥१५॥

यो वै रुद्रः स भगवान् यच्चान्तरिक्षं तस्मै वै नमोनमः ॥१६॥

यो वै रुद्रः स भगवान् या च द्यौस्तस्मै वै नमोनमः ॥१७॥

यो वै रुद्रः स भगवान् याश्चापस्तस्मै वै नमोनमः ॥१८॥

यो वै रुद्रः स भगवान् यच्च तेजस्तस्मै वै नमोनमः ॥१९॥

यो वै रुद्रः स भगवान् यश्च कालस्तस्मै वै नमोनमः ॥२०॥

यो वै रुद्रः स भगवान् यश्च यमस्तस्मै वै नमोनमः ॥२१॥

यो वै रुद्रः स भगवान् यश्च मृत्युस्तस्मै वै नमोममः ॥२२॥

यो वै रुद्रः स भगवान् यच्चामृतं तस्मै वै नमोनमः ॥२३॥

यो वै रुद्रः स भगवान् यच्चाकाशं तस्मै वै नमोनमः ॥२४॥

यो वै रुद्रः स भगवान् यच्च विश्वं तस्मै वै नमोनमः ॥ २५ ॥

यो वै रुद्रः स भगवान् यच्च स्थूलं तस्मै वै नमोनमः ॥२६॥

यो वै रुद्रः स भगवान् यच्च सूक्ष्मं तस्मै वै नमोनमः ॥२७॥

यो वै रुद्रः स भगवान् यच्च शुक्लं तस्मै वै नमोनमः ॥२८॥

यो वै रुद्रः स भगवान् यच्च कृष्णं तस्मै वै नमोनमः ॥२९॥

यो वै रुद्रः स भगवान् यच्च कृत्स्नं तस्मै वै नमोनमः ॥३०॥

यो वै रुद्रः स भगवान् यच्च सत्यं तस्मै वै नमोनमः ॥ ३१ ॥

यो वै रुद्रः स भगवान् यच्च सर्वं तस्मै वै नमोनमः ॥३२॥२॥

भूस्ते आदिर्मध्यं भुवस्ते स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं

द्विधा त्रिधा वृद्धि(१)स्त्वं शान्तिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्व्वमसर्व्वं विश्वमविश्वं कृतमकृतं परमपरं परायणञ्च त्वम्। अपामसोममम्ता अभूमागन्मे ज्योतिरविदामदेवान्। किं नूनमस्मान् कृणवदरातिः। किमुधूर्त्तिरमृतं मर्त्यस्य(२) सोम-सूर्य्यपुरस्तात् सूक्ष्मः पुरुषः। सर्वं जगद्धितं वा एतदक्षरं प्राजापत्यं सौम्यं सूक्ष्मं पुरुषं ग्राह्यमग्राह्येण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसति, तस्मै महाग्रासाय वै नमोनमः।

हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः।
हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः॥

तस्योत्तरतः शिरो दक्षिणतः पादौ. य उत्तरतः स ओङ्कारः, य ओङ्कारः स प्रणवः, यः प्रणवः स सर्वव्यापी, यः सर्वव्यापी सोऽनन्तः, योऽनन्तस्तत्तारं, यत्तारं तच्छुक्लं, यच्छुक्लं तत्सूक्ष्मं, यत् सूक्ष्मं तद्वैद्युतं, यद्वैद्युतं तत् परं ब्रह्म, यत् परं ब्रह्म स एकः, यः एकः स रुद्रः, यो रुद्रः स ईशानः, य ईशानः स भगवान् महेश्वरः॥३॥

१ ग, वृद्ध। २ ख, मर्त्यस्य।

अथ कस्मादुच्यते ओङ्कारः, यस्मादुच्चार्यमाण एव प्राणान् ऊर्द्ध्वमुत्क्रामयति तस्मादुच्यते ओङ्कारः। अथ कस्मादुच्यते प्रणवः, यस्मादुच्चार्यमाण एव ऋग्यजुःसामाथर्वाङ्गिरसं ब्रह्म ब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणवः। अथ कस्मादुच्यते सर्वव्यापी, यस्मादुच्चार्यमाण एव यथा स्नेहेन पललपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिषक्तश्च तस्मादुच्यते सर्वव्यापी। अथ कस्मादुच्यतेऽनन्तः यस्मादुच्चार्यमाण एव तिर्यगूर्द्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्यते ऽनन्तः। अथ कस्मादुच्यते तारं, यस्मादुच्चार्यमाण एव गर्भ-जन्म-व्याधि-जरा-मरण-संसार-महाभयात् तारयति त्रायते च तस्मादुच्यते तारम्। अथ कस्मादुच्यते शुक्लं, यस्मादुच्चार्यमाण एव क्लन्दते क्लामयति च तस्मादुच्यते शुक्लम्। अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति, सर्वाणि चाङ्गान्यभिमृशति, तस्मादुच्यते सूक्ष्मम्। अथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एव व्यक्ते महति तमसि द्योतयति तस्मादुच्यते वैद्युतम्। अथ कस्मादुच्यते परम्ब्रह्म यस्मात् परमपरं परायणञ्च बृहद्बृहत्या बृंहयति तस्मादुच्यते परम्ब्रह्म। अथ कस्मादुच्यते एकः यः

सर्वान् प्राणान् सम्भक्ष्य सम्भक्षणेनाजः संसृजति विसृजति तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणाः प्रत्यञ्च उदञ्चः प्राञ्चोऽभिव्रजन्त्येके तेषां सर्वेषामिह सङ्गतिः । साकं स एको भूतश्चरति प्रजानां तस्मादुच्यते एकः । अथ कस्मादुच्यते रुद्रः यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यते रुद्रः । अथ कस्मादुच्यते ईशानः यः सर्वान् देवानीशते ईशानीभिर्जननीभिश्च शक्तिभिः । अभित्वा शूरणो नुमो दुग्धा इव धेनवः । ईशानमस्य जगतः स्वदृशमीशानमिन्द्रतस्थुष(१) इति तस्मादुच्यते ईशानः । अथ कस्मादुच्यते भगवान् महेश्वरः यस्माद्भक्ताज्ज्ञानेन भजत्यनुगृह्णाति च वाचं संसृजति विसृजति च सर्वान् भावान् परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान् महेश्वरः, तदेतद्रुद्रचरितम् ॥ ४ ॥

एको ह देवः प्रदिशोनुसर्वाः पूर्व्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ॥
एको रुद्रो न द्वितीयाय तस्मै य इमाँल्लोकानीशत ईशानीभिः ।
प्रत्यङ्जनास्तिष्ठतिसञ्चुकोचान्तकालेसंसृज्यविश्वाभुवनानिगोप्ता॥

---

१ क, ईशानमस्य जगतः स्वदृश ईशान मिन्द्रतस्थुषः ।

यो योनिं योनिमधितिष्ठत्येको येनेदं सर्वं विचरति सर्वम् ।
तमीशानं वरदं देवमीड्यं(१) निचाय्येमां(२) शान्तिमत्यन्तमेति ॥
क्षमां छित्वा हेतुजालस्य मूलं बुद्ध्या सञ्चितं(३) स्थापयित्वा तु रुद्रे ।
रुद्रमेकत्वमाहुः ॥ शाश्वतं वै पुराणमिषमूर्जेण पशवो
ऽनुनामयन्तं मृत्युपाशान् । तदेतेनात्मन्नेतेनार्धचतुर्थेन (४)
मात्रेण शान्तिं संसृजति पशुपाशविमोक्षणम् या सा प्रथमा
मात्रा ब्रह्मदेवत्या(५) रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्-
ब्रह्मपदम् । या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन
यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम् । या सा तृतीया मात्रा
ईशानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं स गच्छेदैशानं
पदम् । या सार्धचतुर्थी मात्रा सर्वदेवत्याऽव्यक्तीभूता खं
विचरति शुद्धा स्फटिकसन्निभा वर्णेन यस्तां ध्यायते नित्यं स
गच्छेत्पदमनामयम्(६) । तदेतदुपासीत मुनयो वाग्वदन्ति न
तस्य ग्रहणमयं पन्था विहित उत्तरेण येन देवा यान्ति येन
पितरो येन ऋषयः परमपरं परायणञ्चेति ॥

---

१ क, देवमाद्य । २ क, ख, ग, नचाय्येमां ।

३ क, सिञ्चतं । ख, सिञ्चति ।

४ ग, तदेतेनात्मन्नेतनार्द्धचतस्रमात्रेण । किन्तु पाठद्वयमपि दुर्बोधम् ।

५ ब्रह्मदैवत्या । ६ ख, ग, पदमनाकम ।

बालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातरूपं वरेण्यम् ।
तमात्मस्थं ये तु पश्यन्ति धीरास्तेषां शान्तिर्भवति नेतरेषाम् ॥
यस्मिन् क्रोधंयाञ्च तृष्णांक्षमाञ्चाक्षमांहित्वा हेतुजालस्यमूलम् ।
बुद्ध्या सञ्चितं स्थापयित्वा तु रुद्रे रुद्रमेकत्वमाहुः ॥

रुद्रो हि शाश्वतेन वै पुराणेनेषमूर्जेण तपसा नियन्ताग्निरिति भस्म वायरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योममिति भस्म सर्वं ह वा इदं भस्म मन एतानि चक्षूंषि यस्माद्व्रतमिदं पाशुपतं यद्भस्म नाङ्गानि संस्पृशेत् तस्माद्ब्रह्म तदेतत् पाशुपतं पशुपाशविमोक्षणाय ॥ ५ ॥

योऽग्नौ रुद्रो योऽप्स्वन्तर्य ओषधीर्वीरुध आविवेश । य इमा विश्वा भुवनानि चक्लृपे(१)तस्मै रुद्राय नमोऽस्त्वग्नये । यो रुद्रोऽग्नौ यो रुद्रोऽप्स्वन्तर्यो रुद्र ओषधीवीरुध आविवेश । यो रुद्र इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय नमोनमः । यो रुद्रोऽप्सु यो रुद्र ओषधिषु यो रुद्रो वनस्पतिषु । येन रुद्रेण जगदूर्ध्वं धारितं पृथिवी द्विधा त्रिधा धर्ता धारिता नागा येऽन्तरिक्षे तस्मै रुद्राय वै नमोनमः ।

---

१ ख, चाक्लृपे । ग, चानुक्लृप्ते ।

मूर्धानमस्य संसेव्याप्यथर्वा हृदयञ्च यत्।
मस्तिष्कादूर्द्ध्वं प्रेरयत्यवमानोऽधिशीर्षतः॥
तद्वा अथर्वणः शिरो देवकोशः समुज्झितः।
तत् प्राणोऽभिरक्षति शिरोऽन्न मथो मनः॥
नचदिवो(१)देवजनेनगुप्ता(२)नचान्तरिक्षाणिनचभूमइमाः(३)
यस्मिन्निदं सर्वमोतप्रोतं तस्मादन्यं न परं किञ्च नास्ति॥
न तस्मात्पूर्व्वं न परं तदस्ति न भूतं नोत भव्यं यदासीत्।
सहस्रपादेकमूर्द्ध्ना व्याप्तं स एवेदमावरीवर्त्ति भूतम्॥
अक्षरात् सञ्जायते कालः कालाद्व्यापक उच्यते॥

व्यापको हि भगवान् रुद्रो भोगायमानो यदा शेते रुद्रस्तदा संहार्य्यते प्रजाः। उच्छ्वसिते तमो भवति, तमस आपोऽप्स्वङ्गुल्या मथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति, फेनादण्डं भवत्यण्डाद्ब्रह्मा भवति, ब्रह्मणो वायुः, वायोरोङ्कारः, ओङ्कारात् सावित्री, सावित्र्या गायत्री, गायत्र्या लोका भवन्ति। अर्च्चयन्ति तपः सत्यं मधु क्षरन्ति यद्ध्रुवम्। एतद्धि परमं तपः। आपोज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरों नम इति॥ ६॥

---

१ क, ख, देवो।  २ क, ग, गोप्ता।  ३ ख, ग, नचभूव इमाः।

य इदमथर्व्वशिरो ब्राह्मणोऽधीते, अश्रोत्रियः श्रोत्रियो भवति, अनुपनीत उपनीतो भवति, सोऽग्निपूतो भवति, स वायुपूतो भवति, स सूर्य्यपूतो भवति, स सोमपूतो भवति, स सत्यपूतो भवति, स सर्व्वैर्देवैर्ज्ञातो भवति, स सर्व्ववेदैरनुध्यातो भवति, स सर्व्वेषु तीर्थेषु स्नातो भवति, तेन सर्व्वैः क्रतुभिरिष्टं भवति, गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति, इतिहास-पुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति। प्रणवानामयुतं जप्तं भवति। स चक्षुषः पङ्क्तिं पुनाति। आ सप्तमात् पुरुषयुगान् पुनातीत्याह भगवानथर्व्वशिरः, सकृज्जप्त्वैव शुचिः स पूतः कर्म्मण्यो भवति। द्वितीयं जप्त्वा गणाधिपत्यमवाप्नोति। तृतीयं जप्त्वैवमेवानुप्रविशत्योंं सत्यमों सत्यमों सत्यम्। इत्यथर्व्ववेदे शिरउपनिषत् समाप्ता॥ १॥

——००:०:००——

ओं नमो गणेशाय।

# गर्भोपनिषत्।

ओं पञ्चात्मकं पञ्चसु वर्त्तमानं षड़ाश्रयं षड़्गुणयोगयुक्तम।
तं सप्तधातुं त्रिमलं द्वियोनिं चतुर्व्विधाहारमयं शरीरम्॥

पञ्चात्मकमिति कस्मात् पृथिव्यापस्तेजो वायुराकाश-मित्यस्मिन् पञ्चात्मके शरीरे का पृथिवी, का आपः, किं तेजः, को वायुः किमाकाशम्। तत्र पञ्चात्मके शरीरे यत्कठिनं सा पृथिवी, यद्द्रवं ता आपः, यदुष्णं तत्तेजः, यत्सञ्चरति स वायुः, यच्छुषिरं तदाकाशम्। तत्र पृथिवी धारणे, आपः पिण्डीकरणे, तेजः प्रकाशने, वायुर्व्यूहने, आकाशमवकाश-प्रदाने। पृथक्(१) श्रोत्रे शब्दोपलब्धौ, त्वक् स्पर्शे, चक्षुषी रूपे, जिह्वा रसने, नासिका घ्राणे, उपस्थ आनन्दने, अपान-मुत्सर्गे, बुद्ध्या बुध्यति, मनसा सङ्कल्पयति, वाचा वदति। षड़ा-श्रयमिति कस्मात्, मधुराम्ल-लवण-तिक्त-कटु-कषाय-रसान् विन्दतीति, षड़्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादाश्चेतीष्टानिष्ट-शब्दसंज्ञाः प्रणिधानाद्दशविधा भवन्ति॥ १॥

---

१ ख, पृथुसु।

सप्तधातुकमिति कस्मात्, शुक्लो रक्तः कृष्णो धूम्रः पीतः कपिलः पाण्डुर इति। यथा देवदत्तस्य द्रव्यादिविषया जायन्ते। परस्परं सौम्यगुणत्वात् षड्विधो रसः,रसाच्छोणितं, शोणितान्मांसं, मांसान्मेदो, मेदसः स्नायवः, स्नायुभ्योऽस्थीनि, अस्थिभ्यो मज्जा,मज्जातः शुक्रं, शुक्रशोणितसंयोगादावर्त्तते गर्भो हृदि व्यवस्थां नयति, हृदयेऽन्तराग्निः, अग्निस्थाने पित्तं, पित्तस्थाने वायुः, वायुतो हृदयं, प्राजापत्यात् क्रमात् ॥ २ ॥

ऋतुकाले सम्प्रयोगादेकरात्रोषितं कललं भवति, सप्तरात्रोषितं बुद्बुदम्,अर्द्धमासाभ्यन्तरे पिण्ड, मासाभ्यन्तरे कठिनं, मासद्वयेन शिरः, मासत्रयेण पादप्रदेशः, चतुर्थे गुल्फ-जठर-कटि-प्रदेशाः, पञ्चमे पृष्ठवंशः,षष्ठे मुख-नासिकाक्षि-श्रोत्राणि, सप्तमे जीवेन संयुक्तः, अष्टमे सर्व्वलक्षणसम्पूर्णः। पितूरेतोऽतिरेकात्(१) पुरुषः, मातूरेतोऽतिरेकात् स्त्री, उभयोर्वीजतुल्यत्वान्नपुंसकं व्याकुलितमनसोऽन्धाः खञ्जाः कुब्जा वामना भवन्ति। अन्योऽन्यवायु-परिपीड़ित-शुक्रद्वैध्याद्द्विधा तनू

१ घ, रेतोऽधिकात।

स्याद्युग्माः प्रजायन्ते(१)। पञ्चात्मकः समर्थः पञ्चात्मिका चेतसा बुद्धिर्गन्धरसादि-ज्ञानाक्षराक्षर मोङ्कारं(२) चिन्तयतीति तदेकाक्षरं ज्ञात्वाष्टौ प्रकृतयः षोड़श विकाराः शरीरे तस्यैव देहिनः। अथ मात्राशित-पीत-नाड़ीसूत्रगतेन(३) प्राण आप्यायते। अथ नवमे मासि सर्वलक्षणज्ञानसम्पूर्णो भवति, पूर्ब्बजातिं स्मरति, शुभाशुभञ्च कर्म्म विन्दति॥ ३॥

पूर्ब्बयोनि-सहस्राणि दृष्ट्वा चैव ततो मया।
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः।
जातश्चैव मृतश्चैव जन्म चैव पुनः पुनः॥
यन्मया परिजनस्यार्थे कृतं कर्म्म शुभाशुभम्।
एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः॥
अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम्।
यदि योन्याः प्रमुच्येऽहं तत् प्रपद्ये महेश्वरम्॥
अशुभ-क्षयकर्त्तारं फलमुक्ति-प्रदायकम्।

---

१ घ, अन्योऽन्यवायुपरिपीड़ितानां शुक्रद्वैधे स्त्रियो योन्यां युग्माःप्रजायन्ते।

२ क,ख,ग, ओङ्कारमित्यत्र मोचं। घ,पञ्चात्मकपञ्चात्मकचेतसा अभिनन्दना सम्यग्-ज्ञानाद्ध्यानादक्षरमोङ्कारं।

३ नाड़ीसूत्रगतेन इत्यनन्तरं 'रसेन' इति पाठो भवितव्यः स च लेखकप्रमादात् पतित इति विवेच्यम्।

यदि योन्याः प्रमुच्येऽहं तत् प्रपद्ये नारायणम् ॥
अशुभ-क्षयकर्त्तारं फलमुक्ति-प्रदायकम् ।
यदि योन्याः प्रमुच्येऽहं तत् साङ्ख्यं योगमभ्यसे ॥
अशुभ-क्षयकर्त्तारं फलमुक्ति-प्रदायकम् ।
यदि योन्याः प्रमुच्यामि ध्याये ब्रह्मसनातनम् ॥

अथ योनिद्वारं सम्प्राप्तो यन्त्रेणापीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृष्टस्तदा न स्मरति जन्म-मरणानि, न च कर्म्म शुभाशुभं विन्दति ॥ ४ ॥

शरीरमिति कस्मात्, अग्नयो ह्यत्र श्रियन्ते ज्ञानाग्निर्दर्शनाग्निः कोष्ठाग्निरिति,तत्र कोष्ठाग्निर्नामाशित-पीत-लेह्य-चोष्यं पचति। दर्शनाग्नी रूपाणां दर्शनं करोति। ज्ञानाग्निः शुभाशुभञ्च कर्म्म विन्दति। त्रीणि स्थानानि भवन्ति, मुखे आहवनीय,उदरे गार्हपत्यो,हृदि दक्षिणाग्निः, आत्मा यजमानो मनो ब्रह्मा लोभादयः पशवो धृतिर्दीक्षा सन्तोषश्च बुद्धीन्द्रियाणि यज्ञपात्राणि कर्म्मेन्द्रियाणि हवींषि शिरः कपालं केशा दर्भाः मुखमन्तर्वेदिः चतुष्कपालं शिरः षोड़श पार्श्वदन्तपटलानि सप्तोत्तरं मर्म्मशतं साशीतिकं सन्धिशतं सनवकं स्नायुशतं सप्त शिराशतानि पञ्च मज्जाशतानि अस्थीनि च ह वै त्रीणि

शतानि षष्टिः सार्द्धचतस्रो रोमाणि कोट्यो हृदयं पलान्यष्टौ द्वादश पला जिह्वा पित्तप्रस्थं कफस्याढ़कं शुक्रकुड़वं मेदः प्रस्थौ द्वावनियतं मूत्रपुरीषमाहारपरिमाणात्। पैप्पलादं मोक्षशास्त्रं पैप्पलादं मोक्षशास्त्रमिति॥

इति गर्भोपनिषत् समाप्ता॥ २॥

---

## नादविन्दूपनिषत्।

ओम् अकारो दक्षिणः पक्ष उकारस्तूत्तरः स्मृतः।
मकारस्तस्य पुच्छं वा अर्धमात्रा शिरस्तथा॥ १॥
पादौ रजस्तमस्तस्य शरीरं सत्वमुच्यते।
धर्मश्च दक्षिणं चक्षुरधर्मश्चोत्तरं स्मृतम्॥ २॥
भूर्लोकः पादयोस्तस्य भुवर्लोकस्तु जानुनोः।
स्वर्लोकः कटिदेशे तु नाभिदेशे महर्जगत्॥ ३॥
जनलोकस्तु हृदये कण्ठदेशे तपस्ततः।
भ्रुवोर्ललाटमध्ये तु सत्यलोको व्यवस्थितः॥ ४॥
सहस्राक्षमिति चात्र मन्त्र एव(१) प्रदर्शितः।
एवमेनं समारूढ़ो हंसं(२) योगविचक्षणः॥ ५॥

---

१ ग, एष। २ ग, हंसो।

न बध्यते कर्मचारी पापकोटि-शतैरपि।
आग्नेयी प्रथमा मात्रा वायव्येषा(१) वशानुगा ॥ ६ ॥
भानुमण्डल-सङ्काशा भवेन्मात्रा तथोत्तरा।
परमा चार्द्धमात्रा च वारुणीं तां विदुर्बुधाः ॥ ७ ॥
कलात्रयानना वापि तासां मात्रा प्रतिष्ठिता।
एष ओङ्कार आख्यातो धारणाभिर्निबोधत ॥ ८ ॥
घोषिणी प्रथमा मात्रा विद्युन्माला(२) तथापरा।
पतङ्गी च तृतीया स्याच्चतुर्थी वायुवेगिनी ॥ ९ ॥
पञ्चमीनामधेया च षष्ठी चैन्द्री विधीयते।
सप्तमी वैष्णवी नाम शाङ्करी च तथाष्टमी ॥ १० ॥
नवमी महती नाम ध्रुवेति दशमी मता।
एकादशी भवेन्मौनी ब्राह्मीति द्वादशी मता ॥ ११ ॥
प्रथमायान्तु मात्रायां यदि प्राणैर्वियुज्यते।
स राजा भारते वर्षे सार्वभौमः प्रजायते ॥ १२ ॥
द्वितीयायां समुत्क्रान्तो भवेद्यक्षो महात्मवान्।
विद्याधरस्तृतीयायां गन्धर्वस्तु चतुर्थिकाम् ॥ १३ ॥
पञ्चम्यामथ मात्रायां यदि प्राणैर्वियुज्यते।

---

१ ख, वायव्येषा।   २ ग, विद्युन्माली।

उषितः सद्धदेवत्वं सोमलोके महीयते ॥ १४ ॥
षष्ठ्यामिन्द्रस्य सायुज्यं सप्तम्यां वैष्णवं पदम् ।
अष्टम्यां व्रजते रुद्रं पशूनाञ्च पतिन्तथा ॥ १५ ॥
नवम्याञ्च महर्लोकं दशम्याञ्च ध्रुवं व्रजेत् ।
एकादश्यां तपोलोकं द्वादश्यां ब्रह्म शाश्वतम् ॥ १६ ॥ २ ॥
ततः परतरं शुद्धं व्यापकं निष्कलं शिवम् ।
सदोदितं परं ब्रह्म ज्योतिषामुदयो यतः ॥ १७ ॥
अतीन्द्रियं गुणातीतं मनो लीनं यदा भवेत् ।
अनौपम्यमभावञ्च योगयुक्तं तदादिशेत् ॥ १८ ॥
तद्भक्तस्तत्समासक्तः(१) शनैर्मुञ्चेत् कलेवरम् ।
सुस्थितो योगचारेण सर्वसङ्ग-विवर्जितः ॥ १९ ॥
ततो विलीनपाशोऽसौ विमलः केवलः प्रभुः ।
तेनैव ब्रह्मभावेन परमानन्दमश्नुते ।
परमानन्दमश्नुते । २० । इति ॥ ३ ॥

इत्यथर्ववेदे नादविन्दूपनिषत् समाप्ता ॥ ३ ॥

१ क, ख, तद्भक्त स्तत्समासक्तः ।

## अथ ब्रह्मविन्दूपनिषत्।

ओं मनो हि द्विविधं प्रोक्तं शुद्धञ्चाशुद्धमेव च।
अशुद्धं कामसङ्कल्पं शुद्धं काम विवर्जितम्॥ १॥
मन एव मनुष्याणां कारणं बन्ध-मोक्षयोः।
बन्धाय विषयासक्तं मुक्त्यै(१) निर्विषयं स्मृतम्॥ २॥
यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते।
तस्मान्निर्विषयं नित्यं मनः कार्य्यं मुमुक्षुणा॥ ३॥
निरस्त-विषयासङ्गं सन्निरुद्धं मनो हृदि।
यदा यात्युन्मनोभावं (२) तदा तत् परमम्पदम्॥ ४॥
तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम्।
एतज्ज्ञानञ्च मोक्षञ्च(३) अतोऽन्यो ग्रन्थविस्तरः॥ ५॥१॥
नैव चिन्त्यं न चाचिन्त्यमचिन्त्यं चिन्त्यमेव च।
पक्षपात-विनिर्मुक्तं ब्रह्म सम्पद्यते तदा॥ ६॥
स्वरेण सन्धयेद्योगमस्वरं भावयेत् परम्।
अस्वरेण हि भावेन (४) भावो नाभाव इष्यते॥ ७॥

---

१ क, ख, ग, मुक्तं। २ घ, यदा यात्यात्मनो भावं। ३ ख, ग, ध्यानञ्च।
४ घ, अस्वरेणानुभावेन।

तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम्।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥ ८ ॥
निर्विकल्पमनन्तञ्च हेतु-दृष्टान्त-वर्जितम्।
अप्रमेयमनाद्यञ्च ज्ञात्वा च परमं शिवम् ॥ ९ ॥
न निरोधो न चोत्पत्तिर्न बन्धो न च शासनम्।
न मुमुक्षा न मुक्तिश्च इत्येषा(१) परमार्थता ॥ १० ॥ २ ॥
एक एवात्मा मन्तव्यो जाग्रत्-स्वप्न-सुषुप्तिषु।
स्थानत्रयाद्व्यतीतस्य पुनर्जन्म न विद्यते ॥ ११ ॥
एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १२ ॥
घटसम्भृत(२) माकाशं लीयमाने घटे यथा।
घटो लीयेत नाकाशं तद्वज्जीवो घटोपमः ॥ १३ ॥
घटवद्विविधाकारं भिद्यमानं पुनः पुनः।
तद्भग्नं न च जानाति(३) स जानाति च नित्यशः ॥ १४ ॥
शब्द-मायावृतो यावत्तावत्तिष्ठति पुष्करे।
भिन्ने तमसि चैकत्वमेकमेवानुपश्यति ॥ १५ ॥ ३ ॥
शब्दाक्षरं परं ब्रह्म यस्मिन् क्षीणे यदक्षरम्।

१ क, ख, ग, न मुक्तिश्चेदित्येषा। २ ख, घटसम्भूत। ३ घ, तद्भेदेन विजानाति।

तद्विद्वानक्षरं ध्यायेद्यदीच्छेच्छान्तिमात्मनः ॥ १६ ॥
द्वे विद्ये वेदितव्ये तु शब्द-ब्रह्मपरञ्च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १७ ॥
ग्रन्थमभ्यस्य मेधावी ज्ञान-विज्ञान-तत्त्वतः(१) ।
पलालमिव धान्यार्थी त्यजेद् ग्रन्थमशेषतः ॥ १८ ॥
गवामनेकवर्णानां क्षीरस्याप्येकवर्णता ।
क्षीरवत्पश्यते ज्ञानं लिङ्गिनस्तु गवां यथा ॥ १९ ॥
घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् ।
सततं मन्थयितव्यं मनसा मन्थानभूतेन ॥ २० ॥
ज्ञाननेत्रं समादाय(२) चरेद्वह्निमतःपरम् ।
निष्कलं निर्मलं(३) शान्तं तद्ब्रह्माहमिति स्मृतम् ॥ २१ ॥
सर्वभूताधिवासञ्च यद्भूतेषु वसत्यधि(४) ।
सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेव
तदस्म्यहं वासुदेव ॥ २२ ॥ इति ॥ ४ ॥

इत्यथर्ववेदे ब्रह्मविन्दूपनिषत् समाप्ता ॥ ४ ॥

---

१ घ, ज्ञानविज्ञानतत्परः । २ घ, समाधाय । ३ घ, निष्क्रियं ।
४ घ, वसत्यपि ।

## अथ अमृतविन्दूपनिषत्।

ओं शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः।
परमं ब्रह्मविद्याया उल्काबान्नान्यथोत्सृजेत् ॥ १ ॥
ओङ्कारं रथमारुह्य विष्णुं कृत्वा तु सारथिम्।
ब्रह्मलोक-पदान्वेषी रुद्राराधन-तत्परः ॥ २ ॥
तावद्रथेन गन्तव्यं यावद्रथ-पथि स्थितः।
छित्त्वा रथपथ-स्थानं रथमुत्सृज्य गच्छति ॥ ३ ॥
मात्रा लिङ्गपदं त्यक्त्वा शब्दव्यञ्जनवर्जिता।
अस्वरेण मकारेण पदं सूक्ष्मञ्च गच्छति ॥ ४ ॥
शब्दादिविषयाः पञ्च मनश्चैवातिचञ्चलम्।
चिन्तयेदात्मनो रश्मीन् प्रत्याहारः स उच्यते ॥ ५ ॥ १ ॥
प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा।
तर्कश्चैव समाधिश्च षड़ङ्गो योग उच्यते ॥ ६ ॥
यथा पर्वतधातूनां दह्यन्ते धमनान्मलाः।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥ ७ ॥
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम्।
किल्बिषञ्च क्षयं नीत्वा रुचिरञ्चैव चिन्तयेत् ॥ ८ ॥

रुचिरे रेचकञ्चैव वायोराकर्षणन्तथा।
प्राणायामास्त्रयः प्रोक्ता रेचक-पूरक-कुम्भकाः ॥ ९ ॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदायत-प्राणः प्राणायामः स उच्यते ॥ १० ॥ २ ॥
उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम्(१)।
शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥ ११ ॥
न चोच्छ्वसेन्नानुच्छ्वसेन्नैव गात्राणि चालयेत्।
एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ॥ १२ ॥
वक्त्रेणोत्पलनालेन वायुं कृत्वा निराश्रयम्।
एवं वायुर्ग्रहीतव्यः कुम्भकस्येति लक्षणम् ॥ १३ ॥
अन्धवत् पश्य रूपाणि शृणु शब्दमकर्णवत्।
काष्ठवत्पश्यते(२) देहं प्रशान्तस्येति लक्षणम् ॥ १४ ॥ ३ ॥
मनः सङ्कल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान्।
धारयित्वा तथात्मानं धारणा परिकीर्त्तिता ॥ १५ ॥
आगमस्याविरोधेन ऊहनं तर्क उच्यते।
यं लब्ध्वाप्यवमन्येत समाधिः परिकीर्त्तितः ॥ १६ ॥
भूमिभागे समे रम्ये सर्वदोष-विवर्जिते।

---

१ ख, निरात्मनम्। २ क, ग, पश्यतो।

कृत्वा मनोमयीं रक्षां जप्त्वा चैवाथ मण्डलम् ॥ १७ ॥
पद्मकं स्वस्तिकं वापि भद्रासनमथापि वा ।
बद्ध्वा योगासनं सम्यगुत्तराभिमुखः स्थितः ॥ १८ ॥
नासिका-पुटमङ्गुल्या पिधायैकेन मारुतम् ।
आकृष्य धारयेदग्निं शब्दमेवाभिचिन्तयेत् ॥ १९ ॥ ४ ॥
ओमित्येकाक्षरं ब्रह्म ओमित्येकेन रेचयेत् ।
दिव्यमन्त्रेण बहुशः कुर्यादात्ममल-च्युतिम् ॥ २० ॥
पश्चाद्ध्यायेत पूर्व्वोक्तं क्रमान्मन्त्रं विनिर्द्दिशेत् (१) ।
स्थूलातिस्थूल-मात्रायां नातिमूर्धमतिक्रमः ॥ २१ ॥
तिर्यगूर्द्ध्वमधो दृष्टिं विनिधार्य महामतिः ।
स्थिरस्थायी विनिष्कम्पस्तदा योगं समभ्यसेत् ॥ २२ ॥
तालमात्रा तथा योगो धारणा योजनन्तथा ।
द्वादशमात्रो योगस्तु कालतो नियतः स्मृतः ॥ २३ ॥
अघोषमव्यञ्जनमस्वरञ्च अकण्ठताल्वोष्ठ मनासिकञ्च ।
अरेफजात मुभयोष्ठवर्जितं यदक्षरं न क्षरते कदाचित् ॥ २४ ॥५॥
येनासौ पश्यते मार्गं प्राणस्तेन हि गच्छति ।
अतः समभ्यसेन्नित्यं सन्मार्ग-गमनाय वै ॥ २५ ॥
हृद्द्वारं वायुद्वारञ्च ऊर्द्ध्वद्वारमतः परम् ।

मोक्षद्वारबिलञ्चैव शुषिरं मण्डलं विदुः ॥ २६ ॥
भयं क्रोधमथालस्यमतिस्वप्नातिजागरम्।
अत्याहारमनाहारं नित्यं योगी विवर्जयेत् ॥ २७ ॥
अनेन विधिना सम्यङ्नित्यमभ्यस्यतः क्रमात्।
स्वयमुत्पद्यते ज्ञानं त्रिभिर्मासैर्न संशयः ॥ २८ ॥
चतुर्भिः पश्यते देवान् पञ्चभिस्तुल्यविक्रमः।
इच्छयाप्नोति कैवल्यं षष्ठे मासि न संशयः ॥ २९ ॥ ६
पार्थिवः पञ्चमात्राणि चतुर्मात्राणि वारुणः।
आग्नेयस्तु त्रिमात्राणि द्विमात्रो मारुतस्तथा ॥ ३० ॥
एकमात्रस्तथाकाशो ह्यर्धमात्रञ्च चिन्तयेत्।
सिद्धिं कृत्वा तु मनसा चिन्तयेदात्मनात्मनि ॥ ३१ ॥
त्रिंशत्पर्व्वाङ्गुलः प्राणो यत्र प्राणः प्रतिष्ठितः।
एष प्राण इति ख्यातो वाह्यप्राणः सगोचरः ॥ ३२ ॥
अशीति-षट्शतञ्चैव सहस्राणि त्रयोदश।
लक्षश्चैकोऽपि निश्वासः अहोरात्र-प्रमाणतः ॥ ३३ ॥
प्राण आद्यो हृदि स्थाने अपानस्तु पुनर्गुदे।
समानो नाभिदेशे तु उदानः कण्ठमाश्रितः ॥ ३४ ॥
व्यानः सर्वेषु चाङ्गेषु सदा व्यावृत्य तिष्ठति।

अथ वर्णास्तु पञ्चानां प्राणादीनामनुक्रमात् ॥ ३५ ॥ ७ ॥

रक्तवर्ण-मणिप्रख्यः प्राणो वायुः प्रकीर्त्तितः।

अपानस्तस्य मध्ये तु इन्द्रगोपक-सन्निभः ॥ ३६ ॥

समानस्तस्य मध्ये तु गोक्षीर-स्फटिक-प्रभः।

आपाण्डुर उदानस्तु व्यानोऽप्यर्चिसमप्रभः (१) ॥ ३७ ॥

यस्यैष मण्डलं भित्त्वा मारुतो याति मूर्धनि।

यत्र यत्र म्रियेद्वापि न स भूयोऽभिजायते ॥

न स भूयोऽभिजायते ॥ ३८ ॥

इत्यथर्ववेदे अमृतबिन्दूपनिषत् समाप्ता ॥ ५ ॥

---

१ ग, व्यानोह्यर्चिसमप्रभः।

# ध्यानविन्दूपनिषत्।

—o0o—

ओं योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया।
तच्छ्रुत्वा च पठित्वा च सर्वपापैः प्रमुच्यते॥ १॥
विष्णुर्नाम महायोगी महामायो (१) महातपाः।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः॥ २॥
यदि शैलसमं पापं विस्तीर्णं योजनान् बहून्।
भिद्यते ध्यानयोगेन नान्यो भेदः कदाचन॥ ३॥
वीजाक्षरात्परं विन्दुं नादं विन्दोः परे स्थितम्।
सुशब्दश्चाक्षरे क्षीणे निःशब्दं परमं पदम्॥ ४॥
अनाहतश्च यच्छब्दं तस्य शब्दस्य यत्परम्।
तत्परं चिन्तयेद्यस्तु स योगी छिन्नसंशयः॥ ५॥
वालाग्रशत-साहस्रं तस्य भागस्य भागशः।
तस्य भागस्य भागार्द्धं तज्ज्ञेयञ्च निरञ्जनम्॥ ६॥
पुष्पमध्ये यथा गन्धं पयोमध्ये यथा घृतम्।
तिलमध्ये यथा तैलं पाषाणेष्विव काञ्चनम्॥ ७॥
एवं सर्वाणि भूतानि मणिसूत्रमिवात्मनि।

---

१ ख, ग, महाकायो।

स्थिरबुद्धिरसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः॥ ८॥
तिलानान्तु यथा तैलं पुष्पे गन्धमिवार्पितम्।
पुरुषस्य शरीरे तु स बाह्याभ्यन्तरे स्थितः॥ ९॥
वृक्षन्तु सकलं विद्याच्छाया तस्यैव निष्कला।
सकले निष्कले भावे सर्वत्रात्मा व्यवस्थितः॥ १०॥
अतसी-पुष्प-सङ्काशं नाभिस्थाने प्रतिष्ठितम्।
चतुर्भुजं महावीरं पूरकेण विचिन्तयेत्॥ ११॥
कुम्भकेन हृदि स्थाने चिन्तयेत् कमलासनम्।
ब्रह्माणं रक्तगौराङ्गं चतुर्वक्त्रं पितामहम्॥ १२॥
रेचकेन तु विद्याच्च (१) ललाटस्थं त्रिलोचनम्।
शुद्धस्फटिक-सङ्काशं निष्कलं पापनाशनम्॥ १३॥ १॥
अष्टपत्रमधःपुष्पमूर्द्ध्वनालमधोमुखम्।
कदलीपुष्प-सङ्काशं सर्वदेवमयात्मकम्॥ १४॥
शताङ्गं शतपत्राढ्यं विप्रकीर्णाब्ज-कर्णिकम्।
तत्रार्क-चन्द्र-वह्नीनामुपर्युपरि चिन्तयेत्॥ १५॥
पद्मस्योत्थापनं कृत्वा वोढुं चन्द्राग्नि-सूर्ययोः।
तस्याङ्कबीजमाहृत्य आत्मा सञ्चरते ध्रुवम्॥ १६॥

---

१ ख, ग, विन्द्याच।

त्रिस्थानञ्च त्रिमार्गञ्च त्रिब्रह्म च त्रिरक्षरम् ।
त्रिमात्रञ्चार्द्धमात्रञ्च यस्तं वेद स वेदवित् ॥ १७ ॥
तैलधारमिवाच्छिन्नं दीर्घघण्टा-निनादवत् (१) ।
अवाग्जं प्रणवस्याग्रं यस्तं वेद स वेदवित् ॥ १८ ॥
प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ १९ ॥
स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् ।
ध्यान-निर्मथनाभ्यासादेवं पश्येन्निगूढवत् ॥ २० ॥
यथैवोत्पलनालेन तोयमाकर्षयेत् पुनः ।
तथैवोत्कर्षयेद्वायुं योगी योगपदे स्थितः ॥ २१ ॥
अर्धमात्रां रज्जुं कृत्वा कूपभूतन्तु पङ्कजम् ।
कर्षयेन्नालमार्गेण भ्रुवोर्मध्ये नयेल्लयम् ॥ २२ ॥
भ्रुवोर्मध्ये ललाटन्तु नासिकायान्तु मूलतः* ।
अमृतस्थानं विजानीयाद्विश्वस्यायतनं महत् ॥
विश्वस्यायतनं महदिति ॥ २३ ॥

इत्यथर्ववेदे ध्यानविन्दूपनिषत् समाप्ता । ६ ॥

---

१ ख, तैलधारमिवाच्छन्नमूर्द्धं घण्टानुनासिकम् ।

* "भ्रुवोर्मध्ये ललाटन्तु नासिकायान्तु मूलतः" इति पाठोयुक्त इति प्राज्ञतमैर्विज्ञेयम् ।

# तेजोविन्दूपनिषत्।

—o0o—

ओं तेजोविन्दुः परं ध्यानं विश्वातीतं हृदि स्थितम्।
आणवं शाम्भवं शाक्तं(१) स्थूलं सूक्ष्मं परञ्च यत्॥ १॥
दुःसाध्यञ्च दुराराध्यं दुष्प्रेक्ष्यञ्च दुराश्रयम्।
दुर्लक्ष्यं दुस्तरं ध्यानं मुनीनाञ्च मनीषिणाम्॥ २॥
जिताहारो जितक्रोधो जितसङ्गो जितेन्द्रियः।
निर्द्वन्द्वो निरहङ्कारो निराशीरपरिग्रहः॥ ३॥
अगम्यागम्यकर्त्ता च गुरुमानार्थ-मानसः।
सुखानि त्रीणि विन्दति त्रिधामा हंस उच्यते(२)॥ ४॥
परं गुह्यमिदं स्थानमव्यक्तं ब्रह्म निराश्रयम्।
व्योमरूपं कलासूक्ष्मं विष्णोस्तत् परमम्पदम्॥ ५॥
त्र्यम्बकं त्रिगुणं स्थानं त्रिधातुं रूपवर्जितम्।
निश्चलं निर्विकल्पञ्च निराधारं निराश्रयम्॥ ६॥
उपाधिरहितं स्थानं वाङ्मनोऽतीतगोचरम्।
स्वभाव-भावनाग्राह्यं सङ्घातैकपदोज्झितम्॥ ७॥ १॥
आनन्दं नन्दनातीतं दुष्प्रेक्ष्यमजमव्ययम्।

---

१ ख, शान्तं।   २ क, ख, त्रिधामं हंसमुच्यते।

चित्तवृत्ति-विनिर्मुक्तं शाश्वतं ध्रुवमच्युतम् ॥ ८ ॥
तद्ब्रह्माणं तदध्यात्मं तन्निष्ठा तत्परायणम्।
अचित्तचित्तमात्मानं तद्व्योम परम स्थितम् ॥ ९ ॥
अशून्ये शून्यभावञ्च शून्यातीतमवस्थितम्।
न ध्याणं न च वा ध्याता न ध्येयो ध्येय एव च ॥ १० ॥
सर्वञ्च परमं शून्यं न परं परमात् परम्।
अचिन्त्यमप्रबुद्धञ्च न च सत्यं न संविदुः ॥ ११ ॥
मुनीनां तत्त्वयुक्तान्तु न देवा न परं विदुः।
लोभं मोहं भयं दर्पं कामं क्रोधञ्च किल्विषम् ॥ १२ ॥
शीतोष्णं क्षुत्पिपासञ्च सङ्कल्पञ्च विकल्पकम्।
न ब्रह्म कुलदर्पञ्च न मुक्तिग्रन्थसञ्चयम् (१) ॥ १३ ॥
न भयं सुख-दुःखञ्च तथा मानापमानयोः।
एतद्भाव-विनिर्मुक्तं तद्ग्राह्यं ब्रह्म तत्परम्।
तद्ग्राह्यं ब्रह्म तत्परमिति ॥ १४ ॥ २ ॥

इत्यथर्ववेदे तेजोविन्दूपनिषत् समाप्ता। ७ ॥

---

१ क, ख, न ब्रह्मकुलपर्वञ्च न मुक्तं ग्रन्थसञ्चयम्।

# योगशिखोपनिषत् ।

—o0o—

ओं योगशिखां (१) प्रवक्ष्यामि सर्वज्ञानेषु चोत्तमाम् ।
यदा तु ध्यायते मन्त्रं गात्रकम्पोऽभिजायते ॥ १ ॥
आसनं पद्मकं बद्धा यच्चान्यदपि रोचते ।
कुर्यान्नासाग्र-दृष्टिञ्च हस्तौ पादौ च संयुतौ ॥ २ ॥
मनः सर्वत्र संयम्य ओङ्कारं तत्र चिन्तयेत् ।
ध्यायेत सततं प्राज्ञो हृत्कृत्वा परमेष्ठिनम् ॥ ३ ॥
एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चदैवते ।
ईदृशे तु शरीरे वा मतिमानुपलक्षयेत् ॥ ४ ॥
आदित्यमण्डलं दिव्यं रश्मिज्वाला-समाकुलम् ।
तस्य मध्यगतो वह्निः प्रज्वलेद्दीपवर्तिवत् ॥ ५ ॥ १ ॥
दीपशिखायां (२) या मात्रा सा मात्रा परमेष्ठिनः ।
भिन्दन्ति योगिनः सूर्यं योगाभ्यासेन वै पुनः ॥ ६ ॥
द्वितीयं सुषुम्नाद्वारं परिशुद्धं विसर्पति ।
कपाल-सम्पुटं भित्त्वा ततः पश्यति तत्परम् ॥ ७ ॥
अथ नाध्याययेज्जन्तुरालस्याच्चप्रमादतः ।

---

१ ख, योगशिखां । २ ख, दीपशिखाया ।

यदि त्रिकालमावर्त्तेत् स गच्छेत् परमं पदम् ॥ ८ ॥

पुण्यमेतत् समासाद्य सङ्क्षेपात् कथितं मया ।

लब्धयोगेन बोद्धव्यं प्रसन्नं परमेष्टिनम् ॥ ९ ॥

जन्मान्तर-सहस्रेषु यदा नाश्नाति किल्विषम् ।

तदा पश्यन्ति योगेन संसारच्छेदनं परम् ॥

संसारच्छेदनं परमिति ॥ १० ॥ २ ॥

इत्यथर्ववेदे योगशिखोपनिषत् समाप्ता । ८ ॥

---

# योगतत्त्वोपनिषत् ।

---

ओं योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया ।
तच्छ्रुत्वा च पठित्वा च सर्वपापैः प्रमुच्यते ॥ १ ॥
विष्णुर्नाम महायोगी महामायो महातपाः ।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः ॥ २ ॥
यः स्तन्यं पूर्व्वं पीत्वापि निष्पीड्य च पयोधरान् ।
यस्मिन् जाते भगे पूर्व्वं तस्मिन्नेव भगे रमेत् ॥ ३ ॥
या माता सा पुनर्भार्य्या या भार्य्या जननी हि सा ।
यः पिता स पुनः पुत्रो यः पुत्रः स पुनः पिता ॥ ४ ॥
एवं संसारचक्रेण कूपचक्र-घटा इव (१) ।
भ्रमन्तो यानि जन्मानि श्रुत्वा लोकान् समश्नुते ॥ ५ ॥
त्रयो लोकास्त्रयो वेदास्त्रयः सन्ध्यास्त्रयः सुराः ।
त्रयोऽग्नयो गुणास्त्रीणि स्थिताः सर्वे त्रयाक्षरे ॥ ६ ॥
त्रयाणामक्षरे प्रान्ते योऽधीतेऽप्यर्धमक्षरम् ।
तेन सर्वमिदं प्राप्तं लब्धं तत्परमं पदम् ॥ ७ ॥
पुष्पमध्ये यथा गन्धं पयोमध्येऽस्ति सर्पिवत् ।
तिलमध्ये यथा तैलं पाषाणेष्विव काञ्चनम् ॥ ८ ॥

हृदि स्थाने स्थितं पद्मं तच्च पद्ममधोमुखम्।
ऊर्द्ध्वनालमधोविन्दं तस्य मध्ये स्थितं मनः ॥ ९ ॥
अकारेणोचितं पद्ममुकारेणैव भिद्यते।
मकारे लभते नादमर्धमात्रा तु निश्चला ॥ १० ॥
शुद्धस्फटिक-सङ्काशं किञ्चित्सूर्य-मरीचिवत्।
लभते योगयुक्तात्मा पुरुषोत्तम-तत्परः ॥ ११ ॥
कूर्मवत् पाणिपादाभ्यां शिरस्यात्मनि धारयेत्।
एवं सर्वेषु द्वारेषु वायुः पूरत पूरत ॥ १२ ॥
निषिद्धे तु नवद्वारे उच्छ्वसन्निश्वसंस्तथा।
घटमध्ये यथा दीपं निर्वाणं कुम्भकं विदुः ॥ १३ ॥
पद्मपत्रमिवाच्छिन्न(२)मूर्द्धवायु-विमोचणे।
भ्रुवोर्ललाटमध्यस्थं तज्ज्ञेयञ्च निरञ्जनम् ॥ १४ ॥
निषिद्धे तु न निर्वाते निर्जने निरुपद्रवे।
निश्चितञ्चात्मभूतानामरिष्टं योगसेवया।
अरिष्टं योगसेवया इति ॥ १५ ॥

इत्यथर्ववेदे योगतत्त्वोपनिषत् समाप्ता। ९ ॥

१ क, रूपचक्र घटा इव। २ क, घ, पद्मपत्रमिवाच्छन्न।

# सन्न्यासोपनिषत्।

ओं अथाहिताग्निर्म्रियते प्रेतस्य मन्त्रैः संस्कारोपतिष्ठते स्वस्थो वाश्रमपारं गच्छेयमिति। एतान् पितृमेधिकानौषधिसम्भारान् सम्भृत्यारण्ये गत्वा अमावस्यायां प्रातरेवान्तेऽग्नीनुपसमाधाय पितृभ्यः श्राद्धतर्पणं कृत्वा ब्राह्मेष्टिं निर्वपेत्। स सर्व्वज्ञः सर्व्वविद्यस्य ज्ञानमयं तपस्तस्यैषाहुतिर्दिव्या अमृतत्वाय कल्पतामित्येवमत ऊर्द्ध्वं यद्ब्रह्माभ्युदयदिवञ्च लोकमिदममुञ्च सर्वं सर्वमभिजन्युः[1] सर्वश्रियं दधतु सुमनस्यमाना[2] ब्रह्मजज्ञानमिति ब्रह्मणेऽथर्वणे प्रजापतये ऽनुमतये ऽग्नये स्विष्टकृत इति हुत्वा यज्ञयज्ञं[3] गच्छेत्यग्नावरणी हुत्वोच्चित्वखायमिति चतुर्भिरनुवाकैराज्याहुतीर्जुहुयात्। तैरेवोपतिष्ठते। अथाग्नेरग्निमिति च द्वावग्नी समारोपयेत्[4], व्रतवान् स्यादतन्द्रित इति॥ १॥

तत्र श्लोकाः।

ब्रह्मचर्याश्रमे खिन्नो गुरु-शुश्रूषणे रतः[5]।

---

१ क, सर्व्वमभिजित्य। २ क, ख, समनुष्यमाना। ३ ख, यजु

४ ग, घ, चिह्नितपुस्तकद्वये, "अथाग्नेरग्निमिति च द्वावग्नी समारोपयेत्" इत्यत्र "अथो अग्नीन् समारोपयेत्" इति पाठो विद्यते।

५ क, ख, ब्रह्मचर्य्याश्रमे द्विज गुरुशुश्रूषणपरः।

वेदानधीत्यानुज्ञात उच्यते गुरुणाश्रमी ॥ १ ॥
दारमाहृत्य सदृशमग्निमादाय शक्तितः ।
ब्राह्मीमिष्टिं यजेतासामहोरात्राणि(१) निर्वपेत् ॥ २ ॥
संविभज्य सुतानर्थैं(२)ग्राम्यकामान् विसृज्य च ।
चरेत वनचर्य्येण(३) शुचौ देशे परिभ्रमन् ॥ ३ ॥
वायुभक्ष्योऽम्बुभक्ष्यो वा विहितो नोत्तरैः फलैः ।
स्वशरीरे समारोपः पृथिव्यां नाश्रुपातकाः ॥ ४ ॥
सह तेनैव पुरुषः कथं सन्न्यस्त उच्यते ।
सनामधेयस्तु स किं यस्मिन् सन्न्यस्त उच्यते ॥ ५ ॥
तस्मात् फलविशुद्धाङ्गी सन्न्यासं संहतेऽर्चिमान् ।
अग्निवर्णं निष्क्रामति वानप्रस्थं प्रपद्यते ॥ ६ ॥
लोकाङ्क्षार्यया सहितो वनं गच्छति संयतः ।
त्यक्त्वा कामान् सन्न्यस्यति भयं किमनुतिष्ठति(४) ॥ ७ ॥
किं वा दुःखं समुद्दिश्य भोगांस्त्यजति सुस्थितान् ।
गर्भवास-भयाद्भीतः शीतोष्णाभ्यां तथैव च ॥ ८ ॥
गुहां प्रवेष्टुमिच्छामि परं पदमनामयम् ॥ ९ ॥ २ ॥

१ च, महोरात्रेण । २ क, सुतानर्थान् । ३ क, चरेत् सुवर्णवर्णेन । ग, चरेत वनमार्गेण । ४ ग, किमनु पश्यति ।

इति सन्न्यस्याग्निमपुनरावर्तनं मन्दुर्जाया मावहदिति[1]। अथाध्यात्ममन्त्रान् जपन् दीक्षामुपेयात्। काषायवासाः कक्षोपस्थ-लोमयुतः स्यादिति[2]। ऊर्द्ध्वको[3] बाहुर्विमुक्त-मार्गो भवत्यनयैव चेद्भिक्षाशनं दध्यात्, पवित्रं धारयेज्जन्तु-संरक्षणार्थम्। ३॥

तत्र श्लोकाः।

कुण्डिकाञ्चमसं शिक्यं त्रिविष्टपमुपानहौ।
शीतोष्णघातिनीं कन्थां कौपीनाच्छादनन्तथा॥ १॥
पवित्रं स्नानशाटीञ्च उत्तरासङ्गं त्रिदण्डकम्।
अतोऽतिरिक्तं यत्किञ्चित् सर्वं तद्वर्जयेद्यतिः॥ २॥
नदीपुलिन-शायी स्याद्देवागारेषु वाह्यतः।
नात्यर्थं सुख-दुःखाभ्यां शरीरमुपतापयेत्॥ ३॥
स्नानं दानं तथा शौचमद्भिः पूताभिराचरेत्।
स्तूयमानो न तुष्येत निन्दितो न शपेत् परान्॥ ४॥
भिक्षादि वैदलं पात्रं स्नानद्रव्यमुदाहृतम्[4]।

---

१ क, ग, जन्म जायामावहमिति। ख, जन्मना जायामावहमिति।
२ ग, घ, कक्षोपस्थलोमानि वर्जयेदिति। ३ ग, ऊर्द्ध्वगो।
४ क, ख, ग, स्नानद्रव्यमवारितम्।

एतां वृत्तिमुपासीना घातयन्तीन्द्रियाणि ते(१) ॥ ५ ॥

विद्याया मनसि संयोगो मनसाकाशश्चाकाशाद्वायुर्वायोर्ज्योतिर्ज्योतिष आपोऽद्भ्यः पृथिवी पृथिव्या इत्येषां भूतानां ब्रह्म प्रपद्यते, अजरममरमक्षरमव्ययं प्रपद्यते, तदभ्यासेन प्राणापानौ संयम्य ॥

तत्र श्लोकाः ।

वृषणापानयोर्मध्ये पाणी आस्थाय संश्रयेत् ।
सन्दश्य दशन(२) जिह्वां यवमात्रे विनिर्गताम् ॥ १ ॥
माषमात्रां तथा दृष्टिं श्रोत्रे स्थाप्य तथा भुवि ।
श्रवणे नासिके न गन्धाय न त्वचं स्पर्शयेत् ॥ २ ॥
अथ शैवं पदं यत्र तद्ब्रह्म तत् परायणम् ।
तदभ्यासेन लभ्येत पूर्वजन्मार्जितात्मनः ॥ ३ ॥
अथ तैः सम्भूतैर्वायुः संस्थाप्य हृदयं तपः ।
ऊर्द्धं प्रपद्यते देहाद्भित्त्वा मूर्धानमव्ययम् ॥ ४ ॥ ४ ॥

अथायं मूर्धानमस्य देहैषा गतिर्गतिमतां ये प्राप्य परमां गतिं

---

१ क, ग, एतां वृत्तिमुपासीत जितेन्द्रियो जयेत् सदा । ख, दतेन्द्रियो ।
२ क, ख, सन्दश्य दशनैर्जिह्वां ।

भूयस्ते न निवर्त्तन्ते परात् परमवस्थात् परात् परमवस्था-दिति(१)। ५॥

इत्यथर्ववेदे सन्न्यासोपनिषत् समाप्ता॥ १०॥

---

## आरुणेयोपनिषत्।

ओं आरुणिः प्रजापतेर्लोकं जगाम, तं गत्वोवाच, केन भगवन् कर्माण्यशेषतो विसृजामीति। तं होवाच प्रजापति-स्तव पुत्रान् भ्रातॄन् बन्ध्वादीन् शिखां यज्ञोपवीतञ्च यागञ्च स्वाध्यायञ्च भूर्लोक-भुवर्लोक-स्वर्लोक-महर्लोक-जनलोक-तपोलोक-सत्यलोकञ्च, अतल-पाताल-वितल-सुतल-रसातल-महातल-तलातलं(२) ब्रह्माण्डञ्च विसृजेत्, दण्डमाच्छादनञ्च कौपीनञ्च परिग्रहेत्, शेषं विसृजेदिति। १॥

गृहस्थो ब्रह्मचारी वा वानप्रस्थो वा उपवीतं शिखां भूमावप्सु वा विसृजेत्, लौकिकाग्नीनुदराग्नौ समारोपयेत्, गायत्रीञ्च स्ववाचाग्नौ(३) समारोपयेत्, कुटीचरो ब्रह्मचारी कुटुम्बं विसृ-

---

१ क, ख, ग, मतिर्गतिमतो ये प्राप्य परमां गतिं भूयस्ते न निवर्त्तन्ते परापरमवस्थितां परापरमवस्थितामिति।

२ क, ख, तल-पाताल-वितल-नितल-सुतल-रसातल-महातलं ब्रह्माण्डञ्च विवर्जयेत्।

३ ख, स्ववागग्नौ।

जेत्, पात्रं विसृजेत्, पवित्रं विसृजेत्, दण्डान् लोकांश्च विसृजेदिति होवाच। अत ऊर्द्धममन्त्रवदाचरेत्, ऊर्द्धगमनं विसृजेत्, औषधवदशनमाचरेत्, त्रिसन्ध्यादौ स्नानमाचरेत्, सन्धिं समाधावात्मन्याचरेत्, सर्वेषु वेदेष्वारण्यकमावर्त्तयेदुपनिषदमावर्त्तयेदुपनिषदमावर्त्तयेदिति। २॥

खल्वहं ब्रह्मसूचनात् सूत्रं ब्रह्मसूत्रमहमेव विद्वान् त्रिवित् सूत्रं(१) त्यजेद्विद्वान् य एवं वेद काम-क्रोध-हर्ष-रोष-लोभ-मोह-दम्भ-दर्पासत्यादीन् परित्यजेत्, वर्षासु ध्रुवशील-लोष्णौ मासावेकाकी यतिश्चरेत्, द्वावेव वा विचरेद्द्वावेव वा विचरेदिति। ३।

खलु वेदार्थं यो विद्वान् सोपनयनादूर्द्धमेतानि प्राग्वा त्यजेत्, पितरं पुत्रमग्न्युपवीतं कर्म कलत्रञ्चान्यदपीह सन्न्यस्तं मया, सन्न्यस्तं मया, सन्न्यस्तं मयेति त्रिःकृत्वोर्द्धं वैणवं दण्डं कौपीनञ्च परिग्रहेन्नान्यत्। अथ भिक्षाचर्यञ्चरति ब्रह्मचर्यमहिंसाञ्चापरिग्रहञ्च सत्यञ्च यत्नेन हे रक्षत हे रक्षत इति॥ ४॥

अथातः परमहंस-परिव्राजकानामासन-शयनादिकं(२) भूमौ ब्रह्मचर्यं मृत्पात्रमलावुपात्रं दारुपात्रं वा यतीनां यतयो

१ क, ख, ग, वहिःसूत्रं। २ च, शयनाभ्यां।

ति भिक्षार्थं ग्रामं प्रविशन्त्युदरपात्रं पाणिपात्रं वा ।
ओं हि ओं हि ओं हीत्येतदुपनिषदं विन्यसेत्, खल्वेतदुप-
निषदं विद्वान् य एवं वेद, पालाशं बैल्वमाश्वत्थं दण्ड-
मजिनं मेखलां(१) यज्ञोपवीतञ्च त्यक्त्वा शूरो य एवं वेद ।
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षु-
राततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते
विष्णोर्यत्परमं पदमिति, एवं निर्वाणमनुशासनमिति, वेदानु-
शासनमिति, वेदानुशासनमिति ॥ ५ ॥

इत्यथर्ववेदे आरुणेयोपनिषत् समाप्ता ॥ ११ ॥

---

(१) क, ख, मेखलायां ।

ओं रुद्राय नमः ।

अथर्व्वशिरसो दीपिका

रुद्राध्यायोऽथर्व्वशिरः सप्तखण्डो ह्यथर्व्वणः ।
शिरो भित्त्वा यतो जातं ततोऽथर्व्वशिरः स्मृतम् ॥

योगमारूढ़स्य महत्पदमारुरुक्षोर्मुनेर्देवादिकृत-विघ्नसम्भावनागम्यार्थोपदेशापेक्षा च स्यात्; अतो विघ्ननिवृत्तये उपदेशाय च रुद्रस्तुतिरारभ्यते । किञ्च योगोऽपि तत्प्रसादं विना न सिध्यति । यथा स्मृतिः ।

"न सिध्यति महायोगी मदीयाराधनं विना ।
मत्प्रसाद-विहीनानां मन्निन्दापरचेतसाम् ।
पशूनां पाशबद्धानां योगः क्लेशाय जायते ।
सन्त्यज्याज्ञां शिवेनोक्तां पूजां सन्त्यज्य मामिकाम्" ॥ इति ।

तत्प्रसादे च निर्व्विघ्नसिद्धिरुक्ता ।

"युञ्जतः सततं देवि! सर्व्वलोकमयं शिवम् ।
मद्ध्यानासक्तचित्तस्य तुष्यन्ते(१) सर्व्वदेवताः ।
तस्मात् सम्पूज्य युञ्जीत मत्प्रसादेन खेचरी ।
अन्यथा क्लिश्यतेऽत्यर्थं न सिद्धिर्जन्मकोटिभिः" ॥ इति ।

अमृतविन्दौ, "रुद्राराधन-तत्परस्य" इति । तस्मात् रुद्राराधनस्य योगसिद्ध्यङ्गत्वेनोक्तत्वात् सिद्धिमिच्छता रुद्रोऽप्यवश्यं सेव्य इति रुद्रस्तुतिरारभ्यते, ओं देवा इति(१मू०) ॥ आख्यायिकाविद्यास्तुत्यर्थाः 'देवाः' इन्द्रियाणि इन्द्रादयो वा 'स्वर्ग''

(१) ख, तृप्यन्ते ।

सत्त्ववृत्तिं कैलासं वा ऋषिभिर्वृतं 'रुद्रम्' आत्मानम् उमापतिं वा। 'आसीत्' व्यत्ययेन प्रथमपुरुषः। 'वर्त्तामि' व्यत्ययेन परस्मैपदम्। 'सः' रुद्रो मन्त्रगणः 'अन्तरादन्तरं' गुह्याद्गुह्यं प्रविष्टः 'दिशो व्यन्तरं'(१) जातावेकवचनं, दिशां विविधम् अन्तरम् 'प्राविशत्' प्राविशम्, सर्व्वात्मा सर्व्वव्यापी च बभूवेत्यर्थः। 'अपुमान्' नपुंसकम्। 'पुष्करं' पद्मं,(२) 'पुष्करं पङ्कजे व्योम्नि पयः-करिकराग्रयोः। ओषधी-द्वीप-विहङ्ग-तीर्थ-रोगोरगान्तरे' इति विश्वः। अहमेव 'सर्व्वे' भावाः व्योममेव,(३) स इति सोऽहमेव सर्व्वात्मकोऽपि व्योममेव व्योमात्मतां शुद्धात्मतां न जहामीत्यर्थः। व्योमशब्दोऽकारान्तोऽयम्। तर्हि त्वमुत्कृष्टः, अन्ये अपकृष्टा इति ब्रह्मणि वैषम्यं स्यात्? अत आह, सर्व्वे समा इति। 'समाः' तुल्याः मत्तो भेदकैर्विशेषै रहिताः, तेन मत्तोऽन्यन्नास्तीति कथमुत्कर्षापकर्षसम्भव इति भावः। ऐक्यज्ञानफलमाह, यो मामिति। साङ्गानपि वेदेत्यनुषङ्गः; ब्रह्म ब्राह्मणैस्तर्पयामीत्यग्रतनेन सम्बन्धः। 'ब्रह्म' वेदः, स ह्यभ्यासेन तृप्तो भवति, तदुक्तं, "विद्यामभ्यसनेनैव प्रसादयितुमर्हसि" इति। 'गां' स्त्रियं 'गोभिः' पुंभिः, गोशब्देन लिङ्गमेव विवक्षितं न सुरभित्वमनुगतश्च जातिः। 'ब्राह्मणेन' ब्रह्मतेजसा, 'हविः' ओदनादि, 'हविषा' संस्कारकेण सर्पिरादिना, पित्राद्यायुः पुत्राद्यायुषा, सत्येन 'सत्यं' सत्यवादी, सत्यवादि-दर्शनेन तृप्तो

(१) दिशश्चान्तरमित्यत्र दिशोव्यन्तरमिति पाठो दीपिकासम्मतः।

(२) क, पुष्करं पद्मं ब्राह्मणं। ख, पुष्करं पद्मं ब्राह्मणं यमपुष्करं।

(३) 'सर्व्वेभ्यो मामेव' इत्यत्र 'सर्व्वे व्योममेव' इति पाठो दीपिकासम्मतः।

भवति। एवं धार्म्मिको धार्म्मिकस्य, स्वेनेति यत्तृसिद्धेतुस्तस्यात्मैव तेजः। तदुक्तम्।

"या या प्रकृतिरुदारा यो योऽप्यानन्दसुन्दरो भावः।
यदपि च किञ्चिद्रमणीयं वस्तु शिवस्तत्तदाकारः"॥ इति।
"यद्यद्विभूति मत्सत्त्वम्" इत्यादि च॥

'रुद्रमपृच्छन्'(२पृ०) तात्पर्य्येण पारमार्थिकं रूपं पुनरपृच्छन् 'अपश्यन्' यथाभूतं ज्ञातवन्तः, ततो ध्यातवन्तः, तत उच्चैः स्तुवन्तिस्म। ततो ब्रह्म-विष्णु-स्कन्देन्द्राग्नि-वायु-सूर्य्य-सोमाष्टग्रहाष्ट-प्रतिग्रह-भूर्भुवः-स्वः-पृथिव्यन्तरिक्ष-दिवप्-तेज-आकाश-काल-यम-मृत्वमृत-विश्व-स्थूल--सूक्ष्म-शुक्ल-कृष्ण--कृत्स्न-सत्य--सर्व्वरूपै-रेक-त्रिंशत्पर्य्यायैः अस्तुवन्(१) अत्र यमपर्य्यायानन्तरमन्तक-पर्य्यायोऽपि पठनीयः, तेन त्र्यम्बक-मन्त्राक्षर-सङ्ख्यया द्वात्रिंशत् पर्य्याया भवन्ति। ब्रह्मरूपेणैकत्वं; विराड्रूपेण स्तुतिमाह, भूरिति (३पृ०)। 'आदिः' पादौ 'मध्यम्' उदरम्, ब्रह्मरूपेणैकत्वं 'द्विधा बद्धः'(४पृ०) सदसद्रूपेण, 'त्रिधा बद्धः' गुणत्रयभेदेन। 'परायणं' परमयनं स्थानम्। 'अपामसोमम्' इति त्वयि दृष्टे सर्व्वं सिद्धमित्यर्थः। 'कृणवत्' छिन्दन् 'अरातिः' शत्रुः, अस्मान् प्रति न किञ्चिदित्यर्थः। 'धूर्त्तिः' हिंसाप्यस्माकं किं त्वदभिरक्षितानां त्वद्रूपमापन्नानां हिंसाकृतदोषाभावात्; यद्गीतासु, "हत्वापि स इमान् लोकान् न हन्ति न निबध्यते" इति; अथवा शत्रुकृता हिंसा त्वच्छरणानस्मान् न स्पृशतीत्यर्थः। 'अमृतम्' आदेयं, 'मर्त्त्यं' हेयञ्च त्वदाश्या कृतार्थानां नो नास्तीत्यर्थः।

(१) क, स्तुवन्। ख, स्तुवं।

सोमश्चासौ सूर्य्यश्च 'सोमसूर्य्यः' तेनोभयात्मक एक इत्यर्थः। सोम-सूर्य्य इत्युपलक्षणं पञ्चभूतानि सोमसूर्य्यौ यजमानश्चेत्यष्टमूर्त्ति-रीश्वरः 'पुरस्तात्' पूर्व्वस्यां दिशि उदेतीति शेषः। सूक्ष्मो यः पुरुषः स एव 'सर्व्वं' स्थूलं सम्पन्नम्।

ननु सर्व्वभावापत्त्या किमर्थं सृष्टिं तनोतीत्यत आह, जग-द्धितेति(४पृ०)। जगतां हितं 'जगद्धितं' 'एतदक्षरं' ब्रह्म, जीव-भोगापवर्गार्थं कृपया सृष्टिरिति भावः। 'प्राजापत्यं' प्रजापति-रूपेण ग्रसति, तथा भावादिकं तेनैव रूपेण पालितम्(१) 'सौम्य' सामो ऽन्नं यद्रूपेणाप्यायितं 'सूक्ष्मं' पुरुषं' जीवं 'ग्राह्यं' देहभावा पन्नम् 'अग्राह्येण' कालरूपेण ग्रसति स्थूलस्य सूक्ष्मे ऽन्तर्भावात्(२), 'वायव्यं' प्राणाख्यं 'वायव्येन' वाह्यवायुरूपेण 'महाग्रासाय' उक्त-प्रकारेण सर्व्वभक्षकाय मृत्युमृत्यवे।

'हृदिस्थाः' (४पृ०) अन्तःकरणवर्त्तिन्यः 'देवताः' इन्द्रियाधि-ष्ठातारः 'प्राणाः' वागादयः त्वमन्तर्य्यामिरूपेण यो हृदि त्वमसि तस्मै नमो नम इत्यन्वयः; अतएव स्वप्ने अन्तःकरणेनैव सर्व्वेन्द्रिय-व्यवहार इत्युक्ता ध्यानेन देवा उपरताः। इदानीं श्रुतेराख्या-यिकामुपसंहृत्य स्वेन रूपेणाह, तिस्र इति। 'तिस्रो मात्राः' अकारोकार-मकाराः सर्व्वदेवमयाः 'परस्तु' अर्द्धमात्रात्मकः 'सः' शिवः। तस्येति मात्रात्रयातीतो हृदि त्वमसीत्युक्तम्, तत्र सन्देहः, कस्यां दिशि तस्य शिरः? कस्यां वा पादौ? इत्यत उक्तं, 'तस्य' परस्य हृदिस्थस्य उत्तरतः शिरो वर्त्तते, तेनोत्तरमार्गेण गतानां यातायातेन भवतो रुद्रमुखादुपदेशलाभात्; 'दक्षिणतः पादौ'

(१) ख, पालितं। (२) ख, अन्तर्धानात्।

तेन दक्षिणमार्गगामिनां गतागते भवतः, पादयोर्गमनशीलत्वात्; य उत्तरतः स ओङ्कारः, स प्रणव इति तथा प्रसिद्धेः; 'सर्वव्यापी' सर्वव्यापकोऽपि ब्रह्मवाचकत्वात् सोऽनन्तः, अन्यथा सर्वव्याप्त्यसम्भवात्; तारम् 'शुक्लं' निर्म्मलं 'सूक्ष्मम्' इन्द्रियाद्यग्राह्यम्। कथं तर्हि तज्ज्ञानम्? अत उक्तम् 'तद्वैद्युतं' स्वप्रकाशं 'परं ब्रह्म' सर्वबृहत् अन्येषामात्मलाभस्य तदधीनत्वात्; अत एवैकः अन्यात्मनस्तदपेक्षत्वेन तदनतिरेकात्। 'सः' रुद्रः "एको रुद्र" इति मन्त्रवर्णात्, 'ईशानः' स्वतन्त्रः, अतएव 'भगवान्' षड्विधैश्वर्य्यसम्पन्नः एष(१) 'महेश्वरः' अनवधिकैश्वर्य्यः सर्वेऽप्येते प्रवृत्ति-निमित्त-भेदेऽप्येकार्थाः समानाधिकरणवत्॥

पर्य्यायत्व-शङ्का-निवृत्तये तयोर्द्दशानामपि प्रवृत्ति-निमित्त-भेदं पृच्छन्ति, अथेति(५पृ०)। उर्द्ध्वोत्क्राम-शब्दयोरोङ्कार इति निपातनम्, उपायस्योपायान्तराविरोधान्न व्याकरण-विरोधः शङ्क्यः, एवमुत्तरेष्वपि। चतुर्व्वेदात्मकं ब्रह्म 'ब्राह्मणेभ्यः' अध्येतृभ्यः 'प्रणामयति' प्रणतं नम्रं करोति 'नामयति' प्रकरोति तत्तन्त्रमिव करोति स प्रणवः, 'पललं' तिलपिष्टं तस्य 'पिण्ड' गुड़िका, इव शब्दो वाक्यालङ्कारे; यथा तिलपिष्टपिण्डं सर्वतः 'स्नेहेन' तैलेन व्याप्तम्, एवं पटे तन्तुमिव कार्य्यमात्रे 'ओतञ्च प्रोतञ्च' तानवितानभावमापन्नं 'शान्तरूप' ब्रह्म 'उच्चार्य्यमाणः' वाचा प्रयुक्तः प्रतीतः एवं सर्वत्र, 'अनु' अनुसृत्य 'प्राप्तः' भेदमापन्नः प्रतिमेव देवेन, तथा वाचकभावेन 'व्यतिषक्तः' सम्बद्धः सर्वात्मकं ब्रह्म तद्रूपेण व्याप्नोति वाचकतया वा सम्बध्नाति सर्वव्यापीत्यर्थः।

(१) स, एव।

एवं प्रणवस्य सर्वव्यापित्वादिकम् अर्थाभेदविवक्षया द्रष्टव्यम्। उच्चार्य्यमाणेऽस्मिन् 'तस्य' ओङ्कारस्य अन्तो ब्रह्मैक्यात्रोपलभ्यते तेनानन्तः। अाशु 'क्रन्दते' क्रन्दते क्रन्दते ध्वनिरूपेण व्यज्यते 'क्लामयति च' उदात्ततया उच्चारणे प्रयत्नाधिक्यात् शरीरं क्लमयुक्तं करोति तत् शुक्लम्; पूर्व्वोत्तरपदयोराद्यन्तलोपः। सूक्ष्मो भूत्वा अङ्कुरावस्थायामेवापि 'शरीराणि' देहावयवान् स्वहेतुप्राणाभेदेन प्रयत्नाभेदेन ब्रह्माभेदेन वा 'अधितिष्ठति' आरोहति 'अभिमृशति' सम्बध्नाति व्याप्नोति च सूक्ष्मम्; तस्मात् अव्यक्ते महति 'तमसि' अविद्यायां 'द्योतयति'(१) तन्निरासेन ब्रह्मप्रकाशं करोति तत् वैद्युतम् 'परमपरं' सगुणं निर्गुणञ्च 'परायणं' परमगति, तस्मात् परमित्यन्वयः।

ब्रह्मशब्दनिमित्तमाह, बृहदिति(५पृ०)। यस्मात् 'बृहत्' महत्, तस्मात् ब्रह्मेत्यन्वयः। निमित्तान्तरमाह, बृहत्येति। 'बृहत्या' मायया 'बृंहयति' वर्द्धयति कार्य्यं, तेन 'परं ब्रह्म' ओङ्कारः। यः 'सर्व्वान् प्राणान्'(६पृ०) प्राणाभिव्यङ्ग्यान् वेदान्, अर्थपक्षे वागादीन् 'सम्भक्ष्य' संहारकाले आत्मन्युपसंहृत्य सम्भक्षणेन कृत्वा 'संसृजति' तैरेकीभवति, स्वयन्तु अजः वाचा विरूपनित्ययेति लिङ्गात्, नित्यं विज्ञानमिति श्रुतेश्च, पुनः सिसृक्षायां विसृजति चेति कार्य्यकारणयोरभेदात् मृदादिवदेकः, अत एव "ऋते तु प्रणवो वेदः" इत्याद्युपपन्नम्। कारणत्वेनैक्यमुक्त्वा फलत्वेनाप्यैक्यं मन्त्रेणाह, तीर्थमिति। 'तीर्थम्' उपायः 'तद्भजनम्' अनुष्ठानम्; दिक्चतुष्कग्रहणं तन्नानात्वोपलक्षणार्थं (२) नानामार्गैरप्युपायैः

(१) क, द्योत्यते। (२) क, तलज्ञानोपलक्षणार्थं।

सर्व्वेषाम् 'इह' ईश्वरे 'सङ्गतिः' फलत्वेन प्राप्तिः । 'साकं' सहैव सः 'एको भूतः' सिद्धः 'चरति' स्रष्टा प्रवर्त्तते भक्षयति वा प्रजानामशुभकर्म्म-विपाकम्; तदुक्तं कविभिः,

"बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे" ॥ इति ।

वाच्यधर्मेण वाचको व्यवह्रियते । 'ऋषिभिः' ज्ञानिभिः द्रुतं गम्यते इति रुद्रः । 'ईशते' ईष्टे इति ईशानः, ईश्यते एभिरिति ईशिन्यः ताभिः, देवान् स्वेच्छया नियुनक्ति अजातानां विनियोगा सम्भवात्, 'जननीभिश्च शक्तिभिः' जनयन्ति ईशते । ईशानत्वे मन्त्रसङ्गति-(१) माह, अभीति(६पृ०) । हे 'शूर!' इन्द्र! परमेश्वर! 'त्वा' त्वाम् 'अभितो नुमः' आभिमुख्येनातिशयेन स्तुमः, 'अदुग्धाः' दुग्धरहिताः पयोऽर्थिनो वत्साः 'धेनवः' दोग्ध्रीः गा इव स्तुवन्ति, द्वितीयार्थे प्रथमा; 'अदुग्धाः' प्रसूताः 'धेनवः' गावो वत्सानिवेति न व्याख्यातम्, स्नेहसाम्येऽप्युपासकस्य मातृता, उपास्यस्य वत्सतेति हीनोपमादोष-प्रसङ्गात् । 'जगतः' जङ्गमस्य 'तस्थुषः' स्थावरस्य ईशानम्, आदरार्थं पुनः प्रयोगः, 'स्व ईशं' दिव्यदृष्टिम् । 'भक्ता' भजनकर्त्ता, तस्यैवार्थो ज्ञानेनेति; यद्वा 'भक्ताः' भक्तान् ज्ञानेन 'भजति' सेवते अनुगृह्णाति चेति भग, शब्दार्थः, 'वाचं' वेदाख्यां संसृजति ब्रह्मादिमुखे विसृजति स्वमुखादिति वान् शब्दार्थः । महेश्वरशब्दार्थमाह, य इति(६पृ०) । 'भावान्' विषयान् 'परित्यज्य' त्याजयित्वा वेदमुपदिश्य तदर्थबोधनद्वारा विषय-वैराग्यमुत्पाद्य अधिकारिणं कृत्वा दत्तेन

(१) क, मन्त्रमभ्यमिति, ख, मन्त्रमभिमिति ।

आत्मज्ञानेन मनःस्थिरतायै च अष्टाङ्गयोग-जन्यैश्वर्य्येण च भक्तान् 'महति' पूजयति; तेन परानुग्रहेण च 'महीयते' महिमानं याति जगद्विख्यातयशा भवति; तेन भगवान् महेश्वरः, "अक्षरसाम्येन निर्ब्रूयात्" इति न्यायेनेदं निर्व्वचनम् ॥

ननु परब्रह्मपर्य्यायादारभ्योच्चार्य्यमाण एवेति कस्मान्नोक्तम्? अत आह, तदेतद्रुद्रचरितमिति (६पृ०)। नाम-नामिनोरैक्य-बोधनायोङ्कारोपक्रमस्य आदित आरभ्य रुद्रस्यैवैतद्वर्णित-मित्यर्थः ॥ ४ ॥

ईशस्य प्रतिज्ञातमैक्यमुपपादयितुं साधनानि च वक्ष्यमाणव-वशः प्रणवस्योपासनायाः पृथक् फलानि प्रतिपाद्य ईशभक्ति-प्रधानेन ज्ञानेनैव परमपुरुषार्थ-सिद्धिरिति प्रतिपादयितुञ्चोत्तर-खण्ड आरभ्यते, एको(१) ह देव इति(६पृ०)। एक एव(२) देवः सर्व्वा दिशः 'प्रजातः' सर्वदिग्रूपो बभूव; दिग्ग्रहणं तत्स्थवस्तूना-मप्युपलक्षणम्।

ननु कथमेकस्यानेकत्व-सम्भवः? इत्याशङ्क्य सर्वैश्वर्य्ये भग-वति किं किं रूपं न सम्भवति? (३) इत्याशयेन परिहरति, पूर्वो हेति(६पृ०)। पूर्वः 'स उ' स एव 'गर्भे' जगतो मध्यावस्थायां, स एव 'अन्तोऽपि' सर्वान्ते वर्त्तमानोऽपि। स एव उत्पत्त्युपाधिना कालविरोधं परिहरति, स एवेति। ननु कथमस्यानुभवः? इत्याशङ्क्याह, प्रत्यङ्ङिति। हे 'जनाः'! आबाल-स्त्री-गोपालाः! सर्वजनीनमनुभवं पश्यतेति श्रुतेर्वचः; किं तत्? 'सर्वतोमुखः'

(१) क, ख, एको ह। (२) क, ख, एष एव। (३) ख, किं किमपूर्वं न सम्भवति।

आदित्यवत् सर्वेषां सम्मुखः, 'प्रत्यङ्'(६पृ०) अवस्थात्रयानुभूयमानाहम्प्रत्यय-वेद्यात्मरूपेण, तिष्ठति यः, स ईशः।

द्वितीयगन्धमपि निषेधति, एक इति(६पृ०)। स द्वितीयमैच्छदिति श्रुतेः प्राप्तां सहायापेक्षां निषेधति, न द्वितीयाय तस्थाविति। ननु लीलामात्रं, द्वितीय-चेतनाभावादेको द्रष्टेति श्रुतेः; 'सञ्चुकोच' इति 'अन्तकाले' प्रलयकाले सङ्कोचं कृतवान्, 'संसृज्य' व्याप्य(१)।

ननु बहवः शरीरिणश्चेतना दृश्यन्ते; एकत्वस्त्वीश्वरापेक्षमेवेत्यत आह, यो योनि योनिमिति(७पृ०)। सर्वे जीवा व्युच्चरन्तीति श्रुतेः, विस्फुलिङ्ग इव ततो भिन्न एव(२) इति भावः। ज्ञानशक्तिवत् क्रियाशक्तिरप्येकत्वैवास्तीत्याह, सर्वमिति। सर्वं 'सञ्चरति' प्रविशति 'विचरति' नाना गच्छति च, 'येन' शक्तिमता इत्यर्थः। सर्वगुणैः सम्पन्नः स एव सेव्य इत्याह, तमिति। 'वरद' सकामानामप्युपास्यं 'देवं' स्वतो द्रष्टारम् 'ईड्यं' स्तुत्यं वेदानां 'निचाय्य' नितरां सर्वभावेन पूजयित्वा 'इमाम्' ईश्वरावस्थामेव 'अत्यन्तशान्तिं' कैवल्याख्याम् एति।

तत्प्राप्त्यन्तरङ्गोपायानाह, क्षमामिति(७०पृ०)। 'हेतुजालस्य' हेतुवाद-कल्पना-समूहस्य 'मूलं' कारणभूतां 'क्षमां' भूमिम्, अविवेकदृष्टिलक्षणां 'छित्वा' त्यक्त्वा 'बुद्धा' निपुणधिया 'सञ्चितं' स्वीकृतं वस्तु रुद्रे 'स्थापयित्वा' समर्प्य "तत् कुरुष्व मदर्पणम्" इत्युक्तत्वात्, रुद्रमेव 'एकत्वम्' एकाभावमेकरसमितीत्यनु-

---

(१) क, संसृज्यापि। (२) ख, नाना भिन्न एव।

षङ्गः; 'आहुः' इति(७पृ०) आहुराचार्य्या इत्यर्थः। कीदृशं रुद्रं? 'शाश्वतं' सर्व्वकालव्यापिनं, 'पुराणं' पुरापि नवं न कदाचिज्जीर्णम्, 'इषम्' अन्नम्, 'ऊर्ज्जेन' बलेन सह 'पशवः' द्वितीयार्थे प्रथमा, पशून् 'अनुनामयन्तम्' अधीनीकुर्व्वन्तं(१) भक्तेभ्योऽर्पयन्तमिति यावत्; मृत्युपाशान् नामयन्तं न्यक्कुर्व्वन्तं तेभ्यो मोचयन्तमिति यावत्, भक्तिमुक्तिप्रदमित्यर्थः।

इदानीं प्रणवस्य मात्राभेदेन ध्यानभेदस्य फलानि वक्तुं प्रथमं प्राधान्यात् चतुर्मात्रस्य तस्य फलमाह, तदेतेनात्मन्निति(७पृ०)। 'तत्' तस्मात् पूर्व्वोक्तप्रकारात् 'एतेन' प्रणवेन 'आत्मन्' आत्मनि 'एतेन' आहतेन(२) आगतेन आत्मप्रतिपादकेन, अर्द्धा चतुर्थी मात्रा यस्य तेन ओङ्कारेण शान्तिं संसृजति ईश्वरः। तथा, पशुपाश-विमोचण-शान्तिद्वारा कर्म्मपाशहानिं करोति। प्रत्येकमात्राणां फलमाह, या सेति। 'प्रथमा' अकाररूपा अर्द्धचतुर्थी मात्रा, चतुर्थी अर्द्धरूपा मात्रेत्यर्थः, 'सर्व्वदेवत्या' ब्रह्म-विष्णु-रुद्र-देवत्या 'अव्यक्तीभूता' अवर्णकत्वात् अव्यक्तीभूता वर्णरूपेणानिर्व्वाच्या 'खं'(पृ०७) मूर्द्धानं प्रविचरति। 'शुद्धा' इति विशुद्धसत्त्वात्मकत्वात् पद्मनामकं सहस्रदलं पद्ममिति प्रसिद्धम्। तदुक्तं, "मूर्ध्नि प्रतिष्ठितं पद्मं सहस्रदलसंयुतम्" इति; षोड़शदलं वा। तद्दिति। 'तत्' तस्मात् कारणात् 'एतत्' पद्मनामकं पदं चतुर्थमात्राद्वारा उपास्ते। तस्य पद्मान्तरवैलक्षण्यमाह, मुनयो वाग्वदन्तीति(७पृ०)। 'अवाक्' अधोमुखं, यच्छ्रुतिः, "अवाङ्-

(१) क, अर्थायकुर्व्वन्तं।  (२) ख, आदन्तेन।

मुखममस ऊर्द्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्” इति । याज्ञवल्क्योऽपि ।

“शीर्ष्ण्यच्छन्दसंयुक्तं शिरःपश्चादधोमुखात् ।
निर्गत्यामृतधाराभिः’ इति ।

विशेषान्तरमाह, न तस्य ग्रहणमिति(७पृ०)। गृह्यते अनेनेति ‘ग्रहणं’ नालं, तत् यस्य नास्ति, अधोमुखस्य तस्य मूर्द्धोपरि नालत्वादर्शनात् । एतत् भित्त्वा ये यान्ति, तेषां गतिमाह, अयमिति । ‘अयं पन्थाः’ ओङ्कारोपासन-लक्षणः, ‘येन’ उत्तरेण पथा देवा ‘यान्ति’ गच्छन्ति, ‘पितरः’ ज्ञानरहित-कर्म्मोपासनेन गच्छन्ति । ये न पितर इति पाठे, ये पितरः, ते उत्तरेण पथा न गच्छन्तीत्यर्थः । नेष्टापूर्त्तमात्रकारिणां ज्ञानरहितानामुत्तरेण पथा गतिरस्ति । अथवा ‘पितरः’ पितृमार्गाधिपाः कव्य-वालादयः, तेषां हि ज्ञानित्वादुत्तरमार्ग एव ; तत्रापि विशेषः, केचित् परमेव यान्ति ; यदुक्तम् । “ब्रह्मणा सह ते सर्व्वे मुच्यन्ते” इति । केचित् ‘अपरं’ ब्रह्मलोकादि, येषामसति ज्ञानपरिपाके कल्पान्तरे पुनर्जन्म भवति। केचित् ‘परायणं’ वैकुण्ठ-कैलासादि। तत्र के परमेव यान्ति? इत्यपेक्षायामाह, बालाग्रमात्रमिति (८पृ०)। दुर्लक्ष्यत्वेन सूक्ष्मत्वोक्तिः, हृदयस्य मध्ये दहरे ‘विश्वं’ जाग्रदवस्थाभिमानिनं ‘देवं’ द्योतनात्मकं ‘जातरूपं’ सुवर्णवर्णं, जातरूपं जगद्यस्मादिति,(१) ‘वरेण्यं’ वरणीयम् ‘आत्मस्थं’ बुद्धि-प्रकाशकं ‘शान्तिः’ मुक्तिः, इतरेषां तदनभिज्ञानात् ।

---

(१) क, जातरूपं जगद्यस्मादिति वा ।

इतरेषामप्राप्तौ हेतुं त्याजयितुमाह, यस्मिन्निति(८पृ०)। यस्मिन्निति विषयनिर्देशः, क्रोधविषयं क्रोधञ्च 'हित्वा' विस्मृत्येत्यर्थः, या च तृष्णाविषया ताञ्च तृष्णां हित्वा, क्षमाग्रहणं सर्व्वसाधनोपलक्षणं, लब्धे तत्त्वे साधनान्यपि चेत्यर्थः, "येन त्यजति तत्त्यजो" इत्युक्तेः। 'हेतुजालस्य' विकल्पराशेः मूलभूतां 'क्षमां' भूमिम् अविवेकदृष्टिञ्च हित्वा 'बुद्धा' ब्रह्मार्पणधिया सञ्चितं विवेकदृष्ट्या रुद्रे स्थापयित्वा समर्प्य(१) "यज्जुहोषि यदश्नासि" इत्यादि स्मृतेः।

ननु विष्णौ ब्रह्मणि चेति वक्तव्ये रुद्रे इति किमर्थमुच्यते? इत्याशङ्काह, रुद्रमिति(८पृ०)। रुद्रम् एकत्वमापन्नम् आहुरार्य्या इत्यपेक्षितम्। अयं भावः। भगवच्छब्दवाच्यो महेश्वर एव शुद्धं ब्रह्म, स एव स्वमहिम्ना चित्तैश्वर्य्येण नामानि रूपाणि चापन्न इति। रुद्रो हीति। 'शाश्वतेन' अनवच्छिन्नेन 'पुराणेन' अपरिणामिना 'ऊर्जेन' ऐश्वर्य्येण तपसा च रुद्ररूपम् 'इषम्' अन्नं भूतजातं नियन्ता, "तृन् न लोकेति" षष्ठीनिषेधः। सर्व्वभूतजातं नियच्छति ऐश्वर्य्यतपसोः शाश्वतं रुद्रस्य दशाव्ययत्वात्, तथाहि।

"ज्ञानं विरागितैश्वर्य्यं तपः शौचं क्षमा धृतिः।
स्रष्टृत्व(२)मात्मसम्बन्धो ह्यधिष्ठातृत्वमेव वा।
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे" ॥ इति।

भस्मधारणमीश्वरस्य प्रसिद्धं। तद्यथा, भस्म लीलया धृतं

---

(१) क, त्यमर्थ ख, समर्थ। (२) क, सृष्टित्व। ख, सृष्टत्व।

मायासकारि, तथा जगद्पीति वक्तुमग्न्यादीनां भस्मोपमामाह, अग्निरित्यादि(८पृ०)। विश्वं भस्मविशेषेण धृतमित्यर्थः। 'स्थलं' पृथिवी 'सर्व्वम्' आकाशादिकमपि 'इदं' जगत् 'चक्षूंषि' इन्द्रियाणि।

ननु किमर्थममङ्गलं भस्म दधाति? अत आह पशुपते रुद्रस्येदं व्रतम्; यस्मादिति(८पृ०)। यद्यपि पूर्णकामस्य न च व्रतेनापि प्रयोजनं, तथापि भक्तानुग्रहार्थं, व्रते मया कृते भक्ता अपि तथा कुर्य्युरिति; 'यत्' यस्मात् भस्म नाङ्गानि संस्पृशेदिति, व्रतं पशुपतिना प्रोक्तं पशुपतिना धृतञ्च भस्म, तस्मात् ब्रह्म ज्ञेयमितिस्तुतिः। फलमाह, तदिति। 'पशूनां' जीवानां 'पाशस्य' बन्धस्य, 'विमोक्षणाय' त्यागाय 'एतत्' व्रतं; भस्मधारणविधिः फलविशेषश्च कालाग्निरुद्रोपनिषदि द्रष्टव्यः।५

अग्न्यादीनां रुद्ररूपतया रुद्रस्य चाग्निरूपतया अग्न्याद्यधिकरणतया च नमस्कर्त्तुं मन्त्रत्रयमाम्नातं योऽग्नौ रुद्र इत्यादि प्रकृत्यान्तः पादमध्य(१) इति प्रकृतिभावः, 'ओषधीः'(८पृ०) व्रीह्याद्याः 'वीरुधः' गुल्माः; एकैकग्रहणं प्रदर्शनार्थम्।

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति" स्मृतेः।

"या या प्रकृतिरुदारा यो योऽप्यानन्दसुन्दरो भावः।
यदपि च किञ्चिद्रमणीयं वस्तु शिवस्तत्तदाकारः"॥

इति च स्मृतेः।

'इमाः' इमानि विश्वानि 'चकृपे' कृतवान्; पृथिवी द्विधा

(१) ख, प्रकृत्यान्तः पादमध्यपद इति।

त्रिधा धर्त्ता धारितेति(८पृ०)। ऋता सत्यासत्या धारा सती पृथिवी द्विधा त्रिधा शेषरूपेण दिग्गजरूपेण राजन्यरूपेण च 'धारिता' धृता। शेषनागरूपेण धृता इत्युक्ते पाताल एव नागरूपेण तिष्ठतीति शङ्का स्यादत आह, नागा इति। तदुक्तं नीलकण्ठेन(१);

"नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु।

ये अन्तरिक्षे ये दिवि तेभ्यः सर्व्वेभ्यो नमः" ॥इति।

'नागाः' दिग्गजा वा, ते ऽप्यन्तरिक्षस्था दन्तैः पृथिवीं बिभ्रति।

इदानीमथर्व्वशिरसोऽस्य ग्रन्थस्योत्पत्ति-प्रकारमाह, मूर्द्धानमिति(८पृ०)। 'अथर्व्वा' अथर्व्वर्षि-शरीराधिष्ठाता 'पवमानः' वायुः प्राणः 'अस्य' अथर्व्वणो मुनेः मूर्द्धानं 'संशीव्य' संशीर्य्य विदार्य्य 'मस्तिष्कात्' मस्तकात् ऊर्द्ध्वः सन् यदस्य 'हृदयं' हृदिस्थं ग्रन्थरूपं तत् 'शीर्षतः' अधिशीर्षे 'प्रैरयत्' प्रेरितवान्। तद्वेति। 'अधिशीर्षतः, शिर ऊर्द्ध्वतः, यस्मात् प्राणेन प्रेरितं, 'तत्' तस्मात् 'वै' निश्चितम् अथर्व्वणः 'शिरः' एतद्ग्रन्थरूपं 'देवकोशः' देवानामिन्द्रादीनां कोशो निधिः 'समुब्जितः(२) सुगोपितः सुरक्षितः। तद्ग्रन्थरूपमुद्भूतं सत् केन रक्षितम्? अत आह, तत् प्राण इति(८पृ०)। 'तत् शिरः' अथर्व्वशिरः प्राणोऽभिरक्षति प्राणाधीनत्वादध्ययनस्य, प्राणस्य अन्नाधीनस्थितिकत्वादन्नमप्यभिरक्षति। तर्हि सुषुप्ते कस्मान्नाधीत इत्यत आह, मन इति।

---

(१) ख, नीलरुद्रे। (२) कचिह्नितमूलपुस्तके समुब्भितः, ख चिह्नितमूलपुस्तक समुब्भितः, ग चिह्नितमूलपुस्तके समुब्जितः। क चिह्नितः दीपिका पुस्तके समुपितः। ख चिह्नित दीपिका पुस्तके समुचितः।

'मनसा मनस्यभिमम्नानधोयेयेत्यथाधीत' इति श्रुतेः मनोऽप्यभिरक्षति।

यं देवमेषोपनिषत् स्तौति, तस्योपनिषदुत्पत्तिप्रकार-कथनेन महत्त्वमुक्त्वा प्रकृतं तदेव स्तवनमनुसन्धत्ते(१) नवेति(८पृ०)। देवादीनां नवत्वं गुणसङ्करेण द्रष्टव्यम्; तद्यथा, द्यौर्लोकः सात्त्विक-राजस-तामस-भेदेन त्रिधा; त्रिविधोऽपि प्रत्येकं सङ्करेण नवधा; एवमन्तरिक्षं भूमिश्च। यद्वा जम्बूद्वीपस्य नवखण्डत्वात् इतरयोरपि तथा खण्डाः कल्प्याः। 'देवजनेन' देवजनकेन, अथवा, देवाः 'जनाः' सेवका यस्य तेन रुद्रेण 'गुप्ता'(२) गोपिता रक्षिता। भूम इमा इति छान्दसो वर्णलोपः, भूमय इमाः गुप्ता इति। न च केवलं गुप्ताः, किन्तु व्याप्ता अपि इत्याह, यस्मिन्निति। ओतं प्रोतं तन्तुष्विव पट आततः प्रततश्च ऊर्द्धं तन्तुभिरावयनं तिर्य्यक् तन्तुभिः प्रवयणं 'यस्मात्' देवात् न ह्यन्यत् 'परं' भिन्नमस्ति देवसत्त्वायतत्वात्(३) जगत्सत्त्वस्य, 'परम्' उत्कृष्टं वा नास्तीत्यर्थः। वर्त्तमानव्याप्तिमुक्त्वा भूतभविष्यतोरपि व्याप्तिमाह, न तस्मादिति। यत् भूतं भव्यं वा अस्ति तदपि तस्मात् पूर्वं परञ्च नासीत् न भविष्यति च इत्यपि बोध्यम्।

नन्वेकेन कथमनेकं व्याप्तम्?(४) अत आह, सहस्रेति(८पृ०)। सहस्रपात् कार्य्यरूपेण 'एकमूर्द्धा' कारणरूपेण सहस्रपाच्चासावेकमूर्द्धा च सहस्रपादेकमूर्द्धा तेन व्याप्तमिदम्; कारणेन कार्य्य-

(१) क, मनुसन्धे। (२) क, गोप्ता। (३) ख, देवसन्नायतत्वात्।

(४) ख, कथमनेकधा पूर्णम्।

व्याप्तिर्मृदादौ प्रसिद्धा ; न केवलं तिलतैल-दधि-सर्पिरादिवत् व्याप्तिमात्रम् ; किन्तु स एवातिशयेन आवृणोति, 'आवरीवर्त्ति'-(८पृ०) सर्व्वांशेन व्याप्नोति ; न तु खलु घटादिवत् ततोऽन्यत् किञ्चिदस्ति। 'अक्षरात्' कूटस्थात् 'कालः' सङ्कर्षणः ह्रस्वाधिपः(१) क्षणादि-व्यवहार-निमित्तभूतः सञ्जायते, 'कालाद्व्यापक उच्यते' सति काले व्याप्य-व्यापक-सञ्ज्ञां लभते ; 'भोगायमानः' सर्प-शरीरमिव सर्व्वतः सङ्कुच्य यदा 'शेते' उपरतक्रियो भवति, तदा 'संहार्य्यते' संहर्त्ता भवतीत्यर्थः।

सम्प्रति सृष्टिमाह, उच्छ्वसिते इति(८पृ०)। 'उच्छ्वसिते' कार्य्य-जननोत्सुके ईश्वरे सति 'तमः' अज्ञानं प्रसृतं भवति, तमसः आकाशादिक्रमेण आपः, अप्सु अङ्गुल्या 'मथिते' मथने कृते सति तक्रमिव जायते: ; ततः 'शिशिरे' विलम्बे सति 'शिशिरं' शीतं भवति ; शीतार्थाः शब्दाः विलम्बार्था अपि भवन्ति, यथा, शीतकोऽयं विलम्बकारीति गम्यते। अथ वा, 'शिशिरे' वायौ वाति शिशिरं भवतीत्यर्थः। शीतलं सत् पुनर्मथ्यमानं फेनो भवति, फेनात् कालेनाण्डं भवति, 'ब्रह्मा'(८पृ०) प्रजापतिः, 'वायुः' प्राणाख्यः, "मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्" इत्युक्तेः। वायोरोङ्कारः, ओङ्कारात् 'सावित्री' गायत्र्याः पूर्व्वावस्था व्याहृत्याख्या, "प्रणवाद्व्यवत्रयाद्व्याहृतित्रयम्" इत्युक्तेः। 'गायत्री' तत्पदादिका, 'गायत्र्याः' वेदत्रयद्वारा त्रयो लोका भवन्ति। अर्च्चयन्ति लोकान् बुधाः, कुतः ? यतो लोकः तपः सत्यं यत्र भूर्व

---

(१) क, ह्रस्वाधिपः, ख, ह्रस्वाधिपः।

'मधु'(९पृ०) अमृतं मोचाख्यं तत् चरन्ति(१)। शरीरसाध्यत्वात् तपआदीनां, शरीरस्य च सृष्टिप्रधानत्वात् इतरथा विद्यात्, यतः(२) सुषुप्तिवज्जाड्यात्तन्निवर्त्तते(३), अत एव ईश्वरस्य जीवानुग्रहाय सृष्टिनिर्माणमिति।

किं तत् परमं तपः? इत्याह, आप इति(९पृ०)। तपःसाधनत्वादयं मन्त्रस्तप इत्युक्तः; तस्मात् प्रयत्नेन प्राणायामोऽभ्यावर्त्तनीयः,(४) इति भावः। 'तपःसत्ये' लोकाख्ये(५) ध्रुवं मधु 'चरन्ति' प्रस्नुवन्ति, 'लोकाः', भूरादयः; तेन तानर्च्चयन्ति; एतत् 'हि' यस्मात् परमं 'तपः' तपःफलं गायत्रीशिरः साध्यमिति चार्थः। सम्प्रत्यध्ययनफलमाह, य इदमथर्व्वशिर इति(१०पृ०)। 'ब्राह्मणः' इति वचनात् उपनीतस्यापि क्षत्रियादेर्नाधिकार इति गम्यते, मुख्यत्वावबोधनाय वा ब्राह्मणग्रहणम्। अधीते इति, अर्थबोधपर्य्यन्तमध्ययनं(६) पाठमात्रस्य निन्दाश्रुतेः। न चाल्पायासेन कथं बहुयत्नसाध्यं फलं स्यादिति शङ्क्यम् अल्पायासेनाप्यमृतादेर्महातृप्ति-जनकत्वादि-दर्शनात्, वस्तुशक्तेः पर्य्यनुयोगायोगात्।

अनधीतवेदोऽप्येतन्मात्राध्ययनेनैतादृशो भवतीत्याह, अश्री-

---

(१) कचिह्नितमूल पुस्तके, ख चिह्नित दीपिका पुस्तके च चरन्तीति पाठः।

(२) क, इतरथा विद्यतः। ख, इतरथ्यविद्याद्यतः।

(३) क, सुषुप्तिवज्जाड्यान्निवर्त्तेत।

(४) क, प्राणायामस्त्वावर्त्तनीयः, ख, प्राणायामश्चावर्त्तनीयः।

(५) क, तपः सत्यलोकाख्यं।

(६) ख, अर्थबोधपर्य्यन्तमध्येयम्।

विय इति(१०पृ०)। 'श्रोत्रियः' वेदमधीत्य तदर्थानुष्ठाता; 'अनुपनीतः, द्वितीयोपनयनादि-रहितः; अग्निपूतः 'अग्निना' हुतेन यथा पूतः, 'वायुना' प्राणायामैर्यथा पूतः, 'सूर्य्येण' उपस्थितेन यथा पूतः, 'सोमेन' सोमयागेन(१) यथा पूतः, 'सत्येन' सत्यभाषितेन यथा पूतः, 'सर्व्वैः' धर्म्मसाधनैरनुष्ठितैर्यथा पूतः, (२) तथा अनेनेत्यर्थः। 'वेदै' इति वेदानां देवतारूपेण चेतनत्वादनुध्यानं सम्भवति। 'पुरुषयुगान्' पितृपङ्क्तीयान् मातृपङ्क्तीयांश्च(३)। सप्तमात् पुरुषादात्मानमभिव्याप्य पुनातीत्याह 'भगवान्' अथर्व्वा।

सकृदादिपाठस्य फलमाह, अथर्व्वशिर इति (१०पृ०)। 'एवमेव अनुप्रविशति' इति विशेषमपश्यन् सामान्यमेव प्रविशति, तच्च सामान्यरूपं ब्रह्मैव, मोक्षं यातीत्यर्थः। यद्वा, 'एः' विष्णुः 'वः' शिवः, तयोः समाहारः 'एवं' हरि-हर-स्वरूपं, तदेव अनुप्रविशतीति; "एर्विष्णुर्वो महेश्वरः" इति चैकाक्षरनिर्घण्टः। हरोपास्त्या हरिप्राप्तिः, अविरुद्धैक-मूर्त्तित्वात्तयोरिति।

किं तत्सामान्यरूपं? यदनुप्रविशतीत्यपेक्षायामाह, सत्यमिति(१०पृ०)। ओङ्कारवाच्यं सत्यमित्यर्थः, हरि-हर-रूपमप्येतदुभयवाच्यं भवति, एकवाच्यं वा ओङ्कारवाच्यं सत्यमेव, साधनान्तरं विनैव अनुप्रविशतीति। द्विरुक्तिः समाप्त्यर्था।

---

(१) क, सोमयाजेन। ख, सोमपानेन।

(२) दीपिकायां 'सर्व्वैर्धर्म्मसाधनैरनुष्ठितै यथा पूतः, इति दर्शनात् मूले 'स सर्वपूतो भवति' इत्यतिरिक्तः पाठो विद्यते इत्यनुमीयते।

(३) ख, पुरुषयुगात् पितृपङ्क्तीयात् मातृपङ्क्तीयाच।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानां दीपिकाथर्व्वमस्तके॥
इत्यथर्व्वशिर-उपनिषद्दीपिका समाप्ता॥१॥

---

## अथ गर्भोपनिषदो दीपिका।

ओं गर्भसंस्था निरूप्यात्र गर्भोपनिषदित्यपि(१)।
पञ्चखण्डाष्टमाम्नुखण्डात् पैप्पलादभिधा तथा॥

गर्भवासान्मुच्यत इत्युक्तम्; तत्र को गर्भः? कथञ्च तद्वासः? इत्यपेक्षायां संसार-वैराग्यार्थञ्च जन्म-मरणादि-दुःखं निरूपणीयमिति गर्भोपनिषदारभ्यते। तत्र गर्भस्य मातापितृ-शरीरापेक्षत्वात् प्रथमं शरीर-स्वरूपमाह, पञ्चात्मकमिति (११पृ०)। 'पञ्चात्मकं' पञ्चभूतात्मकं 'पञ्चसु' धारणादिषु आनन्दादिषु च

---

(१) ख, गर्भोपनिषदित्यतः।

'वर्त्तमानं'(११पृ०) प्रवर्त्तमानं; पञ्चस्वित्यत्र वीप्सा द्रष्टव्या, प्रश्नोत्तरे पञ्चकानां मिलात्; 'षड़ाश्रयं' षसां मधुरादिरसानाम्, आश्रयतीति आश्रयं(१) भोगायतनमित्यर्थः। षड्गुणयोगयुक्तं गानादिकलाकुशलत्वात्; सप्त 'धातवः' रसादयो यस्मिन् तत्; सप्तधातुकत्वभावो(२) बहुव्रीहौ, अग्रे तु कपिसप्तधातुकमिति निर्द्देशः शेषाद्विभाषेति। 'त्रिमलं' त्रयो मला नख-लोम-केशा यत्र तत्; मूत्रादीनान्तु अशित-पीत-मलत्वात् न देहमलत्वम्। अथवा, कफादीनां श्लेष्मादिरूपाणां मलत्वम्। 'द्वियोनिं'(३) 'द्वयोः' मातापित्रोः 'योनिः' उत्पत्तिर्यस्य। 'चतुर्विधाहारमयं'(११पृ०) लेह्य-पेय-खाद्य-चोष्य-लक्षण-चतुर्व्विधाहारविकार इत्यर्थः।

गुरुणा प्रतिज्ञाते शिष्यो विशेषज्ञानाय पृच्छति, पञ्चात्मकं कस्मादिति (११पृ०)। अत्र पञ्चसु वर्त्तमानं कथम्? इति प्रश्नो द्रष्टव्यः, उत्तरानुरोधात्, इतिशब्दान्तमुत्तरे(४)। पृथिवीप्रभृतीनां किं लिङ्गम्? इति पृच्छति, का पृथिवीति। काठिन्यादिषु पृथिव्यादि-लिङ्गमित्युत्तरयति, तत्र यदिति(५)। शरीरे तेषामुपयोगं दर्शयन् पञ्चसु कथं वर्त्तमानमित्यस्योत्तरमाह, तत्रेति। 'व्यूहनं' मेलनम्। ननु मा भूदवकाशप्रदानम्?

(१) आश्रयमित्यनन्तरं खचिह्नित पुस्तके पञ्चाषट् पञ्च इत्यतिरिक्तान्यक्षराणि सन्ति।

(२) ख, सप्तधातुकविभावौ।

(३) ख चिह्नितमूलपुस्तके दीपिकापुस्तके च द्वियोनि इति पाठः।

(४) क, इति शब्दान्तरं।

(५) 'तत्र पञ्चात्मके शरीरे यत् कठिनम्' इत्यत्र 'अस्मिन् पञ्चात्मके शरीरे। तत्र यत् कठिनम्' इतिपाठः ग, ङ,चिह्नितमूलपुस्तकद्वये दृष्टः, स एव च दीपिकासम्मतः।

इत्यत आह, पृथ्विति(१)। पृथुः 'एषः' शरीरं यदर्थः(२)। अवकाशं विना पार्थिवं न स्यादिति भावः। द्वितीयपञ्चकमाह, श्रोत्रे इति। श्रोत्रे हि शब्दोपलब्धौ वर्त्तते। तृतीयपञ्चकमाह, उपस्थ इति।(११पृ०)

षड़ाश्रयं कस्मादित्यत्र षड़्गुणयोगयुक्तश्च कस्मादित्यपि द्रष्टव्यम्। आद्यस्योत्तरमाह, मधुरेति(११पृ०)। 'विन्दति' लभते जानातीत्यर्थः। द्वितीयस्योत्तरं षड़्जेति। एते गायनेषु प्रसिद्धाः; एतत् सप्तस्वरग्रहणं षड्रागोपलक्षणार्थं षड़्गुणेत्युक्तत्वात्। ते च,

"श्रीरागोऽथ वसन्तश्च पञ्चमो भैरवस्तथा।
मेघनादश्च विज्ञेयाः षष्ठो नटनरायणः"(३)॥ इति॥

तेषां प्रत्येकं सप्त स्वरा भवन्ति, षट् च षट् च रागिण्यो देश्यः स्त्रियो भवन्तीति षट्त्रिंशत्(४) ज्ञेयाः; ता यथा,

गौड़ी कोलाहली(५) धाली द्रविड़ी मालव-कौशिका।
षष्ठी स्यादेव गन्धारी(६) श्रीरागाच्च विनिर्गता॥
आन्दोली कौशिकी चैव रामगरी पुटमञ्जरी।
गुञ्जरी चैव देशाख्या वसन्तस्य प्रियास्त्विमाः॥
भैरवी गुर्जरी चैव भाषा वेलीवती तथा।
कर्णाटी रक्तसिंहा च पञ्चमात्ता विनिर्गताः॥

---

(१) पृथक् इत्यत्र च चिह्नितमूल पुस्तके, दीपिकायाञ्च पृथुस्त्वेष इति, कचिह्नितमूलपुस्तके पृथक् तु इति पाठः। (२) ख, पदार्थः।

(३) क, मदनरायणः। पुस्तकान्तरे नटनरायणः। (४) क,ख, षट्‌त्रिंशता।

(५) क, कोलोहाणी। (६) ख, गान्धारी।

त्रिगुणा स्तम्भतीर्था च आभीरी ककुभा(१) तथा।
विराड़ी(२) चैव सामेरी भैरवाच विनिर्गता॥
वङ्गाला मधुरा चैव कामदा(३) चोकमादिका(४)।
कम्बुग्रीवा च देवाला मेघरागाद्विनिर्गता॥
तोटकी च———नट्टा चैव प्रकीर्त्तिता।
गान्धारी शुद्धमुद्गारी जाता नदनरायणात्(५)॥ इति।

तेषां मिथुनानां योगोऽस्मिन् शरीरे भवतीति षड़्गुणयोग-युक्तमित्यर्थः; इति शब्द एतदर्थविवक्षार्थः।

ननु पृथिव्यादीनां वृत्तयो धारणादयस्त्रयः पञ्चका उक्ताः, ते किं सर्व्वे पुरुष-प्रवृत्ति-निवृत्त्योरुपयुज्यन्ते? आहोस्वित् कतिपये? इति संशये निर्णयमाह। इष्टानिष्टानीति(११पृ०)। धारणादिषु 'इष्टानिष्टानि' प्रवृत्ति-हेतुभूतानि 'दशविधा' दशविधानि भवन्ति। भूतवृत्तानां(६) धारणादीनां पञ्चानाम् इष्टानिष्टत्वाभावेन(७) प्रवृत्ति-निवृत्त्यजनकत्वात् शब्दादीन्येव दश इष्टानिष्टानि भवन्तीति भावः। इष्टानिष्टत्वे द्वारमुक्तम्। शब्देति। 'शब्द-प्रणिधानं' शब्दप्रयोग-जनकत्वं; सञ्ज्ञा-प्रणिधानं प्रत्यय-जनकत्वं; व्यवक्रियमाणाः प्रतीयमानास्तु दशैव शब्दादय इष्टानिष्टत्वेन प्रवृत्ति-निवृत्ति-जनका इत्यर्थः। उभयत्र प्रश्नस्याप्युपलक्षणम्। समाधानन्तु तत्र भविष्यति। शुक्ल इत्या-

(१) ख, कुकुभा।
(२) ख, विवाड़ी, पुस्तकान्तरे वराड़ी। (३) क, ख, कामोदा।
(४) चोकम्रादिका। (५) ख, नहनरायणात्। पुस्तकान्तरे नटनरायणात्।
(६) क, भूतवृत्तिनाम्। ख, भूतविज्ञानाम्। (७) क, इष्टानिष्टत्वभावेन।

ग्व्यवहार्य्य-द्रव्याणां प्रकारभेद-कथनं, नत्वेत एव(१) सप्तधातवः, तेषामग्रे वक्ष्यमाणत्वात्; शुक्ल-पाण्डुरयोः कृष्ण-धूम्रयोः पीत-कपिलयोश्चावान्तर-भेदो द्रष्टव्यः; नीलश्च कृष्णेऽन्तर्भाव्यम्; चित्रञ्च सर्व्ववर्णेषु यथालाभम्। 'देवदत्तस्य' (१२पृ०) पुंसो 'द्रव्याणि' सप्तप्रकाराणि 'विषयाः' भोग्यानि 'जायन्ते' सम्पद्यन्ते। तेषां 'परस्परम्' अन्योऽन्यं 'सौम्यगुणत्वात्' अनुकूलगुणत्वात्; यथा, ओदनादीनां व्यञ्जनादयोऽनुकूलाः, तेषां परिणामे षड्विधो रसः, वर्णतः शुक्लादिरूपः, स्वादनो(२) मधुरादिरूपो भवति। चित्ररूपस्य च(३) षट्स्वेवान्तर्भावात्।

शोणितादीन् सप्त धातूनाह, रसादिति(१२पृ०)। 'रसः' धातुमूलं, न स्वयं धातुः; तादर्थ्यात्तु कैश्चित् धातुत्वेनोक्तः; रस-धातुवादिनान्तु भेदः। स्नायो(४) रैक्यं द्रष्टव्यम्। मज्ज इति(५)। मज्जन् शब्दस्य पञ्चम्येकवचने अनो लोपः(६)। स्त्रीषुभिस्तु आवर्त्तते इति(७)। 'शुक्र-शोणित-संयोगात्' आशुक्र-शोणित-संयोगमारभ्य 'वर्त्तते' अस्तित्वं भजते इत्यर्थः।

---

(१) क, नत्वेन एव।

(२) ख, स्वादितो।

(३) क, चित्ररूपस्य च। ख, चित्ररूपस्य च।

(४) क, स्नाम्नो। ख, स्नम्रा।

(५) मज्ज्ञात इत्यत्र मज्ज इति पाठः घ, ङ, चिह्नित मूलपुस्तकद्वये दृश्यते, स एव दीपिकासम्मतः।

(६) क, पञ्चम्येक वचनेऽस्लोपोनः। ख, पञ्चम्येकवचनात् लोपोनः।

(७) क, स्त्रीषु नासुः आवर्त्तेत इति। किन्तु उभयपाठोऽपि दुर्बोधः।

धातूनां स्थानमाह,

हृदि व्यवस्थानीति(१)। इत्येतान्युक्तानि धातुरूपाणि 'हृदि व्यवस्था येषां' तानि हृदि व्यवस्थानि ; सप्तम्या अलुक् ; अतएव धातुषु न्यासो हृदय उक्तः, 'धातुषु प्राणेषु हृत्स्थले' इति(२)।

पुनर्हृदये कानि ? इत्यत आह, हृदये इति(१२पृ०)। हृदये अन्तराग्निर्वर्त्तते, अन्तरश्चासावग्निश्च, 'अग्निः' ओजः; तदुक्तं प्रपञ्चसारे। "शुक्रं परिणतं हि स्यादोजो नामाष्टमी दशा" इति। अग्निस्थाने पित्तमिति। 'अग्निः' ओजः, स एव 'स्थानम्' आधारः, तत्र पित्तम्, अग्नौ तेजोरूपे(३) प्रवर्त्तकं पित्तमित्यर्थः। पित्तस्थो 'वायुः' वातः, वायुं विना प्रवृत्त्यनुपपत्तेः। हृदयान्तरोजः-पित्त-वाता वर्त्तन्ते इत्यर्थः। एतत् कफस्याप्युपलक्षणं, दोषाणां वात-पित्त-कफानां समानदेशत्वस्यौचित्यात्(४)।

ततः किम् ? इत्याह, वायुत इति(१२पृ०)। वायुतो 'हृदयं' लिङ्गं प्राजापत्यात् क्रमात् प्रवर्त्तते ; प्राजापत्यः क्रमो यथा, स आत्मानं द्वेधा अपातयत्, पतिश्च पत्नी च भवतीति ; प्रजापतिर्यथा एकः सन् द्विधाभूतः, तथा पितुर्हृदयोपलक्षितं लिङ्गमपि द्विधा भवति ; वाय्वाघातेन(५) दीपादिव प्रदीपः, कुसुमादिव गन्ध इति। न स मूलोत्क्रम आशङ्कनीयः ; तेन शरीरं वात-पित्त-कफात्मकमुच्यते ; यद्वा, 'प्राजापत्यः क्रमः' धूमादिमार्गः,

(१) "हृदि व्यवस्थां नयति" इत्यत्र "हृदि व्यवस्थानि" इति पाठो घ ङ, चिह्नित पुस्तकद्वये दृश्यते, स एव दीपिकासम्मतः।

(२) ख, धातु प्राणेषु हृत्स्थल इति। (३) क, ख, तेजोरूपं।

(४) ख, वात-पित्त-कफानामष्टापरमानात्मक-धातु समान देशत्वस्यौचित्यात्।

(५) क, वाय्वाद्यातेन।

"अग्ने संवत्सरो वै प्रजापतिः" इत्यादिना प्रजापति-प्रतीक्षो द्रष्टव्यः। स च आरोहावरोह-क्रमः, "तद्य इत्थं विदुः" इत्यादिना छान्दोग्ये उक्तः। गीतायाञ्च,

"धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते" ॥ इति।

प्राजापत्यात् क्रमात् पञ्चम्याहुतौ(१) ऋतुकाले प्रयोगादित्यन्वयः। एतेन त्रिमलं कस्मात्? इति प्रश्न उत्तरितः, कफादीनां श्लेष्मादि-मलरूपत्वात्। ऋतुकाले योषिद्धातुपोषकं पुंवीजं भवति; तेन पुंसः सम्प्रयोगे स्त्रियास्तेजोविशेषो दृश्यते। 'कललम्' (१२पृ०)ईषद्घनं 'वुद्बुदं' वर्त्तुलम्। यास्केन तु अन्यथोक्तम्; तद्यथा, "एकरात्रोषितं कलिलं(२) भवति, पञ्चरात्राद्बुद्बुदः, सप्तरात्रात् पेशी, द्विसप्तरात्रादर्व्वुदः, पञ्चविंशतिरात्रात् स्वस्थितो युक्तो भवति, मासमात्रात् कठिनो भवति, द्विमासाभ्यन्तरे शिरः सम्पद्यते, मासत्रयेण ग्रीवाव्यादेशः, मासचतुष्टयेन त्वग्व्यादेशः,(३) पञ्चमे मासि नख-रोम-व्यादेशः, षष्ठे मुख-नासिकाक्षि श्रोत्रञ्च भवति, सप्तमे चलनसमर्थो भवति, अष्टमे बुद्ध्याध्यवस्यति, नवमे सर्व्वाङ्ग-सम्पूर्णो भवति"। 'जीवेन' जीवलिङ्गेन चलनादिना।

पितुरिति (१२पृ०)। अनेन द्वियोनि कस्मात्? इति परिहृतम्। 'व्याकुलितमनसः' अन्धादि-विक्षिप्त-चित्तान्निषेकः (?)(४)

---

(१) ख, पञ्चम्यामाहुतौव। (२) क, कलिलं। (३) ख, त्व-देशः।
(४) ख, अन्धादि विक्षिप्तचित्तन्नपेक्षः।

'अन्योऽन्यस्य' स्त्रीपुंसस्य वायुना परिपीड़ितं यत् शुक्रं, तस्य द्वैविध्यात् 'तनुः' शुक्रस्वरूपं द्विधा स्यात्; ततो युग्माः प्रजायन्ते। 'पञ्चात्मकः'(१३पृ०) पञ्चभूतात्मकः पिण्डः 'समर्थः' चिन्तनादौ, 'पञ्चात्मिका' शब्दादिविषया 'चेतसा' अन्तःकरणेन गन्धरसादिविषयं ज्ञानं यस्याः सा गन्ध-रसादि-ज्ञाना बुद्धिर्भवति; सा 'क्षरम्' अनित्यम् 'अक्षरं' नित्यं मोक्षञ्च चिन्तयति; 'तदेकाक्षरं' ब्रह्म प्रणवं चिन्तयति, ज्ञात्वा प्रकृतयोऽष्टौ विकाराः षोड़श जायन्ते इति शेषः। तदुक्तम्;

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृति-विकृतयः सप्त।
षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः"॥ इति।

तत्र मुख्यव्यापाराभावेन शिशुः कथं वर्द्धते? इत्यत आह, अथेति (१३पृ०)। 'माता' जनन्या 'अशित-पीत' इत्यविभक्तिको निर्द्देशः, अशित-पीतेन इत्यर्थः; बालकस्तु रतिसमये पुरुषा-(१)सनवन्मातुः सम्मुखो वर्द्धते पितृप्रतिशरीरत्वात्; तथाच, या अस्य(२) नाभिसम्बद्धा नाड़ी मातुर्हृदयेन सम्बध्यते, सैव सूत्रं; तद्गतेन अन्नरसेन(३) तस्य प्राण आप्यायते; अतएव जात-मात्रस्य शिरसि कर्णद्वयमध्यदेशे मातृहृदयास्थि-चिह्नलेखा दृश्यते, सा मातुः सम्मुखत्वं व्यनक्ति। सर्व्वेति। 'सर्व्वलक्षण-ज्ञानैः' मनुष्यत्वादि-जातिव्यञ्जकैः अवयवैः, अथ च सर्व्वेषां लक्षणेन. ज्ञान-करणानामिन्द्रियाणां 'ज्ञानेन' दर्शन-श्रवणादिना

(१) क, पुरुषाः। (२) क, यस्य। (३) क, क्षमारसेन।

समाकीर्णः(१) 'भवति' सम्पद्यते, 'पूर्वजातीः' प्राक्तनजन्मानि 'विन्दति' लभते जानीते इत्यर्थः॥ ३॥

तस्याभिलाषमाह, आहारा इति (१३पृ०)। (२)'विविधाः' श्व-शूकरादि-भोग्या अपि; एतेन शरीरं कस्मात्? इति प्रश्नस्य, शीर्य्यतीति व्युत्पत्त्या, उत्तरं दत्तम्। पीताश्चेति नाना-योनिषु जातत्वात्। 'जन्म जन्मेति', जन्मनः प्रादुर्भावः एक-जन्मानन्तरं द्वितीयं जन्म। 'परिजनस्य' पुत्र-कलत्रादेः। एका-कीति, कर्त्तुरेव पापसम्बन्धो नार्ज्जितद्रव्य-भोक्तुरित्यर्थः। इदं लिङ्गम्। 'अभ्यसेत्' अभ्यसेयम्। दुःखेन जन्म-मरणानि न

(१) सम्पूर्ण इत्यत्र समाकीर्ण इति पाठो दीपिकाभिमतः।

(२) पूर्वयोनीत्यादौ घ, ङ, चिह्नित मूलपुस्तकद्वये पाठपरिवर्त्तनं दृश्यते, तद्यथा।

आहारा विविधा भुक्ताः पीता नानाविधास्तनाः।
जातश्चाहं मृतश्चैव जन्म जन्म पुनः पुनः॥
मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः।
नानायोनि-सहस्राणि मयोषितानि यानि वै॥
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा।
अवाङ्मुखः पीडितोऽहं जन्तुभिश्च समन्वितः॥
यन्मया परिजनस्यार्थे कृतं कर्म्म शुभाशुभम्।
एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः॥
यदि योन्याः प्रमुच्येऽहं तत् प्रपद्ये परमेश्वरम्।
अशुभ-क्षयकारकं परिमुक्ति-प्रदायकम्॥
यदि योन्याः प्रमुच्येऽहं तत् प्रपद्ये नारायणम्।
अशुभ-क्षयकारकं परिमुक्ति-प्रदायकम्॥
यदि योन्याः प्रमुच्येऽहं तत्साङ्ख्यं योगमभ्यसेत्।
अशुभ-क्षयकारकं परिमुक्ति-प्रदायकम्॥ इति।

भरतोत्यपतनेन सम्बन्धः। अस्मरणे हेत्वन्तरमाह, जात-
मात्रेति(१४पृ०)। 'वायुना' मायारूपेण; तदुक्तम्।

"दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"॥ इति।

'विन्दति' जानाति॥ ४॥

म्रियन्ते इति (१४), स्रयन्ते इति वक्तव्ये इयट्[१]।
'ज्ञानाग्निः' शरीराग्निः भोक्ता शुभाशुभस्य, 'दर्शनाग्निः'
प्रमाता, 'कोष्ठाग्निः'।

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापान-समायुक्तः पचाम्यन्नं चतुर्विधम्"॥ इत्युक्तः।

अग्न्यादिक्रमेण त्रयाणां लक्षणमाह, तत्रेति (१४पृ०)।
अशितेति। अनेन चतुर्विधाहारमयं कथमिति प्रश्नस्योत्तर-
मुक्तम् भवति; स च गार्हपत्यो भूत्वा नाभ्यां तिष्ठति। दर्श-
नाग्निरिति[२]। स चतुरस्र आहवनीयो भूत्वा मुखे तिष्ठति।
ज्ञानाग्निरिति, स चार्द्धचन्द्राकृति दक्षिणाग्निर्भूत्वा हृदये
तिष्ठति। 'विन्दति' लभते भोक्तेत्यर्थः।

अत्राग्नित्रये सति शरीरे यज्ञदृष्ट्योपासनमाह, चीणेति
(१४पृ०)। 'आहवनीयः' दर्शनाग्निः, 'गार्हपत्यः' कोष्ठाग्निः,
'दक्षिणाग्निः' ज्ञानाग्निः; अग्नित्रयं स्थानत्रये स्मृत्वा आहव-
नीयादिबुद्धिः कार्य्या। आत्मा यजमानः अधिपतित्वात्; मनो
ब्रह्मा सोम्यत्वात्; लोभादयः पशवः बध्यत्वात्; कर्म्मेन्द्रियाणि

---

(१) क, इयम्। (२) क, ख, दर्शनाक्षिरिव।

हवींषि प्राणाग्नो होमार्हत्वात्; शिरः कपालं तत्साम्यात्; केशा दर्भाः विचित्रत्वात्; मुखमन्तर्वेदिः(१) मुख्यस्थलत्वात्।

इदानीं शरीरे अवयवविभागमाह, चतुरिति(१४पृ०)। तदुक्तं याज्ञवल्क्येन;

"द्वौ शङ्खौ कपालानि चत्वारि शिरसस्तथा"। इति।

"अष्टाकपालं शिर" इति तु यास्कः। षोड़शेति। षोड़श पार्श्वानि, षोड़शदन्ताः षोड़शाष्टदन्तस्थलानि(२) षोड़शपटलानि पार्श्वस्थलानि; एवं द्वितीयभागे चतुःषष्टिदन्ताः स्थलैः सह; तदुक्तम्।

"स्थलैः सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः" इति। "पार्श्वकाः स्थलकैः सार्द्धं सर्व्वादेष द्विसप्ततिः" इति। सप्तेति(१४पृ०)। तदुक्तम्; सप्तोत्तरं मर्म्मशतमिति। साशीतिकमिति। तदुक्तं; द्वे च सन्धिशते तथेति। अवान्तरभेदे न्यूनाधिक्यं स्मृतावुक्तम्। सनवकमित्यादि। नवसङ्ख्याःपरिमाणमस्येति, नवकं नवकत्वेन सहवर्त्तते सनवकं, सधीरं सानुकूलमितिवद्भाव-प्रधानो निर्द्देशः नवस्नायुशतानि इत्यर्थः। तदुक्तम्; "शिरः शतानि सप्तैव नवस्नायुशतानि च" इति। पञ्च मज्जाशतानीति। 'मज्जा' पेशी; तदुक्तम्; "पञ्च पेशीशतानि च" इति। अस्थीनि चेति। तदुक्तम्; "तथास्थ्नाञ्च सह षष्ट्या शतत्रयम्" इति। अर्द्धचतस्र(३) इति (१५पृ०)। चतस्रः कोटयः एका चार्द्धकोटी-त्यर्थः।

(१) क, ख, मुखे चान्तर्वेदिः।

(२) क, ख, षोड़शाष्ट दन्तस्थानानि।

(३) सार्द्धचतस्र इत्यत्र अर्द्धचतस्र इति दीपिकाधृतः पाठः।

इदन्तु स्थूलकेशाभिप्रायेण, सूक्ष्माभिप्रायेण तु याज्ञवल्क्योक्तम् बोद्धव्यम्।

यथा, "रोम्णां कोटास्तु पञ्चाशच्चतस्रश्च तथापराः।
सप्तषष्टिस्तथा लक्षाः सार्द्धाः स्वेदायनैः सह।
वायवीयैं विगण्यन्ते विभक्ताः परमाणुभिः"॥ इति
'हृदयशब्देन' रसः, जिह्वाशब्देन च जलमुच्यते; तदुक्तम्;
"रसस्य नव विज्ञेया जलस्याञ्जलयो दश"। इति

पित्तप्रस्थमिति(१५पृ०)। पित्तस्य 'प्रस्थं' सपादमानीद्वयं, मानी तु तुरुष्काणां सेरः(१)। तदुक्तम्; पञ्च पित्तमिति। अञ्जलय इति वर्त्तते। कफस्याढ़कमिति। चतुःप्रस्थं तथाढ़कम् इति। 'शुक्रकुड़वम्' इति। शुक्रस्य द्वे प्रसृती इत्यर्थः। याज्ञवल्क्येन तु, "श्लेष्मौजसोस्तावदेव रेतसस्तावदेव तु"(२) इति कफ-शुक्रयोः समपरिमाणत्वमुक्तम्। मेदप्रस्थौ द्वाविति। याज्ञवल्क्येन तु(३) द्वौ मेद इत्युक्तम्। अञ्जलि-ग्रहणं वर्त्तते। अनियतमिति। याज्ञवल्क्येन तु नियम उक्तः, "सप्तैव तु पुरीषञ्च चत्वारो मूत्रमेव च" इति। अञ्जलय इति वर्त्तते, तत्तु प्रायोऽभिप्रायेण; निष्कर्षे क्रियमाणे तु नास्ति नियमः; अनियमे हेतुः आहारपरिमाणादिति; तस्मिन्नधिके अधिकं, न्यूने न्यूनमित्यर्थः। पिप्पलादेन प्रोक्तं पैप्पलादं; द्विरुक्तिः समाप्त्यर्था।

अत्र प्रसङ्गान्मागध-परिभाषोच्यते पलादिज्ञानार्थम्। तद्यथा;

---

(१)ख, मानी च तुरुकाणां सरः, क, तुरुष्कानां सेरः।

(२) क, "श्लेष्मौजसोस्तावदेव तु" इति।

(३) क, ख, याज्ञवल्क्यो तु।

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् ।
अतः प्रयोग-कार्य्यार्थं मानमत्रोच्यते मया ।
त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः ।
त्रसरेणुस्तु पर्य्यायै(१) नाम्ना वंशी निगद्यते ।
जालान्तर-गतैः सूर्य्यकरैर्वंशी विलोक्यते ।
षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका ।
तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः ।
यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ।
षड्भिस्तु रत्तिकाभिः स्यान्माषको हेम-धानकौ ।
माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते ।
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ।
क्षुद्रो मोरटकश्चैव(२) द्रङ्क्षाणः स निगद्यते ।
कोलद्वयञ्च कर्षः स्यात् स प्रोक्तः पाणिमानिका ।
अक्षः पिचुः पाणितलं(३) किञ्चित्पाणिश्च तिन्दुकम् ।
विड़ाल-पदकञ्चैव(४) तथा षोड़शिका मता ।
करमध्यं हंसपदं सुवर्णं कवलग्रहः(५) ।
उदुम्बरञ्च पर्य्यायैः कर्ष एव निगद्यते ।
स्यात् कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा ।
शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका ।
प्रकुञ्चः षोड़शी विल्वं पलमेवात्र कीर्त्तितम् ।

---

(१) ख, पर्य्यायो । (२) क, ख, क्षुद्रमोवटकश्चैव ।
(३) क, ख, ग्रक्षं पिचुः पाणिवलं । (४) क, विड़ालपठकश्चैव ।
(५) ख, करमध्यं हंसपदं सुवर्णं कम्बलग्रहः ।

पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतश्च निगद्यते(१) ।
प्रसृतिभ्यामञ्जलिः स्यात् कुड़वोऽर्द्धशरावकः ।
अष्टमानञ्च विज्ञेयं कुड़वाभ्याञ्च मानिका ।
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ।
शरावाभ्यां भवेत् प्रस्थश्चतुःप्रस्थैस्तथाढ़कम् ।
भाजनं कांसपात्रन्तु(२) शौनक इति ।

इति गर्भोपनिषद्दीपिका समाप्ता ॥ २ ॥

---

## अथ नादविन्दूपनिषदो दीपिका ।

ओँ प्रणवः पञ्चधाकारोकार-मै विन्दनाद-युक् ।
अन्त्यो नादस्ततो वर्णस्त्रिखण्डे नादविन्दुनि ॥
तत्राद्यमात्रात्रयं सार्द्धमात्र-(३) हंसाभिधान-पक्षिरूपकेण

(१) ख, पलाभ्यां प्रसृति ज्ञेयं प्रसृतिश्च निगद्यते ।
(२) ख, भाजनं कांसपात्रेण । (३) ख, सार्द्धमात्रम् ।

तावद्विविनक्ति, ओं अकार इति(१५पृ०)। 'पक्षः' पतत्रं, येन पक्षीत्युच्यते, 'पुच्छम्' अन्त्यत्वात्। 'वै' प्रसिद्धौ, 'शिरः' उत्तमाङ्गम्, ऊर्द्ध्वलोक-फलत्वात्(१), रजस्तमः पादौ अधस्त्व-सामान्यात्। 'सत्त्वं शरीरं' सर्व्वाधारत्वात्, धर्म्माधर्म्मौ चक्षुषी गतिहेतुत्वात्।

सप्त लोकान् हंसशरीरे विभज्य दर्शयति, भूर्लोक इत्यादिना(१५पृ०)। औत्तराधर्य्यसाम्यात् भूरादीनां पादाद्याश्रयत्वम्। भुवो लोक इति(२)। भुवश्च महाव्याहृतेरिति सकारस्य उत्व-रेफयोर्विधानात् उत्वपक्षे उत्वे गुणे च रूपम्। 'महर्जगत्' महर्लोकः। भ्रुवोर्ललाटमध्ये च सत्यलोकः, 'तुः' चार्थे। सहस्राक्षमिति(३) चात्र मन्त्र एव प्रदर्शितः। सम्प्रतिरूपेण स यथा, "सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः(४) स्वर्गं स देवानुरस्युपदद्य साक्षी सम्पश्यन् याति भुवनानि विश्वा" इति। स्वशाखायां पूर्व्वकाण्डे गतत्वात् सम्पूर्णो नोदाहृतः; अस्यार्थः, सहस्रमहानि किरणाः(५) यस्य स 'सहस्राह्नः'(६) सूर्य्यः एक ऋषिः, स च मूर्धाधिष्ठानः; तदुक्तम् प्राणाग्निहोत्रे। "तत्र सूर्य्योऽग्निर्नाम सूर्य्यमण्डलाकृतिः सहस्र-

(१) ख, ऊर्द्ध्वलोकपरत्वात्। (२) क, घ, ङ, भुवोर्लोकः।

(३) सहस्राक्षमित्यत्र घ, चिह्नित मूल पुस्तके सहस्राह्ण्यमिति पाठः, स एव दीपिकाकारेण व्याख्यातः। ङ, सहस्राह्नग्रामिति। ख, चिह्नित-दीपिका-पुस्तके सहस्राक्षमिति। (४) क, ख, यततः। (५) क, किरणानि।

(६) क, महासहस्राक्षः।

रश्मिभिः परिवृत एक ऋषिर्भूत्वा मूर्ध्नि तिष्ठति” इति; तमिति सहस्राङ्गं ‘स्वर्ग’ द्युलोकं ‘पततः’ गच्छतः अस्य ‘हरेः’ विष्णुरूपस्य ‘हंसस्य’ ओङ्काररूपस्य ‘वियतौ’ पूर्वापरावकाशभागौ अकारोकाररूपौ ‘पक्षौ’ पतत्रे(१) ज्ञातव्यौ, ‘स’ ओङ्कारः सर्व्वान् देवान् सात्त्विकान् ‘उरसि’ हृदये सत्त्वरूपे ‘उपदध्य’ निधाय विश्वानि भुवनानि साक्षात् पश्यन् याति शाश्वतं ब्रह्मलोकपर्य्यन्तम्; तदारूढ़ उपासकोऽपि तद्यातीति भावः। समारूढ़स्तच्चिन्तनात्।

ओङ्कारस्य हंसरूपेणोपासनां फलञ्चोक्त्वा चतसृणां मात्राणां देवता आह, आग्नेयीति(१६पृ०)। ‘एषा’ मध्यमा मध्यवृत्तित्वादुभयोः, ‘वशानुगा’ वशवर्त्तिनी ‘उत्तरा’ मकाराख्या, ‘भानुमण्डल-सङ्काशा’ अर्थात् भानुदेवत्या ‘अर्द्धमात्रा’ चतुर्थी।

इदानीं चतसृणामुदात्तादि-भेदेन लक्षणं प्रत्येकं तिस्रस्तिस्रो मात्रा दर्शयितुमाह, कलात्रयानना वेति (१६पृ०)। वा शब्दश्चार्थे; ‘तासां’ चतसृणां मात्राणां मध्ये एकैका मात्रा कलात्रयानना च ‘प्रतिष्ठिता’ निश्चिता, ‘कलात्रयेण’ मात्रात्रयेण ‘आननम्’ प्राणनं यस्याः सा, मात्रात्रय-शरीरा इत्यर्थः। ‘एषः’ इत्युपसंहारः।

इदानीं द्वादशानां कलानां मध्ये स्थानतो नामतश्चिन्तारूपां(२) धारणां दर्शयति, धारणाभिरिति १६पृ०)। ‘घोषः

(१) क, पतन्त्रौ। (२) क, चिन्तारूपा, ख, नामरूपा।

प्रज्ञा(१) तत्फला घोषिणी(२), 'विद्युन्माली' यक्षराजः, तल्लोकप्रदा विद्युन्माली, 'पतङ्गी' पक्षिणी, आकाशगति-प्रदत्वात्, 'वायु-वेगिनी' शीघ्रगतिप्रदा, 'नामधेया' पितृलोक-प्रदत्वात्; पितरो हि नामभिरिज्यन्ते, "यन्नाम्ना पातयेत् पिण्डं तं नयेत् ब्रह्म शाश्वतम्" इत्युक्तेः। 'ऐन्द्री' इन्द्रसायुज्य-प्रदत्वात्; 'वैष्णवी' विष्णुलोक-प्रदत्वात्; 'शाङ्करी' शिवलोक-प्रदत्वात्; 'महती' महर्लोक-प्रदत्वात्; 'ध्रुवा' ध्रुवलोक-प्रदत्वात्; 'मौनी' मुनीनां लोकं तपोलोकं प्रददाति; तेन 'ब्राह्मी' ब्रह्मलोकं गमयति; तेन ततः परन्तु फलं नादान्ते न लभ्यते ॥

इदानीं तत्तद्धारणासु स्थितान्तःकरणस्य प्राणवियोगे फलविशेषं नामभिः सूचितमाह, प्रथमायामित्यादिना (१६पृ०)। चतुर्थिकां प्राप्य समुत्क्रान्त इत्यन्वयः। देवत्वं प्राप्य सह देवैः 'ओषितः' आ उषितः सन् ब्रह्मलोकं 'शाश्वतं'(१७पृ०) ब्रह्मायुःपरिमितम् ॥२॥

पञ्चमाक्षरस्य नादान्तस्य विन्दुनामकस्य फलमाह, तत इति (१७पृ०)। ततः परतरं परं ब्रह्म इत्यन्वयः, ज्ञेयमिति शेषः। पूर्वोक्तं फलं परं, तस्मादिदमुत्कृष्यते इति परतरं, 'निष्कलं' कला द्वादशमात्राः, तद्विषयातिगं निष्कलं; यद्वा 'कलाः' षोड़श षष्ठप्रश्नोक्ताः, तद्रहितम्; यतो 'ज्योतिषां' मनआदीनां चक्षुरादीनां सूर्य्यादीनाञ्च उदयः, "तस्य भासा सर्व्वमिदं विभाति" इति श्रुतेः।

(१) क, आज्ञा।

(२) घोषिणी इत्यत्र ग, ङ, चिह्नित पुस्तकद्वये दीपिकायाञ्च घोषिणी इति पाठः।

कथमिदं लभ्यते? यदा तदेतद्धारणा भवति, किं नादधारणया फलं? मनोलय एव; तदुक्तम्।

"काष्ठे प्रवर्त्तितो वह्निः काष्ठेन सह शाम्यति।

नादे प्रवर्त्तितं चित्तं नादेन सह लीयते"॥ इति

द्वादशान्तेः(१) तदेवाह मनो लीनमिति(१७पृ०)।

ननु मनोलये माध्यमिकवच्छून्यमेव तत्त्वं फलं स्यादित्यत आह आदिशेदिति(१७पृ०)। यदा मनो लीनं भवेत्तदा 'आदिशेत्' उपदिशेत् गुरुः, तदैव हि परमोऽधिकारः, न तु मनागपि विषयाभिलाषे सति मुख्योऽधिकारः। अथवा, 'तदादिशेत्' लब्धमिति कथयेत् मध्यस्थः, मध्ये मनोविशेषणानि। उपमैव औपम्यम्, स्वार्थे ष्यण्; न औपम्यं(२) यस्य मनसः अनौपम्यम्, न भावयति चिन्तयति इत्यभावम्, जीव-परमात्मनोरैक्यं योगः, तद्युक्तम्; अथवा 'योगः' चित्तवृत्ति-निरोधः, तद्युक्तम्।

अथवा योगयुक्तस्य मनसः किं लक्षणम्? अत आह, मन इति (१७पृ०)। यदा मनो लीनं भवेत् तथा अनौपम्यमभावं भवेत्, तदा 'योगयुक्तम्' प्राप्तयोगमिति 'आदिशेत्' कथयेदित्यर्थः। तस्मिन् भक्तिर्यस्य स तद्भक्तः। "भक्त्या लभ्यस्त्वनन्यया" इत्युक्तत्वात्। तस्मिन् मनो यस्य तन्मनाः, 'असक्तः' विषयेषु; छान्दसः सन्धिः; अथवा 'तन्मनाः सक्तः' इति पठनीयम्, 'सक्तः' आसक्तस्तत्रैव(४)। 'योगचारेण'

(१) ख, द्वादशान्तः। (२) क, उपमा।

(४) 'तत्समासक्तः' इत्यत्र 'तन्मनासक्तः', इति घ, ङ, चिह्नित-मल-पुस्तकद्वये पाठः। स एव च दीपिकाकारेण व्याख्यातः।

योगमार्गेण, 'सुस्थितः' (१७पृ०) सुखीभूतः, 'पाशाः' कर्म्माणि, 'केवलः प्रभुः' जीवभाव-रहितः । विरक्तिः समाप्तयर्था । अत्र प्रणवस्य नादविन्दोर्निरूपणादकारादि-त्रये सत्यपि प्राधान्या-न्नादविन्दूपनिषत् सञ्ज्ञा ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्ट-पदवाक्यानां दीपिका नादविन्दुके ॥ २ ॥

इति नादविन्दूपनिषद्दीपिका सम्पूर्णा ॥

---

## अथ ब्रह्मविन्दूपनिषदो दीपिका ।

ओं ब्रह्मावबोधिका ब्रह्मविन्दूपनिषदुच्यते ।
अष्टादशी चतुःखण्डा शौनक-ग्रन्थविस्तरे ॥ १ ॥

उक्तो योगः, तत्फलं ब्रह्मसाक्षात्कारः; तद्ब्रह्म कीदृशं? कीदृशः साक्षात्कारः? कीदृशश्च लयरूपः समाधिः? एत-दर्थ-मुत्तरो ग्रन्थ आरभ्यते, मनो हि द्विविधमित्यादिना(१८-पृ०)। तयोर्लक्षणमाह, शुद्धमिति। कामात् सङ्कल्पयते तत

कामसङ्कल्पम्। मनसो 'मुक्तिः'(१८पृ०) लयः, 'हृदि' हृत्कमले 'उन्मनीभावः' निःसङ्कल्पता; तदुक्तम्। "यो मनः-सुस्थिरीभावः सा चावस्था मनोन्मनी" इति। नैवेति। आद्यपादे विधेयद्वयम्, द्वितीयपादे क्रमेणोद्देश्यद्वयम्।

ननु मनः कथं निर्व्विषयं स्यात्? तत्त्वस्य चिन्तनीयत्वात्, अतत्त्वस्य च विस्मरणीयताच्च, इत्यत आह, अचिन्त्यमिति(१८पृ०)। 'अचिन्त्यं' चिन्तयितुमशक्यं यत् तत्त्वं, तन्नैव चिन्त्यम् अविषयत्वात्, 'चिन्त्यमेव' सर्व्वदा चिन्तयितुं योग्यमेव यत् विषयजातं तदचिन्त्यम्(१) चिन्तयितुमयोग्यं विस्मरणीयं नास्ति, अवस्तुत्वात् न स्मर्त्तव्यं नापि विस्मर्त्तव्यम् किञ्चिदस्तीत्यर्थः। 'पक्षपातस्तु' तत्त्वचिन्तनम्, अतत्त्वविस्मरणञ्च, तेन(२) 'विनिर्मुक्तं' रहितं यदा भवति, तदा ब्रह्म सम्पद्यते।

प्रथमाधिकारिणं प्रत्याह, स्वरेणेति(१८पृ०)। 'स्वरेण' शब्देन गुरूपदेशेन प्रणवेन वा 'योगं' चित्तनिरोधं 'सन्धयेत्' आरभेत, 'अस्वरं' शब्दातीतं 'परं' वस्तु "भावयेत्' चिन्तयेत्। 'भावेन' भाव्यमानेन चिन्त्यमानेन 'भावः' वस्तु परं ब्रह्म, 'अभावः' शून्यं नेष्यते, किन्तु अस्तीति 'इष्यते' गम्यते; इष गतौ; ब्रह्म-साक्षाद्भवतीत्यर्थः। ये गत्यर्थास्ते ज्ञानार्थाः। अथवा 'स्वरेण' अकारोकारोपलक्षितेन(३) जाग्रत्-स्वप्नाख्येन योगं कुर्य्यात्, अत्रातिशयेन जाग्रत्-स्वप्नेऽपि तदभ्यास-सम्भवात्, 'अस्वरं' मकारोपलक्षितम् आनन्दस्थानम् 'परम्' अग्रेतनम्

(१) ख, तच्चिन्त्यं। (२) क, ख, ताभ्यां।

(३) ख, अकारोपलक्षितेन।

भावयेत् । 'अस्वरेण' मकाराख्येन भावेन मात्रया 'नाभावः' अभावो न,(१) किन्तु पूर्णो 'भावः' तुरीयम् 'इष्यते' गम्यते इति ; तदुक्तममृतविन्दौ,

"अस्वरेण मकारेण पदं सूक्ष्मञ्च गच्छति" इति ।

तदेवेति(१८पृ०) यत् साक्षात् भवति, तदेव ब्रह्म, नतु तदेव(२) नैवमिति शक्यते । 'निरोधः' मरणम्, 'शासनम्' उपदेशः ; न मुक्तिश्च इति । 'एषा' इति पदच्छेदः इदमर्थको निपातः,(३) यद्वा, इत्येषा चेद्बुद्धिः, तर्हि 'परमार्थता' सत्यार्थज्ञता सम्पन्नेत्यर्थः । 'व्यतीतस्य' निष्क्रान्तस्य अधिकारिणः, 'नभोपमः' आकाशतुल्यः;(४) छान्दसः सन्धिः; नभशब्दोऽकारान्तः । 'भिद्यमानं' देहजालं, 'नित्यशः' नित्यम् आत्मानं स जानाति ; द्वितीयान्तात् स्वार्थे शस्प्रत्ययः । शब्देति । शब्दमात्रं या माया न वास्तवी, "वाचा रम्भणम्" इति श्रुतेः; तया आवृतो यावत्, तावत् 'पुष्करे' हृत्-पुण्डरीके तिष्ठति । 'भिन्ने' ज्ञानेन निवृत्ते 'तमसि' अज्ञाने एकत्वं भवति, एकमेव च अनुपश्यति ;

"पुष्करं पङ्कजे व्योम्नि पयः-करिकराग्रयोः ।
ओषधीद्वीप-विहग-तीर्थ-रागोरगान्तरे ।
पुष्करं तुर्य्यवक्त्रे च काण्डे खड्गफलेऽपि च" ॥

इति विश्वः ।

---

(१) क, न भावः अभावो न । (२) ख, नतु देवं । (३) क, नियतः ।

(४) 'घटोपमः' इत्यत्र 'नभोपमः' इति पाठो घ, ङ, चिह्नित पुस्तकद्वये दृष्टः, स एव च दीपिकाकारेण व्याख्यातः ।

शब्दाक्षरमिति(१८पृ०)। शब्दश्च तदक्षरश्च 'शब्दाक्षरं' शब्दब्रह्म इत्यर्थः, तथा 'परं' ब्रह्म चैतन्यञ्च, एतद्द्वयं वर्त्तते। विद्वान्' पण्डितः, एतयोर्मध्ये यस्मिन् क्षीणे सति यत् 'अक्षरम्' अक्षीणं भवति,' तत् अक्षरं यदि 'ध्यायेत्' (२०पृ०) चिन्तयेत्, तथा यदि 'इच्छेत्' वाञ्छेत्; तर्हि शान्तिम् आप्नुयात्,(१) नान्यथा, तदेव स्पष्टयति, हे इति। 'निष्णातः' कुशलः; "निनदीभ्यां स्नातेः कौशले" इति षत्वम्। विद्यास्नात इत्यर्थः। 'मेधावी' ग्रन्थाभ्यासेन कृतबुद्धिः 'ज्ञानं' शाब्दं 'विज्ञानं' साक्षात्कारः, उभयोः 'तत्त्वतः' तत्त्वं ज्ञात्वा, 'ल्यबर्थे(२) पञ्चमी। गवामिति। 'गवां' सौरभेयीणाम् अनेकवर्णानामपि सतीनां यत् क्षीरं, तस्यैकवर्णता भवति, विद्वान् ग्रन्थेषु क्षीरवज्ज्ञानं 'पश्यति' परीक्ष्य गृह्णाति; यथा 'लिङ्गिनः' वेशधारिणः आभीराः गवां क्षीरं गृह्णन्ति, तद्वत्।

सदृष्टान्तं ज्ञेयस्य(३) ग्रहणोपायमाह, घृतमिवेति(२०पृ०) ज्ञाननेत्रमिति। 'ज्ञानं' शास्त्रोत्थं, तदेव 'नेत्रं' दृष्टिः, तत् 'समादाय' शास्त्रतो गुरुतश्च गृहीत्वा ततः परं 'वह्नि' वैश्वानरम् अनुभवरूपं 'चरेत्' साधयेत्। साक्षात्कारस्य वह्निता शास्त्रे प्रसिद्धा; यथा,

"ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुतेऽर्जुन" इति।

---

(१) 'शान्तिमात्मनः' इत्यत्र 'शान्तिमाप्नुयात्' इति पाठः घ, ङ, चिह्नितमूलपुस्तकद्वये विद्यते। स एव च दीपिकाकृता व्याख्यातः।

(२) क, ल्यप्ये। ख, लब्धोपि।

(३) ख, ज्ञानस्य।

यद्वा 'वह्निं' प्रणवं 'चरेत्' उच्चरेत्; वक्ष्यति च, अग्निं शब्दमेवानुचिन्तयेत्। ओमित्येकाक्षरं ब्रह्मेति। शब्दस्याग्निता मुखजत्वात् "मुखादग्निरजायत" इति श्रुतेः, प्रकाशकत्वाच्च।

अनुभवस्य विषयमाह निष्कलमिति(२० पृ०)। अनुभवस्य स्वरूपमभिनीय दर्शयति, तदिति। 'तत्' ज्ञानं ब्रह्माहमित्येवमाकारं स्मृतम्। सर्व्वेषां भूतानामधिवासोऽस्मिन् सर्व्वभूताधिवासं यच्च भूतेष्वधिवसति, यस्मादधिकमिति सप्तमी, सर्व्वानुग्रह-कर्त्तृत्वेन वासुदेव इति प्रसिद्धं तदहमस्मि, स एव वासुदेव इति प्रसिद्धं तदहमस्मि, स एव वासुदेव ईश्वरोऽपि, जीवेश्वरयोर्ब्रह्मणैक्यमित्यर्थः। द्विरुक्तिः समाप्त्यर्था।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानां दीपिका ब्रह्मविन्दुके॥

इति ब्रह्मविन्दूपनिषद्दीपिका सम्पूर्णा॥ ४॥

---

# अथामृतविन्दूपनिषदो दीपिका।



अमृतस्य यथा विन्दुर्मृत्युं हरति देहिनाम्।
अल्पग्रन्थोऽप्यष्टखण्डोऽमृतविन्दुस्तथा ह्ययम्॥ १॥

योगसाधनस्य प्रथमां पीठिकामाह, शास्त्राणीति(२१पृ०)। मेधावीति। अध्ययनेन तर्काभ्यासेन मेधापि कर्त्तव्या इत्यर्थः। यच्छ्रुतिः।

"पण्डितो मेधावीति, बाल्यञ्च पाण्डित्यञ्च निर्विद्येति च"। स्मृतिरपि।

"यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः" इति। ब्रह्म-विद्यायाः परमं कारणं जीवितमिति शेषः। 'उल्कावत्' चञ्चलं विद्युदुन्मिषित-तुल्यं जीवितम्, 'अन्यथा' प्रकारान्तरेण कामव्यसनादिना 'नोत्सृजेत्' न क्षिपेत्, शास्त्राण्यधीत्येत्येतदर्थ-साक्षात्काराय प्रयतेत; प्रयत्नश्च वक्ष्यमाणो योगाभ्यासः। यद्वा, ब्रह्मविद्यायाः 'परमं' कारणम् अध्ययनम् 'अन्यथा' ज्ञान-मप्राप्य नोत्सृजेत्, 'उल्कावत्' दीपिकावत्; यथा दीपिका तमसि मार्गं गृहीता गृहमप्राप्य नोत्सृज्यते, तद्वत् शास्त्रं साक्षात्कार-पर्य्यन्तं नोत्सृजेदित्यर्थः। ओङ्कारं रथं गतिहेतु-

त्वात्, रथः ओंकारः; 'विष्णुम्' उकारदेवतां सारथिं कृत्वा; स हृद्गतो प्रेरकः, तेन सारथ्यं सम्भवति। अकार-देवता यो ब्रह्मा, तस्य यः 'लोकः' ब्रह्मसदनं, तस्य 'पदं' मार्गः, तदन्वेषणशीलः, मकारदेवता यो रुद्रः, तदाराधने 'तत्परः' परायणः।

तावदिति (२१पृ०)। 'रथेन' ओङ्कारेण तावद्गन्तव्यं, यावत् 'रथपथि' गन्तव्यं गच्छन् तन्मार्गे स्थितः; समासान्तविधेरनित्यत्वादप्रत्ययो न कृतः। स्थित्वेति(१)। यदा तदेत्यध्याहारः; यदा रथस्य पन्थाः रथपथः; समासान्तोऽकारः; तस्य 'स्थानं' स्थितिः निवृत्तिर्भवति; अत्र तिष्ठतिर्निवृत्तौ वर्त्तते; तदा 'स्थित्वा' कियत्कालं विलम्ब्य रथम् 'उत्सृज्य' त्यक्त्वा 'गच्छति' साध्यसाधनभाव-रहितं स्थानं प्रविशतीत्यर्थः, साकारोपसना-परिवासित-चेतसो यतयो ब्रह्मपदवीमनुप्राप्य प्रव्रजन्तीति श्रुतेः। 'मात्राः' अकारादयः, तासां 'लिङ्ग' जागरितस्थानो वहिः प्रज्ञः सप्ताङ्ग इत्यादि, तस्य 'पदं' स्थानं जागरादि त्यक्त्वा 'शब्देन' स्वरेण 'व्यञ्जनेन च' मकारेण(२) 'वर्जितं' रहितं(३)। 'अस्वरेण' स्वरातिरिक्तेन मकारेण अन्तरङ्ग-साधनेन 'सूक्ष्मं पदं' तुरीयाख्यं गच्छति।

शब्दादीति। (२१पृ०) शब्दादीनि पञ्च 'विषयाः' तदुपलक्षितानीन्द्रियाणि 'अतिचञ्चलं' सर्व्वेन्द्रिय-विषयव्यापि मनश्च

---

(१) स्थित्वा इत्यत्र; स्थित्वा इति पाठो घ,ङ, चिह्नित मूलपुस्तकद्वये दीपिकायाञ्च दृश्यते।

(२) क, चर्म्मकारेण, ख,चकारेण।

(३) 'शब्दव्यञ्जन-वर्जिता' इत्यत्र 'शब्दव्यञ्जन-वर्जितं' इति घ,ङ, चिह्नित मूल पुस्तकद्वय दीपिकायाञ्च विद्यते।

'आत्मनः' सूर्य्यस्थानीयस्य, रश्मय इति, 'चिन्तनम्' आत्मैक्यापादनमिति यावत्, स प्रत्याहार इत्यर्थः; तदुक्तं याज्ञवल्क्येन ।

"यद्यत् पश्यति तत्सर्व्वं पश्येदात्मानमात्मनि ।

प्रत्याहारः स च प्रोक्तो योगवद्भिर्महात्मभिः" ॥ इति ।

प्रत्याहार इति (२१पृ०)। यम-नियमासनानि तु वाह्याङ्गत्वात् न गणितानि(१)। यम-नियमौ तु;

"अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः ।

आस्तिक्यं ब्रह्मचर्य्यञ्च मौनं स्थैर्य्यं क्षमाभयम् ॥

शौचं जपस्तपो होमः श्रद्धातिथ्यं सुरार्च्चनम् ।

तीर्थाटनं परार्थेहा तुष्टिराचार्य्य-सेवनम् ।

एते यमाः सनियमा उभयोर्द्वादश स्मृताः"(२) ॥

इति द्रष्टव्यौ। 'तर्कः' मननं 'समाधिः' निदिध्यासनं 'रुचिरं' मनोहरं गुरूपदिष्टं रूपं 'चिन्तयेत्' ध्यायेत्। रुचिर इति (२२पृ०)। 'रुचिरे' चिन्त्यमाने सति रेचकं कुर्य्यात्; चकारात् कुम्भकम्; तथा वायोः 'आकर्षणम्' अन्तर्नयनं कुर्य्यात्।

प्राणायामत्रयं कुर्य्यादित्याह, प्राणायामा इति(२२पृ०)। 'प्राणायामाः' निरोधाः 'त्रयः' त्रिविधाः। प्राणायाम-मन्त्रमाह, सव्याहृतिमिति। व्याहृति-शिरसोरपि सप्रणवत्वं बोद्धव्यम्; तदुक्तम्;

"एता एतां सहैतेन तथैभिर्दशभिः सह ।

त्रिर्जपेदायत-प्राणः प्राणायामः स उच्यते" ॥ इति ।

---

(१) ख, न गणितानि पश्चात् आख्यात वासनानि ।

(२) नियमस्य द्वादशत्वमस्मिन् वचने न दृश्यते; अतो वचनमिदमशुद्धमिति सुधीभिर्ज्ञेयम् ।

'एताः' सप्त व्याहृतीः, 'एतां' गायत्रीम्, 'एतेन' शिरसा, 'एभिः' प्रणवैः; शक्तौ सत्यां त्रिः पठेत्,(१) अशक्तौ तु सकृत्पठेत् ।

प्रत्येकं रेचकादीनां लक्षणमाह, उत्क्षिप्येति, (२२पृ०) । वायुम् 'उत्क्षिप्य' ऊर्द्ध्वं नीत्वा 'आकाशम्' उदरं कृत्वा 'निरात्मकं' प्राणरहितम्;

"आत्मा देह-मनो-ब्रह्म-स्वभाव-धृति-बुद्धिषु । प्रयत्ने वापि" इति, अपि-शब्दात् प्राणे चेति विश्वाभिधानात् । 'आत्मानं प्राणं' शून्यत्वेन योजयेत्, स रेचक इत्यर्थः ।

अनुच्छ्वसेदिति(२२पृ०) । नञस्तिङा समासः । उच्छ्वासानुच्छ्वासौ न कुर्य्यात्; किन्तु निगरण-लक्षण-मनुच्छ्वासमेव कुर्य्यात्, स एव गृह्णीत इत्युक्तत्वात् । वक्त्रेणेति । उत्पलस्य नालमिव वायुसञ्चार-हेतुत्वात्, तादृशेन वक्त्रेण वायुं 'निराश्रयं' वहिर्निर्गतं कृत्वा यदवस्थानं स कुम्भकः; प्रकारान्तरेण कुम्भकः एवमिति । यथा वहिः कृतः, तथा वक्त्रेण 'ग्रहीतव्यः' अन्तर्नेयः । नीत्वा रोद्धव्य इति द्विविधं कुम्भकस्य लक्षणम्; तदुक्तम् ।

"पूरणादि-रेचनान्तः प्राणायामस्तु वैदिकः ।
रेचनादि-पूरणान्तः प्राणायामस्तु तान्त्रिकः" ॥ इति ।

प्रत्याहार-प्राणायामयोर्लक्षणे उक्त्वा धारणां लक्षयितुं तदधिकारिणं शान्तं लक्षयति, अन्धवदिति (२२पृ०) । 'पश्य' हे शिष्य! इति श्रुतेर्वचः; 'ते' तव स्वीयं देहं काष्ठवत् पश्य निर-

(१) त्रिः पठेदित्यनन्तरं क,चिह्नित-पुस्तके 'पूरकादि लयेण' इति, ख, चिह्नित पुस्तके 'कुम्भकस्तू क्तादितरौ' इति पाठद्वयं दृश्यते ।

भिमानितया; प्रशान्तस्यापीति(१)। इदमेव लक्षणम्; अन्यस्य यथा रूपाद्विकारो न भवति, तद्वत् यस्य रूपदर्शनेऽप्यविक्रियं मनः, काष्ठवत् देहेऽप्यास्थारहितः, स प्रशान्त इत्यर्थः। मन इति(२२पृ०)। 'मनः' मानसं 'सङ्कल्पकं' सङ्कल्पकर्तृ 'ध्यात्वा' विचिन्त्य 'आत्मनि' बुद्धौ प्राणे वा सङ्‌चिप्य 'आत्मानं' प्राणं बुद्धिं वा 'धारयित्वा' स्थिरीकृत्य यत् तिष्ठति(२) सा धारणा उक्ता।

चतुर्णां लक्षणमुक्त्वा शिष्टयोस्तर्क-समाध्योराह, आगमस्येति(२२पृ०)। आगम-विरोधिन ऊहने बाह्यता-प्रसङ्गात्; यं(३) 'लब्ध्वा' प्राप्यापि दृष्ट्वापि 'अवमन्येत' अवजानीयात् यदर्थेऽपि(४) शब्दादिष्टमिति लभ्यते, यं प्राप्य सर्व्वमन्यत् न रोचते, स समाधिरित्यर्थः, "यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः" इति गीतोक्तेः। 'मनोमयीम्'(२३पृ०) आत्मचिन्तनरूपां चक्रमन्त्रादिना दिग्बन्धादिरूपां वा 'मण्डलं' मण्डलब्राह्मणम् आदित्यदेवत्यं "यदेतन्मण्डलं तपति" इत्यादिरूपम्। पद्मकमिति। पद्मकादीनां लक्षणानि योगयाज्ञवल्क्ये(५) उक्तानि।

"ऊर्व्वोरुपरि विप्रेन्द्र! कृत्वा पादतले उभे।
पद्मासनं भवेदेतत् सर्व्वेषामपि पूजितम्॥
जानूर्व्वोरन्तरे सम्यक् कृत्वा पादतले उभे।
ऋजुकायः समासीनः स्वस्तिकं तत् प्रचक्षते"॥ इति।

तत्रैव प्रकारान्तरेण स्वस्तिकमुक्तम्।

"सीवन्यामात्मनः पार्श्वे गुल्फौ निक्षिप्य पादयोः।

(१) ख, प्रशान्तस्य अन्यस्यापीति। (२) क, यः तिष्ठति। (३) क, लं। (४) ख, पदार्थेऽपि। (५) क, योगि—याज्ञवल्क्येन।

सव्ये दक्षिण-गुल्फन्तु दक्षिणे दक्षिणेतरम्।
एतच्च स्वस्तिकं प्रोक्तं सर्व्वपाप-प्रणाशनम्" ॥ इति।
"गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत्।
पार्श्व-पादौ च पाणिभ्यां दृढ़ं बद्ध्वा सुनिश्चलम्।
भद्रासनं भवेदेतत् सर्व्वव्याधि-विषापहम्" ॥ इति
'योगासनं' सिद्धासनम्; तदुक्तं हठप्रदीपिकायाम्।
योनिस्थानक(१) मङ्घ्रिमूल-घटितं कृत्वा दृढ़ं विन्यसेत्
मेढ़्रे पादमथैकमेव नियतं कृत्वा समं(२) विग्रहम्।
स्थाणुः संयमितेन्द्रियोऽचलदृशा(३) पश्यन् भ्रुवोरन्तरं
चैतन्मोक्ष-कपाट-भेदजनकं सिद्धासनं प्रोच्यते ॥ इति।

मतान्तरे च।

"मेढ्रादुपरि विन्यस्य सव्यं गुल्फं तथोपरि।
गुल्फान्तरञ्च निक्षिप्य सिद्धासनमिदं भवेत् ॥
एतत् सिद्धासनं प्राहुरन्ये वज्रासनं विदुः।
गुप्तासनं वदन्त्यन्ये प्राहुर्मुक्तासनं परे(४) ॥
यमेष्विव मिताहारोऽप्यहिंसा नियमेष्विव।
मुख्यं सर्व्वासनेष्वेकं(५) सिद्धाः सिद्धासनं विदुः ॥

---

(१) क, योनिर्द्वारक; ख. योनिद्वारक; हठप्रदीपिकायान्तु योनिस्थानकमिति।

(२) क, हृदये धृत्वासनं; ख, हृदये धृत्वा समं; हठप्रदीपिकायान्तु नियतं कृत्वा समिति।

(३) क, वलदृशा, ख, ऽचलदृशा, हठप्रदीपिकायान्तु ऽचलदृशा इति।

(४) ख, प्रिये!; हठप्रदीपिकायन्तु, मुक्तासनं वदन्त्येके प्राहुर्गुप्तासनं परे' इति पाठः। (५) क, ख, सर्व्वासनेष्वेव।

चतुरशीति-पीठेषु सिद्धमेव सदाभ्यसेत्।

द्वि-सप्तति-सहस्रेषु सुषुम्नामिव नाड़िषु"(१)॥ इति।

योगार्थमासनमिति वा। उत्तरेति(२३पृ०)। योगस्य उत्तरमार्ग-प्रदत्त्वात्। नासिकेति। एकं नासिकापुटम् अङ्गुल्या पिधाय 'एकेन' पार्श्वेन 'मारुतं वायुम् आकृष्य 'धारयेत्' अन्तः स्तम्भयेत्, 'अग्निं' तेजोमयम्, अर्थप्रकाशकञ्च शब्दमेव अभि-चिन्तयेत्।

कं शब्दम? इत्यपेक्षायामाह, ओमित्येकाक्षरमिति(२३पृ०)। ओमित्येतेनैव मन्त्रेण 'एकेन' पूरणातिरिक्तेन(२) पार्श्वेन रेचयेत् वायुं; तदुक्तम्।

"बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत्।

धारयित्वा यथाशक्ति पुनः सूर्य्येण रेचयेत्"। इति।

'दिव्यमन्त्रेण' प्रणवेन 'आत्ममल-च्युतिं' शरीरमल-नाशं नाड़ीशुद्धिं, प्राणायामैर्नाड़ीमलाः शुष्यन्तिः, ततस्तासु वायु-प्रचारो भवति। 'आत्ममलः' पापं, तस्य 'च्युतिं' नाशम् इति वा; तदुक्तम्।

"नित्यमेवं प्रकुर्व्वीत प्राणायामांस्तु षोड़श।

अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः"॥ इति।

'पश्चात्' प्राणायामैः पापं दग्ध्वा 'ध्यायेत' चिन्तयेत् 'पूर्वोक्तं' शब्दमेवाभिचिन्तयेदित्युक्तं, 'क्रमशः' अनुक्रमेण अकारोकार-मकारार्द्धमात्राः लोक-वेद-देवाग्न्यादि-सहिता घोषिण्यादिमात्राः

(१) 'द्वासप्तति-सहस्राणां नाड़ीनां मलशोधनम्'-इति हठप्रदीपिकायां पाठः।

(२) क. पूर्वकातिरिक्तेन।

क्रमसहिताश्च 'ध्यायेत' चिन्तयेत्, 'मन्त्र' मन्त्रं 'निर्दिशेत्' उच्चरेत्; अत्र मन्त्रेत्यविभक्तिको निर्देशः(१)। स्थूलेति। 'स्थूलमात्रा' अशीति-प्रणवावृत्तिपर्य्यन्तं धारणम्; तदुक्तम्।

"प्रातर्मध्यदिने सायमर्द्धरात्रे च कुम्भकान्।
शनैरशीति-पर्य्यन्तं चतुर्व्वारं समभ्यसेत्"॥ इति।

'अतिस्थूलां' ततोऽप्यधिकाधिकं धारणम्; एवं स्थूलायां मात्रायाम् अतिस्थूलायाञ्च मात्रायाम् 'अतिम्' अतिशयम् ऊर्द्धं नयेत्, मात्रास्वतिशयं न कुर्य्यादित्यर्थः। कस्मात् न कुर्य्यात्? प्रत्युत अतिशये शीघ्रं सिद्धिर्भवति? इत्यत आह, अतिक्रम इति (२३पृ०)। एवं हि वायोरतिक्रमे दोष उक्तः,

"हिक्का श्वासश्च कासश्च शिरः-कर्णादि-वेदना।
भवन्ति विविधा दोषाः पवनस्य व्यतिक्रमात्"॥ इति।

तिर्य्यगिति (२३पृ०)। 'तिर्य्यक्' अग्रे धावन्तीम् 'ऊर्द्धम्' आकाशगामिनीम् 'अधः' वा चरणन्यस्तां 'दृष्टिं' नेत्रकान्तिं 'विनिधार्य्य' धृत्वा 'महामतिः' स्थूललक्ष्यः, 'स्थिरः' चित्तेन, 'स्थायी' दृढ़ासनः। दृष्टेस्तिर्य्यक्त्वमुक्तम्।

"अन्तर्लक्ष-वहिर्दृष्टि र्निमेषोन्मेष-वर्जिता।
एषा हि शाम्भवी मुद्रा सर्व्वतन्त्रेषु गोपिता"॥ इति।

ऊर्द्धत्वमप्युक्तम्।

"भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी"। इति।

---

(१) 'क्रमात्मन्त्रं विनिर्दिशेत्' इत्यत्र घ, ङ, चिह्नितपुस्तकद्वये 'क्रमशो मन्त्रनिर्द्दिशेत्' इति पाठः, स एवच नारायणेन व्याकृतः।

अधस्तनमप्युक्तम्।

"दृष्ट्या निश्चलतारया वहिरधः पश्यन्" ॥ इति।

'विनिष्कम्पम्'(१)(२३पृ०)विशेषेण निष्कम्पम् 'योगम्' उत्तमं योगं तदा अभ्यसेत्। निष्कम्पोऽप्युत्तमो योगः, सकम्पो मध्यमः, सखेदः कनीयान्; तदुक्तम्।

"कनीयसि भवेत् खेदः कम्पो भवति मध्यमे।
उत्तिष्ठत्युत्तमे प्राणरोधे पद्मासनं मुहुः" ॥ इति।

कम्पात् 'निष्क्रान्तः' अग्रेगतः, निष्कम्पः उत्तमः, विशेषेण निष्कम्पः अत्युत्तमः, तं समभ्यसेत्।

तालेति (२३पृ०)। अयं पदार्थो योगशास्त्रे 'कालतः' कालेन 'नियतः' एकरूपः स्मृतः। कः पदार्थः? एकतालो वायोः कालतवहिः स्थूलस्य मध्ये प्रवेशः,(२)मध्यस्थस्य च वहिरनिर्गमनं, सा नियतकाला भवति; यावत् काला पूर्वदिने, तावत्कालेव परदिने, इति मात्रा नियतकाला भवति; अन्यथा कल्पपर्य्यन्तं भूविवरे भवति(३)।

षोड़श पूरणे चेत्, चतुःषष्टिः कुम्भने, द्वात्रिंशत् रेचने इति; 'योगः' समाधिः, सोऽपि नियतकालः; अन्यथा कल्पपर्य्यन्तं भूविवरे समाधिस्थस्य(४) विदेह-कैवल्याभाव-प्रसङ्गः। 'धारणा' मनःसङ्कल्पकमित्यादि-लक्षणा, सापि "धारयेत पञ्च घटिका भवरोगे-

---

(१) 'विनिष्कम्पः' इत्यत्र 'विनिष्कम्पम्' इति पाठो घ, ङ, चिह्नित मूलपुस्तकद्वय दीपिकायाञ्च विद्यते।

(२) ख, मध्ये मध्यस्थ प्रवेशः। (३) ख, भुवि भवति।

(४) ख, समाधिमानस्य।

विमुच्यते" इत्यादौ नियतकालैवोक्ता; 'योजनं'(२३पृ०) संयोजनं प्राणापानयोः; यथा पूर्वदिने चेत् षोडश प्राणायामाः, तर्हि परदिने ततो न्यूना अधिका वा न भवन्ति। द्वादशमात्रो योगी नाड़िविन्यावृतः, सोऽपि कालतो नियतः स्मृतः; परस्पर-तुल्य-काला एव षोषिण्यादयो ध्येया इत्यर्थः। अथ च तालादिः(१) फलेऽपि कालतो नियतः स्मृतः, नियतकालमेव फलं ददाति परिच्छिन्नं, न तु कालापरिच्छिन्नं फलं ददातीत्यर्थः।

तर्हि कालापरिच्छिन्नं फलं किम्? इत्यत आह, अघोषमिति (२३पृ०)। यदक्षरं तदपरिच्छिन्नफलमित्यर्थः, तत् किमकारा-दिष्वन्यतरत्? न इत्याह, 'अघोषं' वर्गाणां प्रथमाः, द्वितीयाः, श-ष-साश्चाघोषाः; ततोऽन्ये घोषाः; तन्न भवति। तर्हि फल-व्यञ्जनं तद्रूपं नेत्याह, अव्यञ्जनमिति। तर्हि अचः स्वरास्तद्रूपं नेत्याह, अस्वरमिति। न स्वरत्वं यस्य तदस्वरम्। तर्हि अ-कु-ह-विसर्जनीयानां कण्ठः, 'इ-चु-य-शानां तालु, उ-पूपध्मानीयाना-मोष्ठौ, तद्रूपं नेत्याह, अकण्ठताल्वोष्ठम्, अस्वरञ्च, अकण्ठोत्-पन्नाविवक्षितत्वादसन्धिः; सन्धौ तु न्यूनाक्षरं छन्दः स्यात्। तर्हि नासिकानुस्वारस्य तद्रूपं नेत्याह, अनासिकञ्चेति। तर्हि ऋ-टु-र-षाणां मूर्द्धा, तदन्तर्भूतं नेत्याह, अरेफेति। 'रेफजातं' रेफवर्गो मूर्द्धन्यः, तन्न भवतीत्यर्थः। तर्हि ऌ-तु-ल-सानां दन्ताः, तद्रूपं नेत्याह, उभयोष्ठवर्जितमिति। उभौ 'ओष्ठौ' आवरकौ यस्य उभयोष्ठो दन्तः, तेन तदुच्चार्यौ वर्णाः, तन्न भवतीत्यर्थः। यद्यप्य-व्यञ्जनमस्वरमिति वर्णमात्रं प्रतिषिद्धम्, एतावन्तो हि वर्णाः,

(१) ख, विषयतालादिः।

यद्यप्यङ्गानि स्मरन्ति, तथापि सामान्यतो विशेषतश्च प्रतिषेधार्थमवोषाद्युपादानम्।

तर्हि किं तदक्षरं? यस्य(१) लक्षणं वक्तव्यम्, इत्यत आह, न क्षरते कदाचिदिति(२३पृ०)। नादान्तस्थं परं शान्तमित्यर्थः, यत्प्रतिपादनादमृतबिन्दुरिति ग्रन्थाभिधा। अत्रेत्थं योगप्रक्रिया(२)। यम-नियमाभ्यां क्षपित-वाह्यदोषः, निर्व्वाते तीर्थादिदेशे सिद्धक्षेत्रे वा सिद्ध-स्वस्तिक-पद्म-भद्र-सिंहाद्यन्यतमदासनमालम्ब्य नियतभुक्,

धौतिर्वस्तिश्च नेतिश्च(३) त्राटकं नौलिका तथा।
कपालभाति(४) श्चैतानि षट्कर्म्माणि प्रचक्षते॥

इत्युक्तैः कर्म्मभिः प्राणसंयमैरेव वा शुद्धनाडीगणः, प्राणायामाभ्यासेन सिद्धकेवल-कुम्भकः, अङ्गुष्ठादि-मूर्द्धान्त-मर्म्म-प्रदेशेषु प्राण-मनो-धारणाभिः प्रत्याहृतेन्द्रियगणः, पृथिव्यादि-पञ्चधारणाभिः शुद्धभूत-भौतिक-तत्त्वः, सगुण-निर्गुण-ध्यानैः क्षपिततमोमलः, उन्मनीभाव-लक्षणं समाधिमारुरुक्षुः, षट्चक्र-भेदेन द्वादशान्तं ब्रह्मरन्ध्रमातिष्ठेत्। तत्प्रकारस्तु मूलबन्धोड्डियानबन्ध-(५) जालन्धरबन्धैः महाबन्ध-(६) महावेध-शक्तिचालनैश्चापानस्थमपानवायुमूर्द्ध्वमाकृष्य,(७) तेन मूलाधारगतं(८) त्रिकोणस्थमग्निं प्रज्वाल्य, तेन कन्दोत्थां कुण्डलीं सर्पाकारां पश्चिम-देहभागेन

(१) क, ख, तस्य।
(२) क, योग्यप्रक्रिया। (३) क, नौतिश्च। (४) ख, कपालभाभि।
(५) क, मूलबन्धोड्डियामबन्ध-। ख, मूलबन्धोड्डिकाणबन्ध-।
(६) ख, महावध। (७) ख, माकृष्यात
(८) ख, मलाधार अगत्।

पूर्वदेहभागमष्टधावेष्ट्य, मुखेन पुच्छं गृहीत्वा, मुखञ्च सुषुम्णा मुखे प्रवेश्य, सुप्तां प्रताप्य, तानेन प्रबोध्य, रोधने सुषुम्णा(१)मुखं विरलीकृत्य, प्रसार्य्य, तत्र सान्निध्यिकं वायुं मनसा प्रवेश्य, वंशदेशस्थ-वंशाकृति-सुषुम्णायाः पर्वस्थानीयानि चक्राणि ओङ्कारं समुच्चरन्, मनसा विष्णुचिन्तन-सनाथेन वाय्वग्नि-सहायेन भिन्दानो, मूर्ध्नि सहस्रदलमाक्रामेत्, इति। तदुक्तं हंसोपनिषदि। "तं विदित्वा न मृत्युमेति; गुदमवष्टभ्य, आधाराद्वायुमुत्थाप्य, स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य, मणिपूरकञ्च गत्वा, अनाहतमतिक्रम्य, विशुद्धौ प्राणान् निरुध्य, आज्ञामनुध्यायन(२) ब्रह्मरन्ध्रं(३) त्रिमात्रोऽहमित्येवं सर्वदा ध्यायन् इति।

न च प्रणापानयोर्युगपन्निरोधे शूल-हिक्काध्मानादि-(४) दोषप्रसङ्ग इति वाच्यम्, गुरूपदिष्ट-बोधत्रयस्य युगपदनुष्ठितस्य महिम्नः, अमृत-मुखस्य महिम्नः, अमृत-मुखस्य जलपूर्ण-घटस्येव दोषानवकाशात्। अस्य च योगस्य फलमक्षरावगतिरूपं स्वरव्यञ्जन-वर्जितमित्युपक्रम्य अघोषमित्यादिना उपसंहृतम्।

षट् कर्म्माणि यथा—

"चतुरङ्गुल-विस्तारं सिक्तं(५) वस्त्रं शनैर्ग्रसेत्।
ततः प्रत्याहरेच्चैतदाख्यातं(६) धौतिकर्म्म तत्॥ १॥

(१) ख, तानेन प्रबोधनेन सुषुम्णा।
(२) ख, विरुध्याज्ञानमनुध्यायन।
(३) ख, ग, ब्रह्मरन्ध्रं ध्यायन।
(४) क, ध्मानादि।
(५) हठप्रदीपिकायां 'मृदुम्' इति पाठः।
(६) ख, दक्षिणम्।

नाभिदघ्ने जले पायु(१)न्यस्त-नालोत्कटासनः।
आधाराकुञ्चनं कुर्य्यात् प्रख्यातं वस्तिकर्म्म तत् ॥ २ ॥
सूत्रं वितस्ति सुस्निग्धं नासानाले प्रवेशयेत्।
मुखान्निर्गमयेच्चैषा नेतिः(२) सिद्धैर्निगद्यते ॥ ३ ॥
ईक्षते निश्चलदृशा सूक्ष्मलक्ष्यं समाहितः(३)।
अश्रु-सम्पात-पर्य्यन्तमाचार्य्यैस्त्राटकं मतम् ॥ ४ ॥
अमन्दावर्त्तवेगेन(४) तुन्दं सव्यापसव्यतः।
नतांसो भ्रामयेदेषा नौली गोलैः(५) प्रशस्यते ॥ ५ ॥
भस्त्रेव लोहकारस्य रेच-पूरौ ससम्भ्रमौ।
कपालभाती विख्याता कफदोष-विशोषिणी" ॥ ६ ॥इति।

बन्धत्रयं छुरिकायां व्याख्यातम्। महाबन्धो यथा।

"पार्ष्णिं वामस्य पादस्य योनिस्थाने नियोजयेत्।
वामोरूपरि संस्थाप्य दक्षिणं चरणन्तथा ॥ १ ॥
पूरयित्वा ततो वायुं हृदये चिबुकं दृढ़म्।
निष्पीड्य योनिमाकुञ्च्य मनोमध्ये नियोजयेत् ॥ २ ॥
धारयित्वा यथाशक्ति रेचयेदनिलं शनैः।
सव्याङ्गे च समभ्यस्य दक्षाङ्गे पुनरभ्यसेत् ॥ ३ ॥
मतमत्र तु केषाञ्चित् कण्ठबन्धं विवर्ज्जयेत्।

---

(१) क, पायौ। (२) क, ख, नीतिः।

(३) ख, सुलक्ष्यं सुसमाहितः। (४) क, अमन्दावर्त्तयोगेन।

(५) गाः इन्द्रियाणि तान्नि म्लक्नोति गोला योगिनस्तैः। दीपिकायान्त गौड़ः इति पाठः।

राजदन्तद्वयं तत्र जिह्वयोश्च भवेदिति(१) ॥ ४ ॥
अयं खलु महाबन्धो महासिद्धि-प्रदायकः ।
कालपाश(२) महाबन्ध-विमोचन-विचक्षणः(३) ।
अयश्च सर्वनाडीनामूर्द्ध्वगति-(४) प्रबोधकः" ॥ इति ।

महावेधो यथा ।

"महाबन्धस्थितो(५) योगी कृत्वा पूरकमात्मधीः ।
वायूनां गतिमाकृष्य निभृतं कण्ठमुद्रया ॥ १ ॥
न्यस्त-हस्तयुगो भूमौ निभृतं(६) ताडयेच्छनैः ।
पुटद्वयं समाकृष्य वायुः स्फुरति सत्वरम् ॥ २ ॥
सोम-सूर्य्याग्नि-बन्धाय जायते चामृताय वै ।
मृतावस्था समुत्पन्ना ततो वायुं विरेचयेत् ।
महावेधोऽयमभ्यासान्महासिद्धि-प्रदायकः" ॥ ३ ॥ इति ।

शक्तिचालनं यथा ।

"पुच्छं प्रगृह्य भुजगीं सुप्तामुद्बोधयेद्बुधः ।
निद्रां विहाय सा कृत्वा ऊर्द्ध्वमुत्तिष्ठत हटात्" ॥१॥ इति ।

अन्यत्रापि ।

सन्तप्तो वह्निना तत्र वायुना चालितो यदा ।
प्रसार्य्य फणभृद्भोगं प्रबोधं याति तत्तदा" ॥१॥ इति । ५ ॥

---

(१) क, राजदन्त रूपं तत्र जिह्वयोग्रं भवेदिति ।
(२) ख, कालप्राग्र । (३) क, विलक्षणः ।
(४) क, सर्व्वनाडीमां मूर्द्धागति ।
(५) क, महाव धस्थितो ।
(६) क, निभतिं ; ख, स्फिग्भ्यां नं ।

ननु प्राणस्तत्र तत्र प्रदेशे केनोपायेन नेतव्यः? इत्याह, येनेति (२३पृ०)। 'असौ' योगी 'येन' मनोलक्षणेन करणेन 'मार्गं' गन्तव्यं 'पश्यते' प्रविश्य गन्तव्यतया निश्चिनोति, प्राणः 'तेन' एव मनसा सह तत्र तत्र याति, मनसा तत्तत्स्थान-ध्यानमेव तत्र मूलाधारादौ प्राण-प्रवेशे उपाय इत्यर्थः। यतोऽयं प्राण-प्रवेशे उपाय उपदिष्टः, अतो नित्यं 'सन्मार्ग-गमनाय' सुषुम्णा मार्गप्रवेशाय 'समभ्यसेत्' मनोधारणादि कुर्य्यात्।

ननु येन मनो याति, तेनैव प्राण इत्यवगत उपायः ; तयोर्मार्गः(१) क्वास्ति? इत्यत आह, हृदिति (२३पृ०)। 'हृदः' मनसः 'वायोश्च' प्राणस्य 'द्वारं' प्रवेश-मार्गः, सुषुम्णाख्यमूर्द्धद्वारं वर्त्तते, कण्ठादि मूर्द्धान्तं पृष्ठवंश-गामि सुषुम्णा द्वारमस्तीत्यर्थः। तत ऊर्द्ध्वं किमस्ति? इत्यत आह, अतः परमिति (२३पृ०)। 'अतः' अस्मात् द्वारात्परं मोक्षद्वारविलं शिरो भित्त्वा निर्गतमस्ति, मोक्षस्य 'द्वारम्' उपायो ब्रह्मलोकः, तस्य कामविवरम्।

ननु ब्रह्मलोकस्य क्रममोक्षस्थानत्वात् सूर्य्यमण्डले व्यवधायके सति कथं तत्र गतिः? इत्यत आह, शुषिरं मण्डलमिति (२४पृ०)। सूर्य्यमण्डलस्य सच्छिद्रता; "द्वाविमौ पुरुषौ लोके सूर्य्यमण्डल-भेदिनौ" इत्यादि स्मृतेश्चावसीयते।

योगे वर्जनीयान्याह भयमिति। (२४पृ०)। 'तुल्यविक्रमः' देवैरेव, कैवल्यञ्च ऐश्वर्य्ययुक्तं चुरिकायां प्रदर्शितम्। ६

पञ्चभूत-धारणासु तदतीत-धारणासु च कीदृशं प्रणवस्वरूपं

(१) ख, इत्यवगततयोपायो मार्गः।

ध्येयम्? इति पृच्छन्तं प्रति क्रमेणोत्तरमाह, पार्थिव इत्यादि। 'पार्थिवः' पृथिवीतत्त्व-धारणायामाश्रितश्चेत् प्रणवो भवति, तदा तस्य पञ्चमात्राणि रूपाणि ध्येयानि। 'वारुणः' जलतत्त्व-धारणायामुपास्यत्वेन आश्रितश्चेदित्यर्थः। गन्धाद्येकैकगुण-ह्रासाच्चा-त्राह्रासो द्रष्टव्यः। अर्द्धमात्रन्त्विति। 'तुः' अव्यावृत्त्यर्थः; निरपेक्षीभूय अर्द्धमात्रन्तु चिन्तयितव्यमित्यर्थः।

तर्हि पूर्वेषां चिन्तनानां कोऽभिप्रायः? इत्यत आह, सिद्धिमिति। (२४पृ०)। तत्तत्सिद्धिमभिप्रेत्य तत्तल्लोकजयाय तानि तानि पार्थिवादि रूपाणि 'मनसा' साधनेन 'आत्मना' स्वयम् 'आत्मनि' बुद्धौ चिन्तयेदित्यर्थः। शरीरे पदादिमूर्द्धपर्य्यन्ते ततद्भूतस्थाने तत्तद्भूतस्थान लोक जयी भवति। भूतस्थानादि, यथा।

"भूमिरापस्तथा तेजो वायुराकाश एव च।
एतेषु पञ्चदेवानां धारणा पञ्चधेष्यते॥
पदादि जानुपर्य्यन्तं पृथिवीस्थानमुच्यते।
आजानु पायुपर्य्यन्तमपां स्थानं प्रकीर्त्यते॥
आपायोर्हृदयान्तञ्च वह्निस्थानं तदुच्यते।
आहृन्मध्याद्भ्रुवोर्मध्यं यावद्वायुकुलं स्मृतम्॥
आ भ्रूमध्यात्तु मूर्द्धान्तमाकाशमिति चोच्यते"॥ इति॥

प्राणायाम एकः, आयम्यत्वेन प्राण उक्तः, अग्निहोत्रादावुपास्यत्वेन वैक उक्तः, तयोः को भेदः? इत्यत आह। त्रिंशदिति (२४पृ०)। त्रिंशत्सङ्ख्यकानि पर्व्वाङ्गुलानि मानमस्य त्रिंशत्पर्व्वाङ्गुलः; अङ्गुलान्यनेक-प्रकाराणि सन्ति, तदर्थं पर्व्वेति

विशेषणम्; तिर्य्यक्चतुरङ्गुल-मितस्य काष्ठस्य चतुर्थोऽंशः पर्व्वाङ्गुलं, तदेव मुष्ट्यङ्गुलम्, तदुक्तम्।

"विनाङ्गुष्ठेन शेषाभिर्मुष्टिमङ्गुलिभिः कृताम्।(१)।
चतुर्धा विभजेदेको भागो मुष्ट्यङ्गुलः स्मृतः"॥ इति॥

द्वादशाङ्गुलता, पञ्चदशाङ्गुलता चान्यत्रोक्ता; सा तु मध्यमाङ्गुलि-मध्यपर्व्वमितादि-स्थूलाङ्गुलाभिप्रायेण, श्वासस्य स्थूल-सूक्ष्म-तारतम्याभिप्रायेण वेत्यविरोधः। तथा च याज्ञवल्क्यः।

"शरीरादधिकः प्राणो द्वादशाङ्गुलमानतः।
चतुर्द्दशाङ्गुलं केचिद् वदन्ति मुनिसत्तमाः"। इति।

गोरक्षेण तु षडधिकान्युक्तानि॥

"षट्त्रिंशदङ्गुलो(२) हंसः प्रयाणं कुरुते वहिः।
वाम-दक्षिण-भागेन ततः प्राणोऽभिधीयते"॥ इति।

वामे पञ्चदश, दक्षिणे च तथेति मिलित्वा त्रिंशदिति वा न विरोधः, अयमायम्यत्वेनोक्तः(३) प्राणः, एष प्राणो यत्र 'प्रतिष्ठितः', यदाधारत्वेन महिमानं गतः स प्राण इति 'ख्यातः' उपास्यत्वेन प्रसिद्धः परमात्मा। तटस्थलक्षणमुक्त्वा स्वरूपलक्षणमाह, वाह्येति (२४पृ०)। यो वाह्यः प्राणः स 'गोचरः' विषयः दृश्य इत्यर्थः। अर्थादन्यस्त्वदृश्य इति स्वरूपभेदः।

ननु वाह्यप्राणस्य जन्मायुषि कियान् व्यापारः? इति पृष्टे तस्य परिगणनस्य वह्वायास-साध्यत्वादहोरात्र व्यापार परिगणनमाह, अशीतिरिति। एका अशीतिः षट्शतञ्च, त्रयोदश सह-

(१) क, कृमात्। (२) ख, षड्विंशदङ्गलो। (३) क, समायन्यत्वेनोक्तः।
ख, अर्य्यमायम्यत्वेनोक्तः।

स्राणि च, एको लक्षश्चाहोरात्रेण तावन्निश्वासः। अङ्कतोऽपि, ११३६८०। अनेन मानेन आयुर्निश्वास-प्रमाणं गणनीयम्; स्मृतिविरोधश्चिन्त्यः। तत्र हि "एकविंशति-सहस्राणि- षट् शतानि दिने दिने" इत्युक्तम्। हंसोपनिषदि च षट्सङ्ख्यया एकविंशति-सहस्राणि षट्शतान्यधिकानि भवन्तीति। अत्रान्ते नासिक्य प्राणापेक्षया अन्यत्र ग्रन्थे गणना; इह तु रन्ध्रान्तराणि मुखादीन्यपेक्ष्याधिकसङ्ख्योक्तिः, नासिक्ये प्राणे वहति रन्ध्रान्तरेष्वपि किञ्चिद्वहनं भवति, तेनोक्तसङ्ख्यासिद्धिरित्यविरोधसिद्धिः। यदि तु षट्सङ्ख्ययाधिकानि षट्शतानीति नान्वयः, किन्तु गुणितानीत्यध्याहृत्य षट्सङ्ख्यया गुणितान्येकविंशति-सहस्राणि षट्शतानि चेति व्याख्या, अधिकानीति च किञ्चिदधिकानीत्यशीतिरेवेति व्याख्या। अत्र च दशसहस्राणि लिङ्गव्यत्ययेन त्रयस्त्रीणि, तेन त्रिंशत् सहस्राणि इति व्याख्या आश्रीयते, तदा तुल्यार्नसङ्ख्याभेदः स्यात्।

धारणोपयोगितया प्राणादीनां स्थानान्याह, प्राण इति (२४पृ०)। पञ्च प्राणा वर्त्तन्ते; तेषां मध्ये य आद्यः 'प्राणः' प्रथममननकर्त्ता, स हृदि वर्त्तते इत्यर्थः। नन्वेकः सर्वेष्वङ्गेषु कथं वर्त्तते? अत उक्तं व्याप्त्येति। विशेषेण 'आवृत्य' आवरणमाच्छादनं कृत्वा व्याप्येत्यर्थः। अथ ध्यानोपयोगितया वर्णानाह, अथेति (२५पृ०)। ब्रूम इति शेषः, पञ्चानामेव मुख्यत्वात्। तत्तु[१] नाग-कूर्म्म-कृकर-देवदत्त-धनञ्जयानां दशानामपि भाव्यम्। याज्ञवल्क्येन तु दशानां स्थानानि कर्म्माणि चोक्तानि।

(१) क, तत्र।

७। रक्तेति (२५पृ०)। रक्तवर्णो यो मणिः 'तत्प्रख्यः' तत्-प्रभः। 'तस्य मध्ये' गुदस्य मध्ये, 'इन्द्रगोपः' कीटविशेषः रक्त-वर्णो वर्षासु प्रथमं दृश्यते। समानः 'तस्य मध्ये' नाभिदेशस्य मध्ये 'अर्चिः' वह्निशिखा। योगसाधनस्य प्रयोजनमाह, यस्ये-ति(१) (२५पृ०)। 'मण्डलं' सहस्रदलम् एक ऋषिस्थानं 'यस्य' साधकस्य एष मारुतो मण्डलं भित्त्वा मूर्द्धनि याति मूर्द्धस्फोटेन स यत्र कुत्रापि मृतो मोक्षं यातीत्यर्थः। द्विरुक्तिर्निश्चयार्था। इति शब्दः समाप्त्यर्थः।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्ट-पद-वाक्यानां दीपिकामृतविन्दुके॥ इति

अमृतविन्दूपनिषद्दीपिका समाप्ता॥ ५॥

---

(१) क, तस्येति।

# अथ ध्यानविन्दूपनिषदो दीपिका।



ओं ध्यानविन्दुद्विखण्डेयं विंशाज्ञान(१) प्रधानिका।

ध्यानस्य धारणादिभ्यो यदीत्याह विशिष्टताम्(२) ॥ १ ॥

ध्यानस्य धारणादिभ्यो विशेषं वक्तुमिदमारभ्यते। यदीति (२६पृ०)। विस्तीर्णमिति स्वकार्य्योपलब्ध्या विस्तरो गम्यते; अन्यो 'भेदः' भेदकः नाशकः नास्ति। अत्र यदीत्यतः प्राक् श्लोकद्वयं कैश्चित् पठ्यते, तद्यथा,

"योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया।

यच्छ्रुत्वा च पठित्वा च सर्व्वपापैः प्रमुच्यते ॥ १ ॥

विष्णुर्नाम महायोगी महाकायो महातपाः ॥

तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः" ॥ २ । इति।

ततः "यदि शैलसमं पापम्" इत्यादि। तत्तु योगतत्त्वोपनिषदादिभूतम्, अत्र प्रमादतः पठितम्। वीजेति। 'वीजाक्षरं स्पष्टाक्षरं मकारादि त्रयं पञ्चाशद्वर्णवीजाद्यमिति पीठाब्जकर्णिकायां वर्णानां वीजत्वात् तस्मात्परं 'विन्दुः' विन्द्वक्षरं वर्त्तते; विन्दोः 'परे' भागे 'नादं' नादाक्षरं स्थितम्। तदुक्तं सारदातिलके।

---

(१) ख, विंशतानि। (२) क, यदेत्याह । ख. यदीत्याहाविशिष्टताम्।

"सच्चिदानन्दविभवात् सकलात्(१) परमेश्वरात्।
आसीच्छक्तिस्ततो नादो नादबिन्दुसमुद्भवः" ॥ इति।

अत्र शब्दार्थं सृष्टिद्वारा प्रणवसृष्टिरुच्यते। सनातनं नित्यं ब्रह्म निर्गुणं सगुणञ्च; तत्र निर्गुणं यथा।

नित्यः सर्व्वगतः सूक्ष्मः सदानन्दो निरामयः।
विकार-रहितः साक्षी शिवो ज्ञेयः सनातनः ॥

तथा। निष्क्रियं निर्गुणं शान्तमानन्दमजमव्ययम्।
अजरामरमव्यक्त मज्ञेयं सकलं(२) ध्रुवम्॥
ज्ञानात्मकं परं ब्रह्म स्वयं वेद्यं हृदि स्थितम्।
सत्यं बुद्धेः परं नित्यं निर्म्मलं निष्कलं स्मृतम्" ॥ इति।

सगुणन्तु शक्तिः; यदुक्तम्—

"तच्छक्तिभूतः सर्व्वेशो भिन्नो ब्रह्मादिमूर्त्तिभिः।
कर्त्ता भोक्ता च संहर्त्ता सकलः स जगन्मयः" ॥ इति।

तत्र सृष्टिः क्रमः; आदौ सच्चिदानन्दात्मनः शक्तिः(३) उच्छून-रूपतयाभिव्यक्ता पार्थक्येन व्यवहार्य्या। तदुक्तम्।

"तस्माद्विनिर्गता नित्या सर्व्वगा विश्वसम्भवा"। इति।
तथा। "शिवेच्छया परा शक्तिः शिवतत्त्वैक-सङ्गता।
ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिव" ॥ इति।

तस्याः शक्तेर्नादः, तस्या एवोत्तरावस्थारूपः पुंकालादि-व्यपदेशार्हः। तदुक्तम्।

(१) ख, सकलात्। (२) क, अज्ञेयमकलं। (३) ख, सच्चिदानन्दात्मिका शक्तिः।

"नादात्मना प्रबुद्धा सा निरामय पदोन्मुखी ।
यदा शक्तिः स्फुरद्रूपा पुंरूपा सा तदा स्मृता"(१) ॥ इति ।

नादाद्विन्दुः, तस्या एव घनीभावः क्रियाप्रधानो बिन्दुः । तदुक्तम् ।

"सा तत्त्वसञ्ज्ञा(२) चिन्मात्र-ज्योतिषः सन्निधेस्तदा ।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम्" ॥ इति ।

तथा । "अभिव्यक्ता पराशक्तिरविनाभावलक्षणा ।
अखण्डा परचिच्छक्ति-व्याप्ता(३) चिद्रूपिणी विभुः ॥
समस्त-तत्त्वभावेन विवर्त्तेच्छा-समन्विता ।
प्रयाति बिन्दुभावञ्च क्रिया प्राधान्य-लक्षणम्" ॥ इति ।

स च बिन्दुः शिव-शक्त्युभयात्मकः, क्षोभ्य-क्षोभक सम्बन्धरूपश्चेति त्रिविधः । शिवात्मतया बिन्दुसञ्ज्ञः, शक्त्यात्मतया बीजसञ्ज्ञः, सम्बन्धरूपेण नादसञ्ज्ञः, एतौ नाद-बिन्दुभ्यामन्यौ तत्कार्य्यरूपौ; एभ्यस्त्रिभ्यस्तिस्रः शक्तयो जाताः; बिन्दो रौद्री, नादाज्ज्येष्ठा, बीजाद्वामा । तदुक्तम् ।

"बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम् ।
तयोर्योगे भवेन्नादस्तेभ्यो जाता त्रिशक्तयः" ॥ इति ।

ताभ्यः क्रमेण रुद्र-ब्रह्म-रमाधिपा जाताः; ते च क्रमेण इच्छाशक्ति-क्रियाशक्ति-ज्ञानशक्ति-स्वरूपाः, वह्नीन्दुर्कस्वरूपिणी निरोधिकार्द्धेन्दु-बिन्दु-रूपाः(४) शक्तेरेवावस्थाविशेषाः; एषा-

(१) ख, यदा शक्तिस्तु पुंरूपा भवतः सा तदा स्मृता । (२) क, तत्त्वसंज्ञा । (३) ख, अखण्डापरविच्छक्ति व्याप्ता । (४) ख, निरोधिको द्धं तुबिन्दरूपाः ।

मिच्छा-क्रिया-ज्ञानात्मत्वं शक्ति तदुत्पन्नत्वात्; आद्यविन्दोरखण्डो नादमात्रं शब्द ब्रह्मात्मा स्वत उत्पन्नमिति।

"क्रियायाः शक्तिप्रधानायाः शब्दशब्दार्थ-कारणम्।

प्रकृते विन्दुरूपिण्याः शब्दब्रह्माभवत्परम्" ॥ इति।

स शब्दब्रह्म, नतु शब्दार्थरूपम्, आन्तरः स्फोटः शब्दरूपो वा वाह्यस्फोटः शब्दब्रह्म तयोर्जडत्वात् ब्रह्मशब्दानर्हत्वात्, किन्तु चैतन्यमेव शब्दब्रह्म, तदुक्तम्।

"अनादि-निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।

विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः" ॥ इति।

तद्विन्दुरूप एवास्यैव(१) सर्वशरीरेषु शब्दत्वेनाविर्भावः। तदुक्तम्।

"सोऽन्तरात्मा तदा देवो नादात्मा यतते स्वयम्।

यथा संस्थान-भेदेन स भूयो वर्णतां गतः॥

वायुना प्रेर्य्यमाणोऽसौ पिण्डाद्दार्ति प्रयाति हि" ॥ इति।

शब्दब्रह्मैव परानाम शब्दावस्था, सैव चैतन्यरूपा कुण्डलिनी शक्तिः; ततः पश्यन्त्यादिरूपेण वेदराशिराविर्भवति। इयं शब्दसृष्टिः। अथार्थसृष्टिः, शम्भोः शक्तिभावमापन्नान्नादरूपकाल-सहायान्-मायाघनविन्दुरूपमापन्नात् सृष्टि-स्थिति-ध्वंस-निग्रहानुग्रह-कार्य्य-पञ्चक-कर्त्ता, अतएव जगन्निर्माण-वीजरूपो जगत् साक्षी सदाशिवो जातः; ततः क्रमेणेश-रुद्र-विष्णु-ब्रह्माण उत्पन्नाः; सर्वसृष्टिमूल-रूपादव्यक्तात् सृष्टान्मुखाद्विन्दोर्म्महान्; ततोऽहंकारः, स त्रिविधः; ततो वैकारिका देवाः, तैजसा-

(१) क, तद्विन्दुरूपरवस्यैव। ख, तद्विन्दुरूपरवश्यैव।

'भागार्द्ध' भागस्य यो भागस्तस्यार्द्धं तत् 'निरञ्जनं' शुद्धं ब्रह्म ज्ञेयं, सर्वपरिमाणानाश्रयत्वेऽपि दुर्लक्ष्यत्वप्रतिपादनायातिसूक्ष्मत्वोक्तिः॥ पुष्पेति(२६पृ०)। पुष्पमध्ये यथा 'गन्धं' स्वरूपं वर्त्तते। एवमिदं गन्धस्थानीयं देहादिषु वर्त्तते इति शेषः।

ननु तर्हि देहादयः क्व वर्त्तन्ते? इत्यत आह। एवमिति 'एवम्' अनेन प्रकारेण यथा सर्वेषु भूतेष्वात्मा वर्त्तते, एवं सर्वाणि भूतानि वर्त्तन्ते। अत्रापि दृष्टान्तमाह, मणिसूत्रमिति। समाहारद्वन्द्वः; यथा सूत्रे मणयो वर्त्तन्ते, तद्वदित्यर्थः। तदुक्तम्।

"सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः" इति॥

तथा।

"मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव"। इति।

ध्यानाभ्यास-प्रदर्शनायोक्तस्यापि पुनरभिधानम्। तिलानान्त्विति(२७पृ०)। तिलानां मध्ये यथा तैलम् 'अर्पितं' व्याप्य स्थितमिति, तथा ब्रह्मैव वर्त्ते इतिशेषः॥

ननु कथं सत्यादसत्योद्भवः? इत्याशङ्कां दृष्टान्तेन वारयति, वृक्षमिति(२७पृ०)। 'सकलं' पूर्णं यथार्थं 'निष्कला' आकृतिमात्रं न पारमार्थिकी। ननु छाया यथा वृक्षातिरिक्ता भवत्येवं जगत् ब्रह्मातिरिक्तं चेद्द्वैतापत्तिरित्याशङ्क्याह। सकल इति। यथार्थं चायथार्थंच।

इदानीं गुरुरूपेणाज्ञानतिमिरापहं साकार-स्वरूपं ध्येयमित्याह, अतसीति(२७पृ०)। पूरकेणोपलक्षितं पूरणकाल इति यावत्, षोड़शभिः प्रणवैः पूरयन्नुकारमूर्त्तिं विष्णुं नाभौ

स्मरेदिति ज्ञेयम्॥ पितामहं 'रक्तगौराङ्गं' कपिलवर्णं हृदि स्थाने कुम्भकेन विचिन्तयेदित्यन्वयः। अत्रापि चतुःषष्टिभिः कुम्भयन्नकारात्मकं चिन्तयेदिति ज्ञेयम्॥ रेचकेनोपलक्षितं 'त्रिलोचनं चिन्तयेत्' मकारमूर्त्तिं ध्यायेत्। द्वात्रिंशद्भीरेचयेदिति ज्ञेयम्। तदुक्तं याज्ञवल्क्येन।

"वर्णत्रयात्मका ह्येते रेचक-पूरक-कुम्भकाः।

स एष प्रणवः प्रोक्तः प्राणायामश्च तन्मयः"॥ इति॥

तत्र पूरक-कुम्भक-रेचका अकारोकार-मकारा ब्रह्म-विष्णु-रुद्रात्मका ध्येयत्वेनोक्ताः। अत्र तु ब्रह्म-विष्णु-रुद्रा इति ब्रह्मणो हृदि ध्यानमुक्तम्, अन्यत्र तु स्वाधिष्ठान उक्तं, न वचनस्य पर्य्यनुयोगोऽस्ति। 'विद्यात्मा'* विद्यात्मानं, व्यत्ययेन प्रथमा, अथवा कर्त्तृविशेषणं विद्यावान् साधक इत्यर्थः॥

नाभौ हृदि ललाटे च ब्रह्म-विष्णु-रुद्राणां ध्यानमुक्तं; तत्र स्थानत्रयपद्मानां(१) सुषुम्णारूपैकनालत्वादेकमेवाभिप्रेत्यावान्तरभेदं दर्शयति, अष्टपत्रमिति(२७पृ०)। 'अधः' पुष्पमध्ये, अवस्थितं नाभिदेशे वर्त्तमानं पुष्पम्। हृत्पद्ममाह, ऊर्द्धेति। सर्वदेवमयमम्बुजम्। सर्वदेवमयात्मकमिति क्वचित् पाठः॥ मण्डूकाद्यावरणाः(२) तदेवात्मकं। 'शताङ्गं' शतमङ्गानि यत्र शताङ्गं, शतग्रहणमाधिक्योपलक्षणं; तेन मूलादि मूर्द्धान्तं बहुपद्मं सुषुम्णानालं, तत्र केचिद्द्वादशपद्ममाहुः, अपरे षोडशपद्मम्, अपरे बहुतरपद्ममाहुः, तद्यथा।

---

* विद्यात्म इत्यत्र विद्यात्मा इति दीपिकासम्मतः पाठः।

(१) ख, तत्स्थानं त्रयपद्मासनां। (२) क, ख, मण्डूकाद्यावरणां।

"ततस्तु ब्रह्मके काले ध्यायेच्चक्रक्रमं सुधीः।
आधारचक्रं प्रथमं कुलदीपमनन्तरम्॥
यन्त्रचक्रं ततः प्रोक्तं स्वाधिष्ठानात्मकं परम्।
रौद्रं करालचक्रञ्च गह्वरात्मकमेवच॥
विद्यापदञ्च त्रिमुखं त्रिपदं कालदण्डकम्।
उकारचक्रञ्च ततः कालद्वारं करण्डकम्॥
दीपकं लोभजनकमानन्दललितात्मकम्।
मणिपूरक सञ्ज्ञञ्च नाकुलं कालभेदनम्॥
महोत्साहञ्च परमं पादकं पद्ममुच्यते।
कल्पजालं ततश्चिन्त्यं पोषकं लोलमं ततः(१)॥
नादावर्त्तपदं प्रोक्तं त्रिपुटञ्च तदुत्तरम्।
कङ्कालकमतश्चक्रं विख्यातं पुटभेदनम्॥
महाग्रन्थि विराकाच(२) बन्धे ज्वलन-सञ्ज्ञिकम्।
अनाहतं यत्र पुटं व्योमचक्रं तथा भवेत्॥
बोधनं ध्रुवसञ्ज्ञञ्च कलाकन्दलकं ततः।
क्रौञ्चभेरुण्डविभवं डामरं कुलपीठकम्॥
कुलकोलाहलं हालावर्त्तं चैव महद्भयम्।
घोराभैरव-सञ्ज्ञञ्च विशुद्धिः कण्ठमुत्तमम्॥
पूर्णकं पदमाख्यातमाज्ञाकाकपुटं तथा।
शृङ्गाटं कामरूपाख्यं पूर्णगिर्य्यात्मकं परम्॥
महाव्योमात्मकं चक्रं शक्तिरूपमनुस्मरेत्"॥ इति।

---

(१) ख, लोभमन्ततः। (२) ख,महाग्रन्थिरिवाकाच।

तत्रैव मूर्ध्नि शतपत्राढ्यमब्जं वर्त्तते इति शेषः; इदं सहस्रपत्रमित्याहुः। इदमम्बुजत्रयं सुषुम्णालग्नैकनालत्वादेकत्वेन विवक्षितमिति विशेषण-विशेष्यभावः। कीदृशं? विप्रकीर्णाब्जकर्णिकं (२७पृ०)'विप्रकीर्णानि' विवक्षितानि अङ्गानि पूर्वोक्तान्याधारादीनि तथा तत्कर्णिकाश्च यस्य तत्तथा नानाकमलमित्यर्थः। तत्र प्रत्येकमर्क-चन्द्र-वह्नीनां मूर्त्तीरेकैकोपरि ध्यायेत्। तदुक्तं "तस्मिन् सूर्य्येन्दु-पावकम्" इति। 'उत्थापनम्'(२७पृ०) ऊर्द्ध्वमुखत्वम्। यद्यपि शरीरावयवोऽन्यथाकर्त्तुं न शक्यते विनाशप्रसङ्गात्, तथाप्यधोमुखत्वमधर्म्मोन्मुखता, ऊर्ध्वमुखत्वमास्तिकत्वेनोर्द्ध्वलोकोन्मुखता, विकाशश्च विनिद्रतानलसतेत्येवं बोद्धव्यम्। अथवा सुषुम्णानाललग्नानि पत्राण्येव वाताहतानि ऊर्द्ध्वमुखानि भवन्ति इति तदुत्थापनं द्रष्टव्यम्।

किमर्थमुत्थापनम्? अतआह, वोढुं चन्द्राग्नि-सूर्य्ययोरिति (२७पृ०)। कर्म्मणि षष्ठी, सूर्य्यचन्द्राग्नीन् वोढुमित्यर्थः, चन्द्रस्य मध्ये सूर्य्यपावकयोस्त्वाद्यन्तयोः क्रमार्थं प्रयोगे कर्त्तव्ये एषां त्रित्वाद्बहुवचनप्रयोगे च कर्त्तव्ये तथानुक्तिरग्नि-सूर्य्ययोरेकत्व-सूचनार्था, अग्निसूर्य्यौ पुरुषरूपं; चन्द्रश्च स्त्रीरूपं प्रकृतिरूपं; तेन प्रकृतिपुरुषौ वोढुमित्यर्थः। प्रकृतेश्चन्द्रस्य मध्ये ध्यानन्तु तस्याः पुरुषेण व्याप्तिं दर्शयितु; प्रकृतिर्हि पुरुषेण व्याप्ता पुरुषायत्ता च वर्त्तते। पुंसः सप्तमी वा, चन्द्रादिषु देवातां वोढुमित्यर्थः।

तस्येति(२७पृ०)। 'तस्य'पद्मस्य 'वीजं' तदर्जितं कर्म्म ज्ञानञ्च 'आहृत्य' गृहीत्वा 'आत्मा' जीवः 'सञ्चरते' लोकाल्लोकान्तरं गच्छतीत्याहुः। 'ध्रुवं' निश्चितम्; श्रुतयः, "पुण्यो वै पुण्येन कर्म्मणा

भवति, पापः पापेनेति, तमेतं विद्याकर्म्मणी समन्वारभेते पूर्वप्रज्ञा चेति, साधुकारी साधुर्भवति, पापकारी पापो भवति" इत्याद्याः। अथवा 'सञ्चरते' पत्रात् पत्रान्तरं गच्छति, तस्याष्टधा वृत्तिर्भवति। पूर्वदले पुण्ये मतिः, आग्नेय्यां निद्रालस्यादयो भवन्ति, याम्ये क्रूरे मतिः, नैर्ऋत्ये पापे मनीषा,(१)वारुण्यां क्रीड़ा, वायव्ये गमनादौ बुद्धिः, सौम्ये रतौ प्रीतिः, इशाने द्रव्यादानं,(२) मध्ये वैराग्यं, केशरे जाग्रदवस्था, कर्णिकायां स्वप्नः, लिङ्गे सुषुप्तम्। पद्मत्यागे तुरीयमिति हंसोपनिषदि पत्रभेदश्रुतेः। अथवा 'तस्य' पद्मस्य 'बीजं' पञ्चाशद्वर्णरूपम् 'आहृत्य' उच्चार्य्य आत्मा 'सञ्चरते' व्यवहरति शब्दव्यवहारस्य मातृकाधीनत्वात् पञ्चाशद्वर्णबीजाढ्यामिति कर्णिकाविशेषणोक्तेः। तत्पद्मं 'त्रिस्थानं'(२८पृ०) नाभिहृदयं मूर्द्धा चेति त्रीणि स्थानान्यस्य, 'त्रिमार्गञ्च' स्थानभेदेनोपासनगतिभेदात्, 'त्रिब्रह्म' नाभौ विष्णुः, हृदि ब्रह्मा, मूर्द्धनि त्रिलोचन इति त्रीणि ब्रह्माण्यस्य, 'त्रिरक्षरं' त्रिवारमक्षराण्यकारादीन्यस्य, 'त्रिमात्रं' ता एव मात्राः अस्य, अकारादिषु मात्राव्यवहारात्। तदेवाब्जं तदुपर्य्यर्द्धमात्रञ्च, 'यः' पुमान् अकारादिवर्णान्यर्द्धमात्रस्थं(१) पुरुषं वेद, स 'वेदवित्' वेदोक्तं वेत्ति।

इदानीमर्द्धमात्रारूपाद्बिन्दोः परस्य नादस्य स्वरूपं दर्शयंस्तज्ज्ञाने फलमाह, तैलेति(२८पृ०)। तैलस्य धारा तैलधारं, छान्दसं क्लीवत्वं, यथा तैलधारा अच्छिन्ना सती अविच्छेदेनानुभूयते, तथा विशदा दीर्घा चानुभूयते, तद्वत्। ननु तर्हि धारावदेवाग्रे सूक्ष्मो न स्यात्? अत उपमान्तरम्। दीर्घेति। 'अवाग्जं' ब्रह्मणोऽवाक्

(१) क, ननीषा। ख, मतीषा। (२) ख, द्रव्यदाने।

अधः तदनुभवात्, प्रागवर्त्तमानम्; अथवा न वाचो जात-मवाग्जं वाचो विराम उपलभ्यत्वात्। तथा 'प्रणवस्य अग्रं' प्रणवादूर्ध्वं प्रतीयमानं 'तं' नादं 'वेद' उपास्ते 'वेदवित्' शक्ति-शान्ते अपि प्रणवरूपे जानातीत्यर्थः॥

इदानीं शरस्य युद्ध इव चिप्रकारित्वमुपदिशन् प्रणवाभ्यासे प्रकारमाह। प्रणवइति(२८पृ०)। अयं मन्त्रो मुण्डकेऽप्यस्ति। 'वेद्धव्यं' मनसा ब्रह्म प्रवेश्यम्, किंवत्? शरवत्, यथा शरो विध्यति; फलं तन्मय इति, ब्रह्ममयो जीवः स्यादित्यर्थः। स्वदेहमिति। आत्मानमरणिमिति ब्रह्मोपनिषदि पाठः। 'स्वदेहः' लिङ्गम्, 'एवम्' अनेन प्रकारेण 'निगूढवत्' निलीनवत् गुप्तवस्तुवत् 'पश्येत्' सूक्ष्मदृष्ट्या निरीचेत, 'उत्कर्षयेत्' वायुं स्वाधिष्ठानादिचक्रभेदेनोर्द्ध्वभूमिकां प्रापयेत्॥

अभ्यासप्रकारमाह, अर्द्धेति (२८पृ०)। क्षषिक्षद्यथा कूपात् रज्ज्वा जलमाकर्षति, एवमर्धमात्रया सह मनो वहत्स्वनां(१) कुण्डलीं भ्रूमध्यमानयेदित्यर्थः। 'पङ्कजम्' आधारादि 'नालं' सुषुम्णा, तन्मार्गेण 'लयं' तदमृतस्थानम्। तस्य लक्षणमाह, भ्रुवोरिति (२८पृ०)। भ्रुवो मध्ये यो ललाटैकदेशः तदमृतस्थानं, 'नासिकाग्रान्तु' लक्षणीभूतायां 'मूलतः' नासिकामूलादारभ्य अमृतस्थानं बोद्धव्यं, नासिकामूलस्योपरिभागममृतस्थानमित्यर्थः।

तदुक्तम्,

"भ्रूमध्ये धाम यत् प्रोक्तं तत् प्रोक्तं सोममण्डलम्" इति।

तस्यामृतस्य किं स्वरूपम्? अत आह, विश्वस्येति(२८पृ०)।

(१) ख, अर्द्धमात्रया समानोवह। पवनां।

विश्वस्यायतनमित्युक्ते आकाशादि स्यात्, तदर्थमुक्तं महदिति। अत्रैव निरवधिमहत्त्वाधिकरणममृतं, तच्च भ्रूमध्ये धारणाया ध्याणं सम्लभ्यते ; येनामृतो भवतीत्यर्थः । द्विरुक्तिः समाप्त्यर्था ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका ध्यानविन्दुके ॥

इति ध्यानविन्दूपनिषदो दीपिका सम्पूर्णा ॥ ६ ॥

---

## अथ तेजोविन्दूपनिषदो दीपिका ।

ओं तेजोविन्दुः परं ध्यानं विश्वातीतं हृदि स्थितम् ।
द्विखण्डमेकविंशच्च तेजोभावफलं हि तत् ॥ १ ॥

प्रणवस्याकारोकार-मकार-विन्दु-नादानां ध्यानं ध्यानविन्दा वुक्तम् ; शक्तिशान्तयोर्ध्यानं वक्तुं तेजोविन्दूपनिषदारभ्यते । तेजनं तेजः घञ्, तिजेः क्षमायां सन्, अत्र निशाने घञ्; तस्य 'विन्दुः' कला एवं त्रिधं परं ध्यानं भवति, विश्वातीतं

तद्गोचरत्वात्, 'आणवम्' अणोरिदं सूक्ष्मवस्तुविषयं, 'शाम्भवं' शम्भुविषयं, 'स्थूलं' तद्विषयत्वात्, एवं सूक्ष्मं, 'परं' सर्वातीतफलं दुःसाध्यञ्च। तदुक्तम्,

"चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।

तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्" ॥ इति।

अत एव तद्ध्यानं 'दुराराध्यं' दुःसेव्यं 'दुष्प्रेक्ष्यं' दुर्दर्शं 'दुराश्रयं' कष्टसाध्यं निर्विषयं 'दुर्लक्ष्यं' दुःखप्राप्यं 'दुस्तरं' दुरन्तं, न केवलमस्माकं, मुनीनामपि, 'मनीषिणां' बुद्धिमताम्।

तर्हि प्राकृतस्यैतद्ध्यानप्राप्तौ किमन्तरङ्गसाधनम्? अत आह, जितेति(२८पृ०)। हितमिताशी 'जिताहारः', हेयोपादेयानि द्वन्द्वानि तेभ्यो निष्क्रान्तो 'निर्द्वन्द्वः' समलोष्टाश्मकाञ्चन इत्यर्थः। 'निराशीः' वाञ्छारहितः, 'अगम्यगम्यकर्त्ता' यदन्यैरगम्यं स्थलं तदपि प्रयत्नेन गम्यं करोति यः सः, 'गुरुमानार्थमानसः' गुरोर्मानः पूजा स एवार्थः प्रयोजनं यस्य तादृशं मानसं यस्य सः, गुरोर्माने चार्थे च मानसं साधनाय प्रवृत्तं यस्येति वा, सोऽधिकारीत्यर्थः। 'मुखानि' द्वाराणि 'त्रीणि' त्रिसङ्ख्यानि पूर्वोक्तानि वैराग्यमुत्साहो गुरुभक्तिश्चेति त्रीणि द्वाराण्येतद्ध्याने 'विन्दन्ति' प्राप्नुवन्ति साधवः; तेन हंसस्त्रिधामा उच्यते, त्रीणि 'धामानि' प्राप्त्युपाया यस्य, जाग्रदादीनि वा।

ध्यानं प्रशस्याधिकारिणञ्चोक्त्वा ध्येयस्वरूपमाह, परमिति(२८पृ०)। 'गुह्यं' गुहामर्हति स्थानेषु 'अव्यक्तं' सर्वजनाप्रसिद्धं ब्रह्म बृहत्त्वात् निराश्रयं सर्वाधारत्वात् कलात्मकं विष्णोः सत्त्वोपाधिः परमं पदं विश्रान्तिभूमिः।

हरिहरसाधारणं स्वरूपं ध्येयमुक्ता हरस्वरूपमाह, 'त्र्यम्बकं' त्रयाणां वेदानामम्बको वक्ता त्र्यम्बकः, त्रयाणां लोकानां गन्ता, अम्बगतौ अवि ह शब्दे इति धातुभ्यां गवल् ; 'त्रिगुणं', सत्वादि-गुणत्रयोपेतं, 'स्थानम्' आश्रयः, 'त्रिधातुं' त्रयो लोका धातवो यस्य, अन्यदपि त्रयात्मकं सर्वमस्यैव धातवः, 'वाङ्मनाऽतीत-गोचरं' वाङ्मनसयोरतीतो गोचरः स्थानं यस्य तत्तथा । स्वभा-वेति (२८पृ०)कृत्रिमसंस्कारत्यागेन(१) स्वाभाविकवस्तु भावनया ग्राह्यं 'सङ्घातैकपदाजृम्भितं' सङ्घातवाचिना पदेनाजृम्भितं शब्दा-तीतत्वात्, 'आनन्दं' स्वयमानन्दरूपं, 'नन्दनम्' अन्यकृतानन्दः तदतीतमन्येनास्यानन्दः कर्त्तुं न शक्यते, 'चित्तवृत्ति-विनिर्मुक्तं' (३०पृ०) विकारातीतत्वात्, तत् 'ब्रह्माणं' लिङ्गविभक्तिव्यत्ययः, ब्रह्मेत्यर्थः । 'तदध्यात्मं' तदेवाध्यात्ममात्मेत्यर्थः,' तन्निष्ठा' तदेव निष्ठा मर्य्यादा, तदुक्तम्, "अतः परतरं नान्यत्" इति । 'तत्प-रायणं' परमयनं, तदुक्तं, "सा काष्ठा सा परा गतिः" इति । 'अचिन्तं'* चिन्तारहितं चितं ज्ञानं यस्य तादृशं,(२) 'आत्मानम्' आत्मरूपं 'परमं व्योम' परमाकाशं 'स्थितं' सर्वकार्य्येषु तत्परम् तत्वासीनम् अलमवत् । 'अशून्ये' (३०पृ०) पूर्ण अस्मिन् सति 'शून्यभावं' शून्यत्वेन भाव्यमानं जडैः, वस्तुतः शून्यातीत-

(१) ख, सन्निधानसंस्कारात्यागेन ।

* अचित्त चित्तमित्यत्र अचिन्तचित मिति पाठो दीपिकासम्मतः ।

(२) क, अचिन्तं चिन्तनचितं यस्य तादृशं चित्तं ज्ञानं । ख, अचिन्तं चिन्तिं यस्य तादृशं चित्तं ज्ञानं ।

मवस्थितं पूर्णत्वात्। 'नध्यानम्' इति क्रियाकारकभावशून्यम् अथ च 'ध्येय एव' ध्यातव्य एव संसारिणां मुक्तिदत्वात्, तद्ब्रह्म 'सर्वं' सर्वात्मकम् अथ च 'परमं शून्यम्' असङ्गत्वात्, 'अपरं'(१) न परं यस्मात्तत्, निषेधार्थेन नकारेण बहुव्रीहिः ; 'परमात्' अपि आकाशादेः परम्, "अतः परतरं नान्यत्" इति स्मृतेः। 'अप्रबुद्धम्' जाग्रद्व्यापाररहितं(२) तत्सत्यं न संविदुरिति न अपि तु सत्यं विदन्त्येव, 'मुनीनाम्' ऋषीणां तत्त्वभावेन 'युक्तम्' आदरणीयं, न देवा इति, देवाः परं न विदुरिति न अपि तु विदुरेव।

साधनानि पूर्वमुक्तानि, सम्प्रत्यसाधनान्याह, लोभमिति (३०पृ०)। लोभं श्रिता न विदुरित्यन्वयः। शीतोष्णं श्रिताः कातराः, वयं ब्रह्मकुले जता इति दर्पं श्रिता न विदुः, मुक्तिग्रन्थानां 'सञ्चयं' समूहं श्रोतारो न विदुः। न भयमिति (३०पृ०)। पुनर्भयग्रहणं लोकलज्जाभयवन्तोऽपि न विदुरित्येव-मर्थम्। मानापमानयोर्वर्त्तमाना न विदुः। एतदिति, एतै र्भावैः 'विनिर्मुक्तं' रहितं प्रति तद्ब्रह्म ग्राह्यं, एतद्भावसहितं लोभादि-सहितं प्रति तत् ब्रह्म न ग्राह्यमित्यर्थः। 'तत्परं' तच्च ब्रह्म परमुत्कृष्टं यस्य तत्परं ब्रह्मनिष्ठं। तद्ग्राह्यमिति(३) द्वितीया-वृत्तिरादरार्था। इति शब्दः समाप्तौ।

---

(१) न परमित्यत्र अपरमिति पाठो दीपिकायां दृष्टः।

(२) ख, जागरण व्यापाररहितं।

(३) क, ख, परमुत्कृष्टं तत् परं ब्रह्मनिष्ठं प्रतिग्राह्यमिति।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपदवाक्यानां दीपिका तेजोविन्दुके॥

इति तेजोविन्दूपनिषदो दीपिका सम्पूर्णा ॥ ७ ॥

---

## अथ योगशीखोपनिषदो दीपिका।

योगमूर्द्धप्रतिष्ठेयमुक्ता, योगशिखा ततः।
चिखण्डा ग्रन्थसन्दोहे द्वात्रिंशतितमी मता॥ १ ॥
यद्वा वह्निशिखा ध्यानयोगाद्योगशिखा मता।
साङ्गोपाङ्गो योगयुक्तस्तथा तत् साधनानि च ॥२॥

सम्प्रति देहान्ते योगिनो गमनप्रकारो वक्तव्यः, एतदर्थं योगशिखारभ्यते। योगशिखामिति (३१पृ०)। 'मन्त्र'' प्रणवं 'गात्रकम्पः' श्रद्धातिशय-सूचकः; यद्वा "कम्पो भवति मध्यमः" इति वचनाद्यदा मध्यमः प्राणविजयो भवति, तदा पद्मासनं

बद्धा 'अन्यत्' सिद्धादि, संयतो कुर्य्यात्, सर्वत्र वर्त्तमानं सदितिशेषः; 'हृत्'(३१ पृ०) 'हृदि' 'परमेष्ठिनं' कमलासनं "परमेष्ठी पितामह" इति कोशात्, एकमूर्त्तित्वाद्धरिहरवत्, परमेष्ठिध्यानमपि मुक्तिहेतुः, अग्निर्वा परमेष्ठी; 'एकस्तम्भः' सुषुम्णाश्रयो मुण्डाधारदण्डः क्रोडाख्यो यस्य तत् तस्मिन्, इडा-पिङ्गला-सुषुम्णाख्यास्तिस्रः 'स्थूणाः' यस्मिन् त्रिस्थूणे त्रिगुणात्मके वा, पञ्च इन्द्रियाधिष्ठात्र्यो देवता एव 'दैवतानि' प्राणादयो वा यत्र तस्मिन् पञ्चदैवते, शरीरे वेति हृदयापेक्षो विकल्पः।

हृदि ध्यानप्रकारमाह, आदित्येति(३१ पृ०)। दिव्यमादित्यमण्डलं 'रश्मीनां' किरणानां ज्वालाभिः समाकुलम्; अनेन चन्द्रोऽप्युक्तो द्रष्टव्यः, "तस्मिन् सूर्य्येन्दुपावकान्" इत्युक्तत्वात्। वह्निमेव ध्येयतया निर्दिशति। तस्येति (३१ पृ०)। 'तस्य' आदित्यस्य मध्ये 'गतः' प्रविष्टो वह्निः दीपवर्त्तिवत् 'प्रज्वलेत्' प्रज्वलति, 'मात्रा' परिमाणं, सा 'परमेष्ठिनो ब्रह्मणो वह्नेर्वा देहाधिष्ठातु र्मात्रा; इदं वह्नेर्ध्यानं याज्ञवल्क्येनोक्तं, तद्यथा।

"हृत्सरोरुहमध्येऽस्मिन् प्रकृत्यात्मककर्णिके(१)।
अष्टैश्वर्य्यदलोपेते विकारमयकेसरे(२)॥
ज्ञाननाले बृहत्कन्दे प्राणायामप्रबोधिते।
विश्वार्चिषं महावह्निं ज्वलन्तं विश्वतो मुखम्॥
वैश्वानरं जगद्योनिं शिखा तद्वीजमीश्वरम्।
तापयन्तं स्वकन्देहमापादतल-मस्तकम्॥

(१) ख, प्रत्यचात्मिक कर्णिके। (२) ख, विकारकेशरै र्युते।

निर्वातदीपवत्तस्मिन् दीपितं हव्यवाहनम् ।
दृष्ट्वा तस्य शिखामध्ये परमात्मानमक्षरम् ॥
नील-तोयद-मध्यस्थ(१) विद्युल्लेखेव राजते ।
नीवारशूकवद्रूपं(२) पीताभं सर्वकारणम् ॥
ज्ञात्वा वैश्वानरं देवं सोऽहमात्मेति या मतिः ।
सगुणेषूत्तमेष्वेतद्ध्यानं योगविदो विदुः ॥
वैश्वानरत्वं सम्प्राप्य मुक्तिं तेनैव गच्छति" ॥ इति ।

इदानीमेतद्ध्यानविशुद्धात्मनः सुषुम्णापश्चिममार्गेण षट्चक्र-भेदद्वारोर्द्ध्वां गतिमाह भित्त्वेति(३१पृ०) । 'सूर्यं' सहस्र-दलस्थमधिदैवतामादित्यञ्च भिन्दन्ति 'योगाभ्यासेन' उपायेन ।

भेदने उपायमाह, द्वितीयमिति(३१पृ०) । सुषुम्णायाः 'द्वितीयं' पश्चिमं 'परिशुद्धं' निर्गुणं 'विसर्पति' प्रविशति, मनः-प्रवेशोपायोऽमृतबिन्द्वावृक्तः, द्वितीयमिति वचनात् सुषुम्णाया द्वौ मार्गाविति लक्ष्यते; पूर्वमार्गः पश्चिममार्गश्च; तत्र पूर्वमार्गः प्रवृत्तिविषयः, पश्चिमो निवृत्तिविषयः; अत एव परिशुद्धः; उक्तञ्च स्वात्मारामेण, "पूरयेन्मारुतं दिव्यं सुषुम्णापश्चिमे मुखे" इति । पश्चिममुखस्य योगमार्गत्वात्, पूर्वमुखं कर्ममार्गः; कपालसम्पुटं 'भित्त्वा' विदार्य्य अध्यात्मं शिरोऽस्थि अधिदैवतं ब्रह्माण्डार्द्धशकलं(३) 'ततः' तदनन्तरं 'तत्परं' पदं 'पश्यन्ति'* साक्षात्कुर्वन्ति ; तदुक्तं खेचर्य्यां ।

(१) ख, नीलतोत्पल मध्यस्थ ।　　(२) ख, नीवार शूकरूपश्च ।
(३) ख, ब्रह्माण्डोदरशकल ।

* पश्यति इत्यत्र पश्यन्ति इति पाठो दीपिकासम्मतः ।

"मनसा सह वागीश्या भित्त्वा ब्रह्मार्गलं क्षणात्।
परामृतमहाम्भोधौ विश्रान्तिं तत्र कारयेत्" ॥ इति ॥

उक्तयोगासमर्थं प्रति सुगमोपायमाह, अथेति(३१पृ०)। 'अथशब्दः' पक्षान्तरे, 'न ध्यायेत'(१) न ध्यानं कुर्य्यात्, 'जन्तुः' देही 'आलस्यात्' अलसत्वात् प्रमादतो वा यदि न ध्यानं कुर्य्यात् तर्हि यदि 'एतत्' ग्रन्थरूपं 'त्रिकालं' त्रिसन्ध्यम् 'आवर्त्तेत्' आवर्त्तयेत् पठेत्, स परमं पदं गच्छेत्। कथितं मया इति आचार्य्यो जातसाक्षात्कारः शिष्यान् प्रति वदति ; एतत् 'पुण्यं' पवित्रं योगतत्त्वं मया 'सङ्क्षेपात्' अविस्तरेण कथितं भवद्भि-र्बोद्धव्यम्; कथम्भूतेन मया? प्रसन्नं 'परमेष्ठिनं' ब्रह्माणं 'समा-साद्य' प्राप्य 'लब्धयोगेन' ब्रह्मणः सकाशात् मया योगो लब्धः, इति ऋषेर्वाक्यम्।

अस्य योगस्य दुष्प्रापतां श्रद्धाजननायाह, जन्मेति(३२पृ०)। जन्मान्तरसहस्रेषु तपांसि चरतः पुंसो यदा किल्बिषं 'नाश्नाति' न भक्षयति न ग्रसति तदा योगेन परं 'संसारच्छेदनं' ब्रह्म पश्यन्ति, तदुक्तम्,

"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभः" ॥ इति।

द्विरुक्तिः समाप्त्यर्था, इति शब्दश्च।

---

(१) न ध्यायेदित्यत्र क चिह्नित दीपिकापुस्तके 'न ध्यायेत' इति, ख चिह्नित-दीपिकापुस्तके 'न ध्यायते' इति च पाठान्तरम्।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानां दीपिका योगशैखकी॥

इति योगशिखोपनिषदो दीपिका सम्पूर्णा। ८।

---

## अथ योगतत्त्वोपनिषदो दीपिका।

ओं योगिनां मुक्तिकामानां मुक्तिमार्ग-प्रदर्शिका।
त्रयोविंशा तूपनिषद्योगतत्त्वं निरूप्यते॥ १॥

ग्रन्थस्य तावत् फलमाह, यच्छुलेति(३२पृ०)। (१) मङ्गलार्थं योगसिद्धये च परमदेवतां स्तौति, विष्णुरिति। 'महाकायः'(२) यद्देहे ब्रह्माण्डकोटयो वसन्ति। 'तत्त्वमार्गे' परमार्थदृष्टिमार्ग, यथा दीपः प्रकाशकः, तथा विष्णुर्दृश्यत इत्यन्वयः। 'पुरुषोत्तमः', तदुक्तम्,

(१) तच्छुभेत्यत्र यच्छुलेति पाठो दीपिकासम्मतः।
(२) महामाय इत्यत्र महाकाय इति दीपिकाकारधृतः पाठः।

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च(१) प्रथितः पुरुषोत्तमः"॥ इति।

योगप्रवृत्त्यङ्गं वैराग्यं तावदाह, यः स्तन्यमिति(३३पृ०)। 'यः' विवेकी स्तनेषु भवं 'स्तन्यं' दुग्धं, शरीरावयवात् यत्; 'पूर्वं' बाल्यदशायां, पीत्वापि पयोधरान् निष्पीड्य रमेत्, बाला हि धयन्तो मातुः पयोधरौ मर्द्दयन्ति। पश्चात्, यस्मिन्नेवात्मना पूर्वं भगे जातः 'तस्मिन्नेव' तज्जातीये एव भगे 'रमेत्' रमेत; अत्रापि निष्पीड्य च पयोधराननिति सम्बध्यते; स कथं परं पश्येदिति शेषः। योषिदासक्त-चित्तानां मातृगामिनां ज्ञानलेशोऽपि दुर्लभ इति भावः।

सांसारिक-धर्म्म-व्यवहारोऽपि सिकतासेतुप्राय इत्याह, या इति(३३पृ०)। जन्मान्तरे इति भावः। एवमिति। 'एवम्' उक्तेन प्रकारेण 'संसारस्य' जन्मनः 'चक्रेण' वृत्तिलक्षणेन 'कूपचक्रम्' 'यन्त्रम्' अरघट्टाख्यं, तस्य 'घटाः' घटा इव, ते यथा उपरिस्था अधोयान्ति, अधस्थाश्चोपरि, तद्वत् भ्रमन्तो जीवाः 'यानि जन्मानि' पूर्वोक्तानि, तानि यान्ति इति शेषः। तानि श्रुत्वा 'लोकान्' पितृलोक-देवलोकादीन् पुण्योदयेन 'समश्नुते' प्राप्नोति इति श्रवणफलम्।

इदानीमेतत् संसारतरणोपायं प्रणवाक्षरोपासनमाह, त्रय इति(३३पृ०)। अकारादीनां क्रमेण पृथिव्यन्तरिक्षं द्यौश्चेति त्रयो लोकाः, 'वेदाः' ऋग्यजुः-सामानि, 'त्रयः सन्ध्याः' तिस्रः

(१) ख, तस्माल्लोके च वेदे च।

सन्ध्या इत्यर्थः, त्रयः 'सुराः' ब्रह्म-विष्णु-रुद्राः ब्रह्म-रुद्र-विष्णवो वा, त्रयः 'अग्नयः' गार्हपत्य-दक्षिणाग्न्याहवनीयाः, 'गुणास्त्रीणि' गुणास्त्रय इत्यर्थः, सत्त्व-रजस्तमांसि, 'त्रयाक्षरे' त्रयात्मकमक्षरम् अकारादि यत्र प्रणवे। त्रयाणामिति(३३पृ०)। 'त्रयाणाम्' अक्षराणां मध्ये प्रान्ते 'अक्षरे' मकारे अधीत सति यः अर्द्धम् अक्षरम् अधीतेऽपि 'अपिः' अल्पभावे, तेनाधिकारिणां सर्वमिदं प्राप्तव्यं प्राप्तम् इह लोके यत्र परमं 'पदं' मोक्षाख्यं तदपि 'लब्धं' प्राप्तम्।

ननु परमं पदं क्व वर्त्तते? सर्वत्रास्ति चेत्, कथं नोपलभ्यते? सदाप्रकारेण(१) उपलभ्यत एवानुस्यूतं, को दृष्टान्तः? उच्यते, पुष्पेति (३४पृ०)। 'सर्पिवत्' छान्दसो वर्ण-लोपः, यथा एते दृष्टान्तास्तद्वदनुस्यूतमस्तीत्यर्थः।

इदानीं हृत्पद्मं ध्यानस्थानमादर्शयति, हृदीति(३४पृ०)। पद्मं 'स्थितम्' वर्त्तते, तच्च पद्ममधोमुखं वर्त्तते, 'अधोबिन्दुम्' अधोमुखा बिन्दवो यस्य। तदुक्तम्, "सततं शीकराभिश्च" इति। तस्य मध्ये मनः स्थितं पक्षीव कुलाये। उद्घाटनोपायमाह, अकार इति(३४पृ०)अकारे उच्चारिते सति 'शोचितं' द्रवीभूतं चलनोचितं जातम्; उकारेण उच्चारितेनैव 'भिद्यते' विकसति; मकारे उच्चारिते सति 'नादं' रवम् अव्यक्तशब्दं लभते अनाहत ग्रहणोचितं(२) भवति, छान्दसत्वाद्विभक्तिप्रक्रमभङ्गो न दोषः। 'अर्द्धमात्रा तु निश्चला' अर्द्धमात्रायाम् उच्चारितायां निश्चला भवतीत्यर्थः।

(१) ख, सदाकारेण। (२) ख, अनाहतं ग्रहणे विना।

ध्येयस्वरूपमाह, शुद्धेति(३४पृ०)'योगयुक्तात्मा' योगेन अष्टाङ्गेन युक्तोऽभियन्त्रितः आत्मा मनो यस्य, 'पुरुषोत्तमः' वासुदेवः तत्र 'तत्परः' तत्परायणः, उज्ज्वलं निर्म्मलं ध्येयं स्वरूपं लभत-इत्यन्वयः, सगुणध्यानान्निर्गुणरूपं भातीति भावः।

इदानीं प्रत्याहार-धारणे आह, कूर्म्मवदिति (३४पृ०)। पाणि-पाद-व्यापाराभ्यां सह सर्वेन्द्रियवृत्तीः(१)। शिरसि सहस्रदले स्थिते 'आत्मनि' मनसि धारयेत्। एवं सेन्द्रिये मनसि शिरसि नीते सर्वेषु द्वारेषु नवसु 'वायुः' वायुं 'पूरत' पूरयत योगिनो यूयं पूरत पूरतेति प्रेरणा। ततो वायुपूर्णे उदरे सति नवद्वार-रोधः कर्त्तव्य इत्याह, नवद्वार इति। नवद्वारे निषिद्धे सत्य-न्तरेवोच्छ्वसन्(२) निश्वसंस्तिष्ठेत, इमं कुम्भकं 'निर्वाणं' मोक्षदं विदुः घटनिचितप्रदीपोपमम्। अयं केवलकुम्भकः। तदुक्तं,

"रेचकं पूरकं मुक्ता सुखं(३) यद्वायुधारणम्(४)।
प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः॥
केवले कुम्भके सिद्धे रेच-पूरक-वर्जिते।
न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते"॥ इति।

अयमष्टविध-कुम्भकानामन्त्यो मुख्यः।

तदुक्तं,—

"सूर्य्यभेदनमुज्जायी सीत्कारी शीतली तथा।
भस्त्रिका(५) भ्रमरी मूर्च्छा केवलश्चाष्ट कुम्भकाः"॥इति।

गोरक्षोऽपि,

(१) क, वर्त्तीं। (२) ख, चान्तरेवमुच्छसन। (३) क, मुखे।
(४) हठप्रदीपिकायां रोधनम्। (५) क, ख, नभसीका।

"द्वाराणां नवकं निरुध्य मरुतं पीत्वोदरे धारितं
नीत्वाकाशमपान-वह्नि-सहितं शक्त्या समुच्छालितम्।
आत्मध्यानयुत(१) स्त्वनेन विधिना मूर्ध्नि ध्रुवं विन्यसेत्,
यावत्तिष्ठति तावदेव महतां सङ्घेन संस्तूयते" ॥ इति।

यद्वा कूर्मवदित्युत्तान-कूर्मासनेन शिरस्यारोपिताभ्यां पाणिपादाभ्याम् आत्मनि मनसि 'धारयेत्' धारणं कुर्य्यात्। एवं कृत्वा पवनाभ्यासे कृते निर्व्वाणकुम्भक-सिद्धिरित्यर्थः। उत्तान-कूर्म्मासनं यथा,

"पद्मासनं सुसंस्थाप्य जान्वोरन्तरे करौ,
निवेश्य भूमौ संस्थाप्य व्योमस्थः कुक्कुटासनम्।
कुक्कुटासन-बन्धस्थो दोर्भ्यां सम्बध्य कन्धराम्।
शेते कूर्मवदुत्तान एतदुत्तानकूर्मकम्"॥ इति।

इदानीं ब्रह्मरन्ध्रेण गमनोपायमाह, ऊर्द्ध्वेति (३४पृ०)। ऊर्द्ध्ववायुविमोचणे सति पद्मपत्रमिव तनीयो ब्रह्मरन्ध्रार्गलं छिन्नं भवति, तस्मिन् भ्रुवोर्मध्ये कूर्मस्थाने 'निरञ्जनं' शुद्धं ब्रह्म ध्येयं ज्ञेयञ्च; वायूर्द्ध्वगमन-प्रकारस्त्वमृतबिन्दावुक्तः; भ्रूमध्ये देवस्य स्थानमुक्तं गोरक्षेण,

"आकाशं यत्परं स्थानं यत्राज्ञाचक्रमुच्यते।
तत्रात्मानं शिवं ध्यात्वा योगी मुक्तिमवाप्नुयात्" ॥ इति ॥

योगसाधनस्थानं किम्? इत्यत आह। निषिद्धेति (३४पृ०)। निषिद्धे स्थले न कर्त्तव्यम्। क्व तर्हि? निर्वात-देशे उपविश्य 'आत्मभूतानां' सर्व्वात्मभावमापन्नानां 'निश्चितं' निर्द्धारितं 'योग-

(१) ख, मण।

सेवयेति' योगाभ्यासेन, न दिष्टमदिष्टं वस्तु ज्ञेयमित्यन्वयः। द्वितीयाः समाप्तार्था।

निषिद्धस्थलानि तु,

"सुराज्ये धार्मिके देशे सुभिक्षे निरुपद्रवे(१)।
एकान्ते मठिकामध्ये स्थातव्यं हठयोगिना"॥

इत्याद्युक्तेभ्योऽन्यानि।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपदवाक्यानां योगतत्त्वस्य दीपिका॥

इति योगतत्त्वोपनिषदो दीपिका सम्पूर्णा॥ ८॥

---

(१) प्रथमार्द्धात् परं

'धनुःप्रमाणपर्य्यन्तं शिलाग्निजलवर्जिते,

इत्यतिरिक्तःपाठो हठदीपिकाया पुस्तकान्तरे दृष्टः।

# अथ सन्न्यासोपनिषदो दीपिका।

ओं सन्न्यासोपनिषत्(१) पञ्चखण्डा तत्त्वमितानया।
सन्नियत्योपकार्य्याङ्गं सन्न्यासे(२) ज्ञानमीर्य्यते॥

योगाभ्यासेन कृतात्मसाक्षात्कारस्य विदुषः सन्न्यास एवोचित इति सेतिकर्त्तव्यताकं सन्न्यासं संविधातुं सन्न्यासोपनिषदारभ्यते। अथाहिताग्निरिति(३५पृ०)। 'प्रेतस्य' मृतस्य, संस्कार उपतिष्ठते इति वक्तव्ये छान्दसः सन्धिः; स्वस्थः सन् 'आश्रमपारं' सर्व्वाश्रमाणामन्त्यं सन्न्यासं गच्छेयमिति। यदीच्छेत्(३) तदापि मन्त्रैः संस्कार उपतिष्ठते(४) इति सम्बन्धः। 'एतान्' वक्ष्यमाणान्, पितृमेधोऽस्ति येषां ते 'पितृमेधिकाः' आत्मीयाः, 'अरण्ये' इति(५) वने एतान् 'ओषधिसम्भारान्' ओषधीनां समूहान् 'सम्भृत्य' समूहीकृत्य अन्त्येष्टये 'अग्नीन्' आहवनीयादीन् 'उपसमाधाय' प्रकटीकृत्य श्राद्ध-तर्पणं, श्राद्धस्याल्पाच्तरत्वात् पूर्वनिपातः, तर्पणञ्च श्राद्धञ्च कृत्वेत्यर्थः, 'ब्राह्मेष्टिं' ब्रह्मा देवता अस्याः सा ब्राह्मी, सा चासाविष्टिश्च तां 'निर्वपेत्' उपक्रमेत्, 'स सर्वज्ञः' इत्यादि कल्पतामित्यन्तं मन्त्रं पठन् निर्वपेदित्यन्वयः। अत ऊर्द्ध्वं, "यज्ञेति,

---

(१) क, ओं सामान्योपनिषत्। (२) क, सत्वविलोपकार्यं स समासे।

(३) क, यदीच्छेयमिति। (४) ख, संस्कार उपविष्ट इति। (५) क, ख, वन इति।

"ब्रह्मजज्ञानं प्रथमं पुरस्ताद्वि सीमतः(१) सुरुचो वेन आवः।

स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः"॥

इति च द्वाभ्यां मन्त्राभ्यां ब्रह्मणे चरुं हुत्वा अथर्वादिभ्य-श्चतुराहुतीर्हुत्वा यत्र यत्रं गच्छेति मन्त्राभ्याम् 'अग्नावरणी' अग्निमन्थनकाष्ठे 'हुत्वा' चिप्त्वा, "यज्ञयज्ञं गच्छ, क्रतुं पतिं गच्छ, स्वां योनिं गच्छ स्वाहा" इत्यधरारणिम्, "एष ते यज्ञो यज्ञपते वाकः सर्ववीरस्तं जुषस्व स्वाहा" इत्युत्तरारणिं चिप्त्वा, ओं चिदि-त्याज्याहुतीर्जुहुयादित्यन्वयः।

मन्त्रार्थस्तु, यो ब्रह्मा 'सर्वज्ञः' सर्वस्य ज्ञाता 'सर्ववित्' सर्वं विन्दति लभते प्राप्तकामः 'तपः' तपःफलाय अमृतत्वाय तस्या-मृतत्वात् तद्यागो ममाप्यमृतत्वं दिशतु इत्यर्थः।

यद्ब्रह्मेत्यस्यार्थस्तु, 'यत्' यत्र यस्मिन् नक्षत्र 'ब्रह्मा' देवः 'अभ्युदय' अभ्यजयत्, किं? दिवं लोकम्, 'इदं' दृश्यमानम् 'अमुञ्च' अदृश्यमानं सर्वमभिजितवानिति पूर्वार्द्धम् अभिजिन्नाम नक्षत्रं ब्राह्मदेवत्यं स्तौति, नक्षत्रद्वारा तद्देवताया ब्रह्मणोऽपि स्तुतिः; उत्तरार्द्धेन प्रार्थना; 'सर्वमभिजन्त्युः' सर्वजननकर्त्री अभिजित् 'सुमनस्यमाना' सुमना भवन्ती 'सर्वश्रियं' सर्वां श्रियं 'दधतु' दधातु करोतु।

ब्रह्मजज्ञानमित्यस्यार्थस्तु, 'वेनः' वेञ् तन्तुसन्ताने इत्यौणादि-को नः, बाहुलकादेव चात्वाभावः; 'जगन्वान्' कर्त्ता ब्रह्मा 'सुरुचः' सुदीप्तिः 'सीमतः' मर्य्यादातः 'पुरस्तात्' पूर्वं 'प्रथमं' मुख्यं

(१) ख, पुरस्तात् द्विसीमतः।

'ब्रह्मजज्ञानं' ब्रह्म वेदः, तस्य जज्ञानं, छान्दसं द्वित्वम्, 'व्यावः' विवृतवान् प्रकटीचकारः, मुख्यो वेदार्थः शुमर्य्यादायाः प्रथमं येन प्रज्ञापित इत्यर्थः। आव इति, वृञ् वरणे लुङ्, मन्त्रे घसेति च्लेर्लुक्, छन्दस्यपि दृश्यत इत्यड़ागमः, गुणः, हल्ङ्याविति तियोर्लोपः, व्यवहिताश्चेति वेर्व्यवहितप्रयोगः, 'व्यावः' व्यवारीत् विवृतवान्, पदस्य पौरुषेयत्वादेव इति पदकालेऽटमेव प्रयुञ्जते। किमुपायोऽयम्? अत आह, 'उपमा' मुख्या उपमा 'अस्य' ब्रह्मणः 'विष्ठा' विस्थानं प्राप्ता, विरुद्धस्थितयो नात्र प्रचरन्ति, अनुपमोऽयमित्यर्थः; वेदार्थोऽनेन प्रकाशितः। अन्यच्च किं कृतम्? अत आह, सतश्च असतश्च 'योनिम्' उत्पत्तिं 'विवः' विवृतवान् प्रकाशितवान् सर्वमुत्पादितवानित्यर्थः। वृञो लुङि बहुलं छन्दस्यमाङ्योगेऽपीत्यड़भावः, विपूर्वः।

अनुवाकैराज्याहुतीरिति प्रत्यृचं होमोऽवगन्तव्यः मन्त्रभेदात्। अनुवाकानां व्याख्यानन्तु गौरवात प्रस्तुतानुपयोगाच्च नोच्यते। 'तैरेव' अनुवाकैः 'उपतिष्ठते' स्तौति मन्त्रप्रकाशितदेवताः; तेषु ऋक्सङ्ख्या यथा, आद्ये एकषष्टिर्ऋचः; द्वितीये षष्टिः; तृतीये सप्तविंशत्; चतुर्थे एकोननवतिः; एवं मिलिता ऋचो द्वे शते सप्तचत्वारिंशच्च। २४७। तद्यथा,

---

॥ ओं ॥

ओं चित्सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान्।
पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥ १ ॥
न ते सखा सख्यं वष्ट्येतत्सलक्ष्मा यद्विषुरूपा भवाति।
महस्पुत्रासो असुरस्य वीरा दिवो धर्तार उर्विया परिख्यन् ॥ २ ॥
उशन्ति घा ते अमृतास एतदेकस्य चित्त्यजसं मर्त्यस्य।
नि ते मनो मनसि धाय्यस्मे जन्युः पतिस्तन्वमा विविश्याः ॥ ३ ॥
न यत्पुरा चकृमा कद्ध नूनमृतं वदन्तो अनृतं रपेम।
गन्धर्वो अप्स्वप्या च योषा सा नो नाभिः परमं जामि तन्नौ ॥ ४ ॥
गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः।
नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः ॥ ५ ॥

---

आदर्शपुस्तकस्थानां ग्रन्थान्तरस्थानाञ्च ऋचां भूयान् भेदो दृश्यते। प्रथमोक्तास्तु ऋचोऽपरिशुद्धाः, अन्तरान्तरा खण्डिताश्च; शेषोक्तास्तु विशुद्धतया परिदृश्यन्ते; अतस्ता एवोपरिभागे, प्रथमोक्ताश्च तदधोभागे निवेश्यन्ते। सन्तः समीक्ष्योभयासां शुद्धाशुद्धी विचारयन्तु।

ॐ चित्सखायं सख्यवत्यां निरपुरुचिदर्णवे जगन्वान्।
पितुर्नपातमादधातुवेधा अधिक्षमि प्रतरं दध्यानः ॥ १ ॥
न ते सखा सख्यं इष्टेतत् स लक्ष्मा यद्विषुरूपा भवति।
महोत्पुत्रासोऽसुरस्य वीरा दिवो धर्त्तार उर्विया परिख्यन ॥ २ ॥
उशतिधाते अमृतासरा एतदेकस्य चित्यजमंमर्त्यं।
सनिते मनो मनसिध्येपस्मे जभ्युः पविस्तव इमा विविश्याः ॥ ३ ॥
न यत्पुरा चकृमाकद्धनूनमृता वदन्तो अमृतरपेम।
गन्धर्व्वा अश्वप्यावद्योपा सानो नाभिः परमं जामितन्नौ ॥ ४ ॥
गर्भे तु नौ जानिता सम्पतीकदेवस्त्वष्टा मविता विता विश्वरूपः।
नकि रस्य प्रमिनन्ति व्रतानि वेद नावस्य पथिवी उत द्योः ॥ ५ ॥

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ ६ ॥
को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह प्र वोचत् ।
बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वीच्या नॄन् ॥ ७ ॥
यमस्य मा यम्यं काम आगन्त्समाने योनौ सहशेय्याय ।
जायेव पत्ये तन्वं रिरिच्यां वि चिद्वहेव रथ्येव चक्रा ॥ ८ ॥
न तिष्ठन्ति न नि मिषन्त्येते देवानां स्पश इह ये चरन्ति ।
अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा ॥ ९ ॥
रात्रीभिरस्मा अहभिर्दशस्येत्सूर्यस्य चक्षुर्मुहुरुन्मिमीयात् ।
दिवा पृथिव्या मिथुना सबन्धू यमीर्यमस्य विवृहादजामि ॥१०॥(१)
आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥ ११ ॥
किं भ्रातासद्यदनाथं भवाति किमु स्वसा यन्निर्ऋतिर्निगच्छात् ।
काममूता बह्वेतद्रपामि तन्वा मे तन्वं सं पिपृग्धि ॥ १२ ॥
न ते नाथं यम्यत्राहमस्मि न ते तनूं तन्वा सं पपृच्याम् ।
अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ॥ १३ ॥
न वा उ ते तनूं तन्वा सं पपृच्यां पापमाहुर्यः स्वसारं निगच्छात् ।
असंयदेतन्मनसो हृदो मे भ्राता स्वसुः शयने यच्छयीय ॥ १४ ॥

---

को अद्ययुङ्क्ते धुरिगाऋतस्य शिमीवतो ० ० ० ० ॥ ६ ॥
० ० ० ० ० ० ० ० ० ० ० ० ० ।
० ० ० ० ० ० ० ० मे तन्वं संपिपृग्धि ॥ १२ ॥
न वा उ यते तन्वाते तन्वातन्वं संपपृच्यां पापमाहुर्यः स्वसारं निगच्छात् ।
असंयदेतन्मनसो हृदो मे भ्राता स्वसुः शयनेपीय ॥ १४ ॥

वतो बतासि यम नैव ते मनो हृदयं चाविदाम।
अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजातै लिबुजेव वृक्षम् ॥१५॥
अन्य ऊ षु यम्यन्य उ त्वां परि ष्वजातै लिबुजेव वृक्षम्।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम्।१६।
त्रीणि छन्दांसि कवयो वि येतिरे पुरुरूपं दर्शतं विश्वचक्षणम्।
आपो वाता ओषधयस्तान्येकस्मिन् भुवन आर्पितानि॥ १७॥
वृषा वृष्णे दुदुहे दोहसा दिवः पयांसि यह्वो अदितेरदाभ्यः।
विश्वं स वेद वरुणो यथा धिया स यज्ञियो यजति यज्ञियाँ ऋतून्।१८
रपद्गन्धर्वीरप्या च योषणा नदस्य नादे परि पातु नो मनः।
इष्टस्य मध्ये अदितिर्नि धातु नो भ्राता नो ज्येष्ठः प्रथमो वि वोचति।१९
सो चिन्नु भद्रा क्षुमती यशस्वत्युषा उवास मनवे स्वर्वती।
यदीमुशन्तमुशतामनु क्रतुमग्निं होतारं विदथाय जीजनन् ॥२०॥२॥

---

वतो वातासि यमनैव ते मनो हृदयञ्चाविदाम।
अन्याकिल त्वां कक्षेव युक्तं परिष्वजति लिबुजेव वृक्षम् ॥ १५ ॥
अन्यमूषुत्वं यम्यन्य उत्वां परिष्वजाते लिबुजेव वृक्षम्।
तस्य वा त्वं मन इच्छा सवातवाधा कृणुष्व संविद सुभद्रम् ॥ १६ ॥
त्रीणि छन्दांसि कवयो वियेतिरे पुरुरूपं दर्शितं विश्वचक्षणम्।
आपो वाता ओषधयस्तान्येकस्मिन् भवन अर्पितानि ॥ १७॥
वृषा वृष्णे दुदुहे दोहसा दिवः पयांसि यको आ अदिते रदाभ्यः।
विश्वं सवेदे वरुणो यथा धिया स यज्ञेयो यजतु यज्ञियो ऋतु ॥ १८ ॥
रयद्गन्धकरीयान्वपोषणा नदस्य मादे परिपातु मे मनः।
इष्टस्य मध्ये आदिति निधातु नो भ्राता नो ज्येष्ठः प्रथमो विवोचति ॥ १९ ॥
सोचिन्नु भद्रा क्षुमती यशस्वत् पुषा मनवे सर्व्वती।
यदीमुशंकामुद्राती मनुक्रतु मग्निं होतारं विदथाय जीजनन् ॥२०॥२॥

अध त्यं द्रप्सं विभ्वं विचक्षणं विराभरदिषिरः श्येनो अध्वरे।
यदी विशो वृणते दस्ममार्या अग्निं होतारमध धीरजायत ॥२१॥
सदासि रण्वो यवसेव पुष्यते होत्राभिरग्ने मनुषः स्वध्वरः।
विप्रस्य वा यच्छशमान उक्थ्यो वाजं ससवाँ उपयासि भूरिभिः।२२।
उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति।
विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती॥ २३ ॥
यस्ते अग्ने सुमतिं मर्तो अख्यत्सहसः सूनो अति स प्र शृण्वे।
इषं दधानो वहमानो अश्वैरा स द्युमाँ अमवान् भूषति द्यून्।२४।
यदग्न एषा समितिर्भवाति देवी देवेषु यजता यजत्र।
रत्ना च यद्विभजासि स्वधावो भागं नो अत्र वसुमन्तं वीतात् ॥२६॥

अधत्यं द्रप्सं विश्वं विचक्षणं विराभ रदिषितः श्येनो अध्वर।
यदी विशोवृणते दस्ममार्या अग्निं होतार मधधी रजायत॥ २१॥
सदा सिरण्वो यवसेव पुष्यते होत्राभिग्ने मनुषः स्वध्वर।
विप्रस्य वा यच्छमान उक्थ्यां राजं स सवाँ उपयासि भूरिभिः॥ २२॥
उदी ० ० ० ० ० ० ० ० ० ० ।
० ० ० ० ० ० मती॥ २३॥
यस्ते अग्ने सुमतिं मर्तो अख्यत्सहसः सूनो अतिमत्र शृण्वे।
इष दधानो वहमानो अश्वैरमो द्युमाँ अमवान् भूषति द्यून॥ २४॥
सुधीनो अग्ने सदनेसधस्थे युक्ष्वरथ-ममृतस्य द्रवितुम।
आनो वहरोदसी देवपुत्रे माकि र्देवानामभूरिहस्याः॥ २५॥
यदग्ने एषा समिति र्भवानि भवाति देवी देवेषु च यजति यजत्रा।
रत्नाचयद्विभजासि धावो भागं नो अत्र वसुमन्तं वीतात्॥ २६॥

अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः।
अनु सूर्य्य उषसो अनु रश्मीननु द्यावापृथिवी आ विवेश॥ २७॥
प्रत्यग्निरुषसामग्रमख्यत्प्रत्यहानि प्रथमो जातवेदाः।
प्रति सूर्य्यस्य पुरुधा च रश्मीन्प्रति द्यावापृथिवी आ ततान॥२८॥
द्यावा ह क्षामा प्रथमे ऋतेनाभिश्रावे भवतः सत्यवाचा।
देवो यन्मर्तान्यजथाय कृण्वन्त्सीदद्धोता प्रत्यङ् स्वमसुं यन्॥२९॥
देवो देवान्परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान्।
धूमकेतुःसमिधाभाऋजीकोमन्द्रोहोतानित्योवाचायजीयान्॥३०॥३
अर्चामि वां वर्धायापो घृतस्नू द्यावाभूमी शृणुतं रोदसी मे।
अहा यद्देवा असुनीतिमायन्मध्वा नो अत्र पितरा शिशीताम्॥३१॥
स्वावृग्देवस्यामृतं यदी गोरतो जातासो धारयन्त उर्वी।
विश्वे देवा अनु तत्ते यजुर्गुर्दुहे यदेनी दिव्यं घृतं वाः॥ ३२॥
किं स्विन्नो राजा जगृहे कदस्याति व्रतं चकृमा को वि वेद।
मित्रश्चिद्धि ष्मा जुहुराणो देवांछ्लोको न यातामपि वाजो अस्ति॥३३

अन्वग्नीति द्वे॥ २७॥
द्यावा ह क्षामा प्रथमे ऋते नाभि श्रावे भवतः सत्यवाचा।
देवो यन्मर्त्ता न्यजथाय कृण्वत् सिदधाता प्रत्यङ् स्वमसंयन्॥ २९॥
देवो देवान् परिभूऋते न वहनो हव्यं प्रथमश्चिकित्वान्।
धूमकेतुः समिधाता ऋजीकोमन्द्रो होता नित्यो वाचा यजीयान्॥ ३०॥ ३॥
अर्चामि वां वर्द्धायपो घृतस्नू द्यावा भुमी शृणुतं रोदसी मे।
अहा यद्यावो सुनीति मयन्मध्वानो अत्र पितरा शिशीताताम्॥ ३१॥
स्ववाग्देवस्यामृतं यदीगोरतो जाता सो धारयन्त उर्व्वी।
विश्वे देवा अनुतत्ते यजुगुर्दुहे यदेनो दिव्यं घृतं वा॥ ३२॥
किं स्वन्नो राजा जगृहे कदस्याति व्रेतं चकृमा को विवेद।
मित्रश्चिद्धिष्मा जुराणो देवा श्लोको न यातामपि वाजो अस्ति॥ ३३॥

दुर्मन्त्वत्रामृतस्य नाम सलक्ष्मा यद्विषुरूपा भवाति ।
यमस्य यो मनवते सुमन्त्वग्ने तमृष्व पाह्यप्रयुच्छन् ॥ ३४ ॥
यस्मिन्देवा विदथे मादयन्ते विवस्वतः सदने धारयन्ते ।
सूर्य्ये ज्योतिरदधुर्मास्य क्तून्परि द्योतनिं चरतो अजस्रा ॥ ३५ ॥
यस्मिन्देवा मन्मनि सञ्चरन्त्यपीच्ये न वयमस्य विद्म ।
मित्रो नो अत्रादितिरनागान्त्सविता देवो वरुणाय वोचत् ॥ ३६॥
सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे ।
स्तुष ऊ षु नृतमाय धृष्णवे ॥ ३७ ॥
शवसा ह्यसि श्रुतो वृत्रहत्येन वृत्रहा ।
मघैर्मघोनो अति शूर दाशसि ॥ ३८ ॥
स्तेगो न क्षामत्येषि पृथिवीं मही नो वाता इह वान्तु भूमौ ।
मित्रो नो अत्र वरुणो युज्यमानो अग्निर्वने न व्यसृष्ट शोकम् ॥३९॥

---

दुर्मन्त्वा मृतस्य नलक्ष्मा यद्विषुरूपा भवीति ।
यमस्य यो मनवत सुमन्तुग्ने तमृष्पा ह्यप्रयुच्छन् ॥ ३४ ॥
यस्मिन् देवा दिदिथे मादयन्ते विवस्वतः सदने धारयन्ते ।
सूर्य्ये ज्योति रदकर्मास्य कूमरि घोतनीयं रतो अजस्रा ॥ ३५ ॥
यस्मिन् देवा मन्यनि सञ्चरन्त्यपीच्ये इनवयमस्य विद्य ।
मित्रो नो अवादिति अनागात सविता देवो वरुणाय वोचन ॥ ३६ ॥
सखीय आशिषा न महि ब्रह्मेन्द्राय वज्रिणे ।
स्तुप ऊषवो नृतमाय धृस्तवे ॥ ३७ ॥
शवमाह्यसि श्रुतो वृत्रहत्येन वृत्रहा ।
मेघै र्मघोनो अति सूरं दांशसि ॥ ३८ ॥
स्तेगीनक्षामत्येति पृथ्वीं मिह्नं न वातो विहवाति भमा ।
मित्रो यत्र वरुणो आज्यामानोग्निर्वनेन व्यसृष्टशोकं ॥ ३९ ॥

स्तुहि श्रुतं गर्तसदं जनानां राजानं भीममुपहत्नुमुग्रम् ।
मृड़ा जरित्रे रुद्र स्तवानो अन्यमस्मत्ते नि वपन्तु सेन्यम् ॥४०॥४॥
सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो हवन्ते सरस्वती दाशुषे वार्य्यं दात् ॥ ४१ ॥
सरस्वतीं पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः ।
आसद्यास्मिन्बर्हिषि मादयध्वमनमीवा इष आ धेह्यस्मे ॥ ४२ ॥
सरस्वति या सरथं ययाथोक्थैः स्वधाभिर्देवि पितृभिर्मदन्ती ।
सहस्रार्घमिड़ो अत्र भागं रायस्पोषं यजमानाय धेहि ॥ ४३ ॥
उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ ४४ ॥
आहं पितॄन्त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥४५ ॥

---

स्तुहि श्रुतगर्त्तसदञ्जनानाममुपहत्नुमुग्रं ।
मडाजरित्रे रुद्रस्तवानोन्यन्ते अस्मिनिवपन्तुसेना ॥ ४० ॥ ४ ॥
० ० ० ० ० ० ० ० ।
० ० ० सरस्वतीदाशुषेवार्यंदात् ॥ ४१॥
सरस्वतीयां पितरोहवन्ते दक्षिणा यज्ञ मभिरक्षमाणा ।
आसद्यास्मिन् बर्हिषिमादयस्वानवी वा इष आधेह्यस्मै ॥ ४२ ॥
सरस्वतौ यासरथं ययाथ स्वधाभिर्देवि पितृभिर्मदन्तौ ।
सहस्रार्घं मिडो अत्रभागं रायस्पोषं यजमानस्यधेहि ॥ ४२ ॥
उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोवन्तु पितरोहवेषु ॥ ४४ ॥
अहं पितृन् सुविदत्राम् अवित्सि नपातञ्च विक्रमणञ्च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजत पित्वस्त इहागमिष्टाः ॥ ४५ ॥

इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो ये अपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु दिक्षु ॥ ४६ ॥
मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।
यांश्च देवा वावृधुर्ये च देवांस्ते नो ऽवन्तु पितरो हवेषु ॥ ४७ ॥
स्वादुः किलायं मधुमाँ उतायं तीव्रः किलायं रसवाँ उतायम् ।
उतो न्वस्य पपिवांसमिन्द्रं न कश्चन सहत आहवेषु ॥ ४८ ॥
परेयिवांसं प्रवतो महीरिति बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा सपर्यत ॥ ४९ ॥
•यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ ।
यत्रा नः पूर्वे पितरः परेता एना जज्ञानाः पथ्या अनु स्वाः ५० ॥५॥
बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शन्तमेनाथा नः शं योररपो दधात ॥ ५१ ॥

---

इदं पितृभ्यो नमो अस्त्वद्यये पूर्वासो उपरास ईयुः ।
येपार्थिवो ऋतस्यानिषत्या येवा नूनं सुविक्ष ॥ ४६ ॥
मातली मवैर्यमो अधेरोभि र्बृहस्पतिर्ऋक्वभिर्वावृधानः ।
यांश्च देवा वृधुर्यच देवांस्वाद्यान्येमन्दन्ति ॥ ४७ ॥
स्वादुः किलायं मधुमो उतापन्तीव्रः किलायं रसवाम् उतायम् ।
उतोन्वस्यपपिवासमिन्द्र न कश्चनसहत आहवेषु ॥ ४८ ॥
परेयिवांस प्रवतो महीरनुबहुभ्यः पन्यामनु यस्य शानं
वैवस्व सङ्गमनं जनानां यमं राजानं हविषा सपर्यत ॥ ४९ ॥
यमो नो गान्तु प्रथमो वेद नैषा गव्यूतिरपभर्तवा उ ।
यत्रा नः पूर्वे पितरः परेता एनाजज्ञोनाः पथ्या अनुस्वाः ॥ ५० ॥ ५
बर्हिषदः पितर ऊत्यर्वागिमावोहव्या चक्रमा जुषध्वम् ।
आ गतावसाशन्तमेनाथा नः शंयोररपोदधात् । ५१ ॥

आच्या जानु दक्षिणतो निषद्येदं नो हविरभि गृणन्तु विश्वे ।
मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥५२॥
त्वष्टा दुहित्रे वहतुं कृणोति तेनेदं विश्वं भुवनं समेति ।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ॥ ५३ ॥
प्रेहि प्रेहि पथिभिः पूर्व्याणैर्येना ते पूर्वे पितरः परेताः ।
उभा राजानौ स्वधया मदन्तौ यमं पश्यासि वरुणं च देवम् ॥५४॥
अपेत वीत वि च सर्पतातो ऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ ५५ ॥
उशन्तस्त्वेधीमह्युशन्तः समिधीमहि ।
उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥ ५६ ॥
द्युमन्तस्त्वेधीमहि द्युमन्तः समिधीमहि ।
द्युमान् द्युमत आ वह पितॄन् हविषे अत्तवे ॥ ५७॥
अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ५८ ॥

---

आ जान्वद्दक्षिणतो निषेधेमपज्ञमभि गृणीत विश्वे ॥
मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥ ५२ ॥
त्वष्टा दुहित्रे वहतं कृणोतीदं विश्वं भुवनं समेति ।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ॥ ५३ ॥
प्रेहि प्रेहि पथिभिः पूर्वेभिर्यत्रानः पूर्वे पितरः परेता ।
उभा राजानौ स्वधया मदन्तौ न यमं पश्यसि वरुणं च देवम् ॥ ५४ ॥
अपेतवीतं विच सर्पतातोस्मा एतं पितरोलोकमक्रन् ।
अहोभिरद्भिरक्तुभिव्यक्तं यमो ददात्यवसनमस्मै ॥ ५५ ॥
उशन्तस्त्वानिधीमह्युशन्तः समिधीमहि ।
उशन्नुशत आ वहपितॄन् हविषे अत्तवे ॥ ५६ ॥
अङ्गिरसो न पितरो नवगा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानमपि भद्रे सौमनसे स्याम् ॥ ५८ ॥

अङ्गिरोभिर्यज्ञियैरा गहीह यम वैरूपैरिह मादयस्व ।
विवस्वन्तं हुवे यः पिता तेऽस्मिन्बर्हिष्या निषद्य ॥ ५९ ॥
इमं यम प्रस्तरमा हि रोहाङ्गिरोभिः पितृभिः संविदानः ।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन्हविषो मादयस्व ॥६०॥

इम एत उदारुहन्दिवस्पृष्ठान्यारुहन् ।
प्र भूर्जयो यथा पथा द्यामङ्गिरसो ययुः ॥ ६१ ॥ ६

प्रथमोऽनुवाकः ॥

यमाय सोमः पवते यमाय क्रियते हविः ।
यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥ १ ॥
यमाय मधुमत्तमं जुहोता प्र च तिष्ठत ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ २ ॥
यमाय घृतवत्पयो राज्ञे हविर्जुहोतन ।
स नो जीवेष्वा यमे दीर्घमायुः प्र जीवसे ॥ ३ ॥

---

अङ्गिरसोभिर्यज्ञियेभिरागहि यम वै रूपैरिह मादयस्व ।
विवस्वन्तं हुवे यः पिता तस्मिन् यज्ञे बर्हिष्यामि एषा ॥ ५९ ॥
इमं यम प्रस्तरमा हि साहाङ्गिरोभिः पितृभिः संविदानः ।
आ त्वा मन्त्राः कविचात्ता बहन्तना राजन्हविषोमादयस्व ॥ ६० ॥
इत एष उदारुहन्दिवस्पृष्ठान्यारुहन् ।
प्रभूर्जयो यथाद्यामङ्गिरसोयुत ॥ ६१ ॥ ६
अनुवाकसूक्तं प्रथमं ।१। ऋच एकषष्टिः । ६१ ।
यमाय सोम पवते यमायक्रियते हविः ।
यमं हयज्ञोगच्छत्यग्निदूतो अरं कृतः ॥ १ ॥
यमाय मधुमत्तमं जुहोत प्रच तिष्ठत ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ २ ॥
यमाय घृतवत्पयो राज्ञे हविर्जुहोतनन ।
स नो जीवेष्वा यमे दीर्घमायुः प्रजीवसे ॥ ३ ॥

मनमग्ने वि दहो माभि शूशुचो मास्य त्वचं चिचिपो मा शरीरम्।
शृतं यदा करसि जातवेदोऽथेममेनं प्र हिणुतात्पितृं रूप ॥ ४॥
यदा शृतं कृणवो जातवेदोऽथेममेनं परि दत्तात्पितृभ्यः।
यदो गच्छात्यसुनीतिमेतामथ देवानां वशनीर्भवाति ॥ ५ ॥
त्रिकद्रुकेभिः पवते षडुर्वीरेकमिद्बृहत्।
त्रिष्टुब्गायत्री छन्दांसि सर्व्वा ता यम आर्पिता ॥ ६ ॥
सूर्यं चक्षुषा गच्छ वातमात्मना दिवं च गच्छ पृथिवीं च धर्मभिः।
अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः ॥७॥
अजो भागस्तपसस्तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः।
यास्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकम् ॥ ८॥
यास्ते शोचयो रंहयो जातवेदो याभिरापृणासि दिवमन्तरिक्षम्।
अजं यन्तमनुताः समृण्वतामथेतराभिः शिवतमाभिः शिवं कृधि ॥९॥

---

मैनमग्निर्विदहोमाभि शोचोमास्यत्वचं चिक्षिपो मा शरीरम्।
यदा शृतं कृणवो जातवेदोऽथेमेनं प्र हिणुतात् पितृभ्यः ॥ ४ ॥
यदा शृतं कृणवो जातवेदोऽथेमेनं परिदत्तात्पितृभ्यः।
यदा गच्छात्यसुनीति मेतामथादेवानां वशनिर्भवाति ॥ ५ ॥
त्रिकद्रुकेभिः पवते षडुर्वीँकमिद्‌त्।
त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आहिता ॥६॥
सूर्य्यं चक्षुषा गच्छ वातमात्मना दिवञ्च गच्छ पृथिवीं च धर्मभिः।
आपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतिष्ठा शरीरैः ॥ ७ ॥
अजो न्यगस्तपसास्तं तपस्वन्तं ते शोचिस्तपतु तन्ते अर्चिः।
० ० ० ० ० ० ० ॥ ८ ॥
० ० ० ० ० याभिरापृणासेदेव मन्तरिक्षम्।
अयन्त तमनुतामयवता मथेतराभिः शिवतमाभिःशृतं कृधि ॥ ९ ॥

अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधावान्।
आयुर्वसान उप यातु शेषः सं गच्छतां तन्वा सुवर्चाः ॥१०॥७॥
अति द्रव श्वानौ सारमेयौ चतुरक्षौ शबलौ साधुना पथा।
अधा पितॄन्त्सुविदत्राँ अपीहि यमेन ये सधमादं मदन्ति ॥११॥
यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिषदौ नृचक्षसा।
ताभ्यां राजन्परि धेह्येनं स्वस्त्यस्मा अनमीवं च धेहि ॥ १२ ॥
उरूणसावसुतृपावुदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥ १३ ॥
सोम एकेभ्यः पवते घृतमेक उपासते।
येभ्यो मधु प्रधावधि तांश्चिदेवापि गच्छतात् ॥ १४ ॥
ये चित्पूर्व ऋतसाता ऋतजाता ऋतावृधः।
ऋषीन्तपस्वतो यम तपोजाँ अपि गच्छतात् ॥ १५ ॥

---

अव सृज पुनरग्ने पितृभ्यो यस्य आहुति चरति स्वधानिः।
आयुर्वसान उप यातु शेषः सङ्गतां तन्वां सुवर्चा ॥ १० ॥ ७ ॥
अति द्रव श्वानौ सारमेयौ चतुरक्षौशवलौ साधुना यथा।
अधापितृन् सुविदत्ता अपेहि यमेन ये सद्माम्न्द मदन्ति ॥ ११ ॥
यौ तेश्वानौ यम रक्षितारौचतुः पथिरक्षौ पथियदिन् चक्षुषा।
ताभ्यां राजन्परिधेह्येनं स्वस्त्यस्मा अननीवं च धेहि ॥ १२ ॥
उरुणसावसुतृपा वुदुम्बलौ यमस्य दुतौ चरतौ जनां अनु।
तावस्मभ्यं दृशये सूर्याय पुनर्वातामसुमद्य ह भद्रम् ॥ १३ ॥
सोममेकेभ्यः पवते घृतमेक उपासते।
येभ्यो मधु प्रधाच ऋतितीश्चिदेवापि गच्छतात् ॥ १४ ॥
येचित् पूर्वऋतसापऋताजाता ऋतावृधः।
ऋषीनृपस्वतो यमतपोजा अपि गच्छतात् ॥ १५ ॥

तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः।
तपो ये चक्रिरे महस्तांश्चिदेवापि गच्छतात्॥ १६॥
ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः।
ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात्॥ १७॥
सहस्रणीथाः कवयो ये गोपायन्ति सूर्य्यम्।
ऋषीन्तपस्वतो यम तपोजाँ अपि गच्छतात्॥ १८॥
स्योनास्मै भव पृथिव्यनृक्षरा निवेशनी। यच्छास्मै शर्म सप्रथाः॥१९॥
असम्बाधे पृथिव्या उरौ लोके नि धीयस्व।
स्वधा याश्चकृषे जीवंस्तास्ते सन्तु मधुश्चुतः॥ २०॥ (८)
ह्वयामि ते मनसा मन इहेमान् गृहाँ उप जुजुषाण एहि।
सङ्गच्छस्व पितृभिः सं यमेन स्योनास्त्वा वाता उप वान्तु शग्माः॥२१॥

---

तपसा ये ऋनाधृष्यास्तपसा येस्वर्य्ययुः।
तपो ये चक्रिरे महस्तांश्चिदेवापि गच्छतात्॥ १६॥
ये युध्यन्ते प्रधानेषु शूरासो ये तनूत्यजः।
ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात्॥ १७॥
सहस्रणीथाः कवयो ये गोपायन्ति सूर्य्यम्।
ऋषींस्तपस्वतो यम तपोजा अपि गच्छतात्॥ १८॥
स्योनास्मै पृथिविभवानृक्षरानिवेशनी।
यच्छास्मैशर्मसप्रथः॥ १९॥
असम्बाधे पृथिव्या उरो कलोकेनिधीयस्व।
स्वधा याश्च ऋषेजीवन्तीस्ते सन्तु मधुश्चुतः॥ २०॥
ह्वयामि ते मनसा मन इदामां गृहमुपजुजुषाणएहि।
सगच्छस्व पितृभिः सयमेनस्योनस्त्वावाता उपवान्तु शग्माः॥ २१॥

उस्त्रा वहन्तु मरुत उदवाहा उदप्रुतः ।
अजेन कृण्वन्तः शीतं वर्षेणोक्षन्तु बालिति ॥ २२ ॥
उदह्वमायुरायुषे क्रत्वे दक्षाय जीवसे ।
स्वान् गच्छतु ते मनो अधा पितॄंरुप द्रव ॥ २३ ॥
मा ते मनो मासोर्माङ्गानां मा रसस्य ते ।
मा ते हास्त तन्वः किं चनेह ॥ २४ ॥
मा त्वा वृक्षः सं बाधिष्ट मा देवी पृथिवी मही ।
लोकं पितृषु वित्त्वैधस्व यमराजसु ॥ २५ ॥
यत्ते अङ्गमतिहितं पराचैरपानः प्राणो य उ वा ते परेतः ।
तत्ते सङ्गत्य पितरः सनीडा घासाद्घासं पुनरा वेशयन्तु ॥ २६ ॥
अपेमं जीवा अरुधन्गृहेभ्यस्तं निर्वहत परि ग्रामादितः ।
मृत्युर्यमस्यासीद्दूतः प्रचेता असून् पितृभ्यो गमयां चकार ॥ २७ ॥

---

उस्त्रा वहतु मरुत उदवाहा उदप्लुतः ।
अजेन कृण्वन्तः शीतं वर्षेणोक्षन्तु बालिति ॥ २२ ॥
उदह्रमायुषेत् क्रत्वेदक्षाय जीवसे ।
स्वान्गच्छतु स्वान्गच्छतुस्वानग मनो अथापितृं अप द्रव ॥ २३ ॥
मतिमानो मासोर्मानां मा रसस्य ते ।
हास्तनन्वादः किञ्चनोह ॥ २४ ॥
मा त्वा वक्ष व्याधिष्ट मा देवी मही ।
लोक पितृषु वित्तैधस्व यमराजसु ॥ २५ ॥
यते अङ्गमते हितं पराचिरं पावप्रिय उवीते परतः ।
तिते सङ्गत्य पितरः सनीज घासं पुनरा वेशयन्तु ॥ २६ ॥
अपेम जीवा अरुधगृहेभ्यस्तन्निर्वहतपरिग्रामादितः ।
मृत्युर्यमस्यासीद्दतः प्रचेता असून पितृभ्यो गमयाञ्चकार ॥ २७ ॥

ये दस्यवः पितृषु प्रविष्टा ज्ञातिमुखा अहुतादश्चरन्ति।
परापुरो निपुरो ये भरन्त्यग्निष्टानस्मात्प्र धमाति यज्ञात्॥ २८॥
सं विशन्त्विह पितरः स्वा नः स्योनं कृण्वन्तः प्रतिरन्त आयुः।
तेभ्यः शकेम हविषा नक्षमाणा ज्योग्जीवन्तः शरदः पुरूचीः।२९॥

यां ते धेनुं निपृणामि यमु ते क्षीर ओदनम्।
तेना जनस्यासो भर्ता यो ऽत्रासदजीवनः॥३०॥ (९)

अश्वावतीं प्र तर या सुशेवार्क्षाकं वा प्रतरं नवीयः।
यस्त्वा जघान वध्यः सो अस्तु मा सो अन्यद्विदत भागधेयम्।३१।
यमः परो ऽवरो विवस्वान्ततः परं नाति पश्यामि किं चन।
यमे अध्वरो अधि मे निविष्टो भुवो विवस्वानन्वाततान॥ ३२॥
अपागूहन्नमृतां मर्त्येभ्यः कृत्वा सवर्णामदधुर्विवस्वते।
उताश्विनावभरद्यत्तदासीदजहादुवा मिथुना सरण्यूः॥ ३३॥

---

ये दस्यवः पितृषु प्रविष्टाज्ञाति मुखा आऊतदेश्चरन्ति।
परापुरो ये भवन्त्यग्निष्टाल्लोकान् प्रणुदात्वस्मान् प्रधमाति यज्ञात्॥ २८॥
संविशंत्विह पितरः स्वातस्योनं कृणुन्तः प्रतिरन्तः आयुः।
तेभ्यः शकेम हविषा यजमानाज्योग्जीवचान्त; शरदः पुरूचो॥ २९॥
याते धेनुं पृणामि यमुतेक्षीर अवोदनाम्।
तेनाजनस्यासो भर्ता योचारदजीवनः॥ ३०॥ ९॥
अश्वावन्ती प्रत्तर यासुशे वा ऋचाकाक्षी प्रतरं नवीयः।
यस्त्वा यथा ववद्वा सोस्तु मासोन्यद्वितर भागं धेयं॥ ३१॥
यमः परोविवस्वान्ततः परं नाति पश्यामि किञ्चन।
दमे अध्वरो अधिमे निविष्टोभुवोपि विवस्वानत्वाततान॥ ३२॥
यया गूरम्रमता मर्त्येभ्यः कृत्वा सवर्णा मदधुर्विवसते।
उताश्विनाचभरय तदा सीदजहादुद्रमिथुना रण्यूः॥ ३३॥

ये निखाता ये परोप्ता ये दग्धा ये चोद्धिताः।
सर्व्वांस्तानग्न आ वह पितॄन् हविषे अत्तवे ॥ ३४ ॥
ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते।
त्वं तान्वेत्थ यदि ते जातवेदः स्वधया यज्ञं स्वधितिं जुषन्ताम् ॥३५
शं तप माति तपो अग्ने मा तन्वं तपः।
वनेषु शुष्मो अस्तु ते पृथिव्यामस्तु यद्धरः॥ ३६॥
ददाम्यस्मा अवसानमेतद्य एष आगन्मम चेद्भूदिह।
यमश्चिकित्वान् प्रत्येतदाह ममैष राय उप तिष्ठतामिह ॥ ३७ ॥
इमां मात्रां मिमीमहे यथापरं न मासातै। शते शरत्सु नो पुरा॥३८
प्रेमां मात्रां०।०॥ ३९ ॥
अपेमां मात्रां०।०॥ ४० ॥ (१०)

---

ये निखाता ये परोप्ता येद्या येचोद्धिताः।
सर्वांस्तानग्न आवह पितॄन् ये अग्निदग्भाविषये अत्तवे ॥ ३४ ॥
ये अनग्निदग्ध समध्ये दिवं स्वधया दयन्तः।
त्वन्तान्वेत्थ यदि तज्जातावादः स्वधया यज्ञं स्वधितं जुषन्ताम् ॥ ३५ ॥
शन्तममतिनाया अग्ने मातपनन्तपः।
वनेषु शुष्मो अस्ति ते पृथिव्यामस्तु यद्धरः॥ ३६ ॥
ददाम्यस्मा अवसानमेतद्य एष आगन्मावेद भूदिह।
यमश्चिकित्वात् प्रश्या तदाश्चिमामेषराय उपतिष्ठतामिह ॥ ३७ ॥
इमां मात्रामामाह। यथा परन्न मासते।
शान्त शरत्सु नो पुरा ॥ ३८ ॥
प्रमात् ०।०॥ ३९ ॥
आपोमा ०।०॥ ४० ॥

वीमां मात्रां०।०॥ ४१ ॥

निरिमां मात्रां०।०॥ ४२ ॥

उदिमां मात्रां०।०॥ ४३ ॥

समिमां मात्रां मिमीमहे यथापरं न मासातै ।

शते शरत्सु नो पुरा ॥ ४४॥

अमासि मात्रां स्वरगामायुष्मान् भूयासम् ।

यथापरं न मासातै शते शरत्सु नो पुरा ॥ ४५ ॥

प्राणो अपानो व्यान आयुश्चक्षुर्दृशये सूर्याय ।

अपरिपरेण पथा यमराज्ञः पितॄन् गच्छ ॥ ४६ ॥

ये अग्रवः शशमानाः परेयुर्हित्वा द्वेषांस्यनपत्यवन्तः ।

ते द्यामुदित्याविदन्त लोकं नाकस्य पृष्ठे अधि दीध्यानाः ॥ ४७ ॥

---

वीमाः ०।०॥ ४१ ॥

मिनिरिमो ०।०॥ ४२ ॥

उद्दिमाम् ०।०॥ ४३ ॥

स मिपात्रा मिमाव यथा परन्नमासते ।

शते शरत्सु नो पुरा ॥ ४४ ॥

अमासि मामा स्वरगामायुष्मान्भूयासम् ।

यथा परं नमासते शतशरशरत् सरनो पुरा ॥ ४५ ॥

प्राणे अपानोव्यान आयुश्चक्षुर्दृशये सूर्याय ।

अपरि प्ररेण यथा यमं राजं पितृनाच्छ ॥ ४६ ॥

ये अवग्रवः शशंमानाः पारयुर्हित्वा द्विषां स्वनपत्यवन्तः ।

तद्यामुदित्वा पिदन्त लोकं नाकस्य पृष्ठ अधिदीध्यानः ॥ ४७ ॥

उदन्वती द्यौरवमा पीलुमतीति मध्यमा ।
तृतीया ह प्रद्यौरिति यस्यां पितर आसते ॥ ४८ ॥
ये नः पितुः पितरो ये पितामहा य आविविशुरुर्वन्तरिक्षम् ।
य आक्षियन्ति पृथिवीमुत द्यां तेभ्यः पितृभ्यो नमसा विधेम ॥ ४९॥
इदमिद्वा उ नापरं दिवि पश्यसि सूर्य्यम् ।
माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि ॥ ५० ॥ (११)
इदमिद्वा उ नापरं जरस्यन्यदितो ऽपरम् ।
जाया पतिमिव वाससाभ्येनं भूम ऊर्णुहि ॥ ५१ ॥
अभि त्वोर्णोमि पृथिव्या मातुर्वस्त्रेण भद्रया ।
जीवेषु भद्रं तन्मयि स्वधा पितृषु सा त्वयि ॥ ५२ ॥
अग्नीषोमा पथिकृता स्योनं देवेभ्यो रत्नं दधथुर्वि लोकम् ।
उप प्रेष्यन्तं पूषणं यो वहात्यञ्जयानैः पथिभिस्तत्र गच्छतम् ॥ ५३ ॥

---

उदेन्वती धौरेव मायोल्लमतीति मध्यमा ।
ततीयाह प्रयोरिति यस्यां पितरः आमते ॥ ४८ ॥
ये नः पितरो ये पितामहा यापिविशु रुवान्तरिक्षम् ।
य आचिपन्ति पृथिवीमृतपां नममाविधेम ॥ ४९ ॥
इदं सिद्धावनापरं दिविपश्यामि मूर्थम् ।
मा मातापुत्रं यथा मिचाभ्येनं भूम ऊर्णुहि ॥ ५० ॥
इदमिद्वा ऊर्णामि पृथिव्यानापरं जरस्यत्यदितोऽपरं ।
जो प्रापत्यं मिववासमामसंभम ऊर्णुहि ॥ ५१ ॥
अनित्वोर्णामि पृथिव्यामातुर्वस्त्रेण भद्रया ।
जीवेषु भद्रं जनापि स्वापितृषु मात्वयि ॥ ५२ ॥
अग्निं मोमापृथिवी कृतास्योनं देवेभ्योरत्नदधथुर्वलोकम् ।
उपप्रेष्यन्तं मषणं योवत्याजायानैः पथिभिः तत्र गच्छतम् ॥ ५३ ॥

पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः।
स त्वैतेभ्यः परि ददत्पितृभ्यो अग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥५४॥
आयुर्विश्वायुः परि पातु त्वा पूषा त्वा पातु प्रपथे पुरस्तात्।
यत्रासते सुकृतो यत्र त ईयुस्तत्र त्वा देवः सविता दधातु ॥ ५५ ॥
इमौ युनज्मि ते वह्नी असुनीताय वोढवे।
ताभ्यां यमस्य सादनं समितीश्चाव गच्छतात् ॥५६॥
एतत्त्वा वासः प्रथमं न्वागन्नपैतदूह यदिहाबिभः पुरा।
इष्टापूर्तमनुसङ्क्राम विद्वान्यत्र ते दत्तं बहुधा विबन्धुषु ॥ ५७ ॥
अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व मेदसा पीवसा च।
नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्विधक्ष्यन्पर्यङ्खयातै ॥ ५८ ॥
दण्डं हस्तादाददानो गतासोः सह श्रोत्रेण वर्चसा बलेन।
अत्रैव त्वमिह वयं सुवीरा विश्वा मृधो अभिमातीर्जयेम ॥ ५९ ॥

---

पूषात्वेतश्चरावयतु प्रयथेपुरानात्त विद्वान नष्ट पशुर्भवनस्य गोपाः।
स त्वैतेभ्यः परिधन् पितृभ्योऽग्नि र्देवेभ्यः सुविदवियेभ्यः ॥ ५४ ॥
आयुर्विश्वायुः परिमामति त्वा पूषा त्वा पातु प्रयथे पुरानात।
यत्रासते सुकृतो यवते ययुस्तव त्वा देव सविता दधातु ॥ ५५ ॥
इमौ युनर्ज्मता वन्हो असुरीनाथ वेटवे।
ताभ्यां यमस्य सादन समितीश्चाव गच्छतात् ॥ ५६ ॥
एता एवा सः प्रथमत्वागन्नयैतउ पूपं हविभिः पुरा।
इष्टापूर्त्तमनुसंक्रम विश्वान्यत्र यदेत वहुधा विवन्धुषु ॥ ५७ ॥
अग्नेर्वर्म परिगोभि र्व्ययस्व संप्रोर्णुष्व पर्चसामेद सा च।
नेत्वा धृष्णुर्हरसा जर्हृषाणो दधद्यन्यर्पखयाते ॥ ५८ ॥
दण्डहस्तादागतो गतासोः सह श्रोत्रेण वर्चसावलेन।
अत्रैव त्वमिह ० ० ० ० ॥ ५९ ॥

धनुर्हस्तादाददानो मृतस्य सह क्षत्रेण वर्चसा बलेन ।
समागृभाय वसु भूरि पुष्टमर्वाङ् त्वमेह्युप जीवलोकम् ॥६०॥ १२

॥ द्वितीयोऽनुवाकः ॥

इयं नारी पतिलोकं वृणाना नि पद्यत उप त्वा मर्त्य प्रेतम् ।
धर्म्मं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि ॥ १ ।
उदीर्ष्व नार्य्यभि जीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥ २ ॥
अपश्यं युवतिं नीयमानां जीवां मृतेभ्यः परिणीयमानाम् ।
अन्धेन यत्तमसा प्रावृतासीत्प्राक्तो अपाचीमनयं तदेनाम् ॥ ३ ॥
प्रजानत्यघ्न्ये जीवलोकं देवानां पन्थामनुसञ्चरन्ती ।
अयं ते गोपतिस्तं जुषस्व स्वर्गं लोकमधि रोहयैनम् ॥ ४ ॥
उप द्यामुप वेतसमवत्तरो नदीनाम् ।
अग्ने पित्तमपामसि ॥ ५ ॥

---

० ० ० ० क्षत्रेण वर्चसाबलेन ।
समागृभायमभूरि पुष्टमवाङ्त्वमेह्युपजीप लोकम् ॥ ६० ॥ १२ ॥
इत्यनुवाकमूक्तं द्वितीयम् ॥ २ ॥
ऋचः षष्टिः ॥ ६० ॥
इयंनारी पतिलोकं वृणताजि पद्यत उप त्वामर्त्य प्रेतं ।
धर्मं पुराणमनुपादलयन्ती तस्यै प्रजां द्रविणं वेचहि ॥ १ ॥
उदीर्घ नार्य्य नार्यभि जीवलोकं गताऋमेतमुप शेषं पृथि ।
हस्तिग्रामस्य दिधियोस्तवेदं पत्युर्जनित्वमभि सम्बभूथ ॥ २ ॥
अपश्यं युवति नीयमानं जीवामृतेभ्यः परिणीयमानम् ।
अन्धेन यत्तमसा प्रावृतामीतप्राक्तो आयावो पुनर्यन्तदेनाम् ॥ ३ ॥
प्रजामत्पद्य जीवलोकं दिवानां यथा मनुसञ्चरन्ती ।
अयमं गोपतिस्तं जुप स्वर्गलोकमधि रोचयेनम् ॥ ४ ॥
उप द्यामुप वेतसमवतरो नदीनाम् ।
अग्ने पित्तं मयमेसि ॥ ५ ॥

यं त्वमग्ने समदहस्तमु निर्वापया पुनः।
क्याम्बूरत्र रोहतु शाण्डदूर्वा व्यल्कशा ॥ ६ ॥
इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सं विशस्व।
संवेशने तन्वा चारुरेधि प्रियो देवानां परमे सधस्थे ॥ ७ ॥
उत्तिष्ठ प्रेहि प्र द्रवौकः कृणुष्व सलिले सधस्थे।
तत्र त्वं पितृभिः संविदानः सं सोमेन मदस्व सं स्वधाभिः ॥ ८ ॥
प्र च्यवस्व तन्वं सं भरस्व मा ते गात्रा वि हायि मो शरीरम्।
मनो निविष्टमनुसंविशस्व यत्र भूमेर्जुषसे तत्र गच्छ ॥ ९ ॥
वर्चसा मां पितरः सोम्यासो अञ्जन्तु देवा मधुना घृतेन।
चक्षुषे मा प्रतरं तारयन्तो जरसे मा जरदष्टिं वर्धन्तु ॥ १० ॥१३
वर्चसा मां समनक्त्वग्निर्मेधां मे विष्णुर्न्यनक्त्वासन्।
रयिं मे विश्वे नि यच्छन्तु देवाः स्योना मापः पवनैः पुनन्तु॥११॥

---

यं त्वमग्ने समदहस्तमु निर्वापया पुनः।
क्कियांत्व उरोहतु शोऽदुर्वा व्यल्कशा ॥ ६ ॥
इदन्त एक पर कत एकं तृतीयेन ज्योतिषा सं विशस्व।
यं वेशने तत्कवारुरेधि प्रियो देवानां परमे सधस्थे ॥ ७ ॥
उत्तिष्ठ प्रेहि प्रद्रवौधः कृणुष्व सलिले सधस्थे।
तत्र त्वं पितृभिः संविदानः सं सोमेन मदस्व सं स्वधाभिः ॥ ८ ॥
प्र च्यवस्व तत्वं सम्भरस्व मा तेगा संविशायमो शरीरम्।
मनो नुविष्ठ मनुसंविशस्व कतुर्भे जुषसे तत्र गच्छ ॥ ९ ॥
वर्चसा मा पितरः सोम्यासो अजन्तु देवा मधुना घृतेन।
चक्षुषे मा प्रतरंधाता रयन्तो जरसे मा जरदृष्टिवर्द्धतु ॥ १० ॥ १३॥
वर्द्धसा मां समनक्ताग्निर्मेधा मेविष्णुर्न्यर्धेतत् कासान।
रयिं मे विश्वे नियच्छतु देवाः स्योना मायुः पवनैः पुनन्तु ॥ ११ ॥

मित्रावरुणा परि मामधातामादित्या मा स्वरवो वर्धयन्तु।
वर्चो म इन्द्रो न्यनक्तु हस्तयोर्जरदष्टिं मा सविता कृणोतु ॥१२॥
यो ममार प्रथमो मर्त्यानां यः प्रेयाय प्रथमो लोकमेतम्।
वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा सपर्यत ॥ १३ ॥
परा यात पितर आ च यातायं वो यज्ञो मधुना समक्तः।
दत्तो अस्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं दधात ॥१४॥
कण्वः कक्षीवान्पुरुमीढो अगस्त्यः श्यावाश्वः सोभर्यर्चनानाः।
विश्वामित्रोऽयं जमदग्निरत्रिरवन्तु नः कश्यपो वामदेवः ॥ १५ ॥
विश्वामित्र जमदग्ने वसिष्ठ भरद्वाज गोतम वामदेव।
शर्दिर्नो अत्रिरग्रभीन्नमोभिः सुसंशासः पितरो मृडता नः ॥१६॥
कस्ये मृजाना अति यन्ति रिप्रमायुर्दधानाः प्रतरं नवीयः।
आप्यायमानाः प्रजया धनेनाध स्याम सुरभयो गृहेषु ॥ १७ ॥

---

मित्रावरुणायो यमाधातामादित्या मा स्वरवो वर्द्धयन्तु।
वर्चो म इन्द्रो त्यनुतक हस्तयोर्जरदष्टिं मां सविता चणेतु ॥ १२ ॥
यो ममार प्रथमो मर्त्यानां यः प्रियाय प्रथमो लोकमेतम्।
वैवस्वतं सङ्गमनं जनानां यमं राजानं सर्पिषा सपर्यत् ॥ १३ ॥
परा यात पितर आ च यातायं वो ज्ञो मधुना मतः।
दतो अस्मभ्यं द्रविणेह भद्रं रयिस्रतः सर्वं वीरं दधातु ॥ १४ ॥
कधेः कक्षीवानुरुमेधो अगस्त्यः श्यावाश्व सोभयविना ना।
विश्वामित्रोयं जमदग्निरत्रिरवन्त्, न कश्यपो वामदेव ॥ १५ ॥
विश्वामित्र जमदग्नि वशिष्ठ भरद्वाज गौतम वामदेव।
शर्दिनो अविरग्रभीतुमोत्तिः सुमंतसासः पितरो मृडता नः ॥ १६ ॥
कस्ये मृजाना मति यन्ति रिप्रग्रायुर्दधामः प्रतरं नवीयः।
अपापमानाः प्रजया धनेनाधः स्याम सुरभयो गृहेषु ॥ १७ ॥

अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मधुनाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमासु गृह्णते॥१८॥
यद्वो मुद्रं पितरः सोम्यं च तेनो सचध्वं स्वयशसो हि भूतम् ।
ते अर्वाणः कवय आ शृणोत सुविदत्रा विदथे हूयमानाः ॥१९॥
ये अत्रयो अङ्गिरसो नवग्वा इष्टावन्तो रातिषाचो दधानाः ।
दक्षिणावन्तः सुकृतो य उ स्थासद्यास्मिन्बर्हिषि मादयध्वम्।२०।१४।
अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशशानाः ।
शुचीदयन्दीध्यत उक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ।२१।
सुकर्माणः सुरुचो देवयन्तो अयो न देवा जनिमा धमन्तः।
शुचन्तो अग्निं वावृधन्त इन्द्रमुर्वीं गव्यां परिषदं नो अक्रन्।२२।
आ यूथेव क्षुमति पश्वो अख्यद्देवानां जनिमान्त्युग्र ।
मर्तासश्चिदुर्वशीरकृप्रन्वृधे चिदर्य उपरस्यायोः ।। २३ ॥

---

अञ्जतं व्यञ्जते समञ्जते क्रतुं रिहन्ति मधुनाभ्यञ्जते ।
सिन्धोरुच्छ्वासे यतयंतं मुचण हिरण्ययावाः पशुमास्र गृभनुते ॥ १८॥
यद्वो मुदं पितरः सोम्यञ्च तेनो संवध्वं स्वयशो हि भूतते ।
ते अर्वाणः कवय आशृणो ते सुदत्रा विदथे ह्वयमाना ॥ १९ ॥
य अत्र योऽग्ग्सो नवग्वा इष्टावन्तो भतियाचो दधानाः ।
दक्षिणावन्तः सुकृतो व उ स्थासद्यस्मिन्बर्हिषि सादयध्वं ॥ २० ॥ ४ ॥
आधा यथा नः पितरः परासः प्रसन्नसो अग्न क्रतमाशुषाणाः ।
शुचीदयंदीधिति मुकथशासः क्षामा मिदन्तो अरुणेरपभ्रन् ॥२१॥
सुकर्माणः सुरुचो ० ० ० ० ० ० देवा जनिधयन्तः ।
शुचन्तो अग्निं इधत इन्द्र पूर्वग व्यम्परिषदन्तोऽरमन् ॥ २२ ॥
आ मूर्थे चक्षुमत्ति पश्वोऽरचद्देवानां यतानिमां त्वुग्र ।
मर्त्तात्यश्चिदुर्वशीरकृप्रत्यधे विदर्य्य उपरस्यायो ॥ २३ ॥

अकर्म्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः॥ २४॥
इन्द्रो मा मरुत्वान् प्राच्या दिशः पातु बाहुच्युता पृथिवी द्या-
मिवोपरि।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ॥२५॥
धाता मा निरृत्या दक्षिणाया दिशः पातु बाहु० । ०॥ २६॥
अदितिर्म्मादित्यैः प्रतीच्या दिशः पातु बाहु०।०॥ २७॥
सोमो मा विश्वैर्देवैरुदीच्या दिशः पातु बाहु०।०॥ २८॥
धर्त्ता ह त्वा धरुणो धारयाता ऊर्ध्वं भानुं सविता द्यामिवोपरि।
लोककृतः०।०॥ २९॥
प्राच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहु०।०।३०।१५
दक्षिणायां त्वा दिशि पुरा०।०॥ ३१॥

---

अकर्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः॥ २४॥
इन्द्रो मरुत्वान् प्राच्या दिशः पान्तु बाहुच्युता पृथिवी द्यामिवोपरि।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागां इहस्थः॥ २५॥
धाता मा निरृत्या दक्षिणा दिशः ०। ०॥ २६॥
अदितिर्मादित्यैः प्रतिची दिशः ०। ०॥ २७॥
सोमो मां विश्वेर्देवै रुद्रै रुद्रा उदीच्या दिशः पान्तु बाहु ०। ० ॥ २८॥
० ० ० ० ० ० ० कृता पृथिवीं द्यामिव।
धर्त्ताहत्वाधरुणो धारयेत यतो ऊर्धभानुं सविता द्यामिव॥ २९॥
प्राचयां त्वादिशि पुरा संवृतः स्वधायामदधानिबाहुच्युता पृथिवीं द्यामिव
॥ ३०॥ १५॥
दक्षिणायां त्वा ०। ०॥ ३१॥

प्रतीच्यां त्वा दिशि पुरा०।०॥ ३२ ॥

उदीच्यां त्वा दिशि पुरा०।० ॥ ३३ ॥

ध्रुवायां त्वा दिशि पुरा०।०॥ ३४ ॥

ऊर्ध्वायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युता पृथिवी द्यामिवोपरि।

लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥३५॥

धर्तासि धरुणो ऽसि वंसगो ऽसि ॥ ३६ ॥

उदपूरसि मधुपूरसि वातपूरसि ॥ ३७ ॥

इतश्च मामुतश्चावतां यमे इव यतमाने यदैतम्।

प्र वां भरन्मानुषा देवयन्त आ सीदतं स्वमु लोकं विदाने ॥३८॥

स्वासस्थे भवतमिन्दवे नो युजे वां ब्रह्म पूर्व्यं नमोभिः।

वि श्लोक एति पथ्येव सूरिः शृण्वन्तु विश्वे अमृतास एतत् ॥३९॥

---

प्रतीच्यां त्वा ०।०।२।

उदीच्यां त्वा ०।०।३।

ध्रुवायस्वाहा ॥ ४ ॥

ऊर्द्धायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युता पृथिवीं द्यामिवोपरि।

लोककृतः पृथिवीकृतो यजामहे देवानां हुत इहस्थः ॥ ३५ ॥

धर्तासि ध ० ० ० ० सिगोसि ॥ ३६ ॥

उदपूरसि ० ० ० ० वातपूरसि ॥ ३७ ॥

इतश्च मामुतश्चावन्तां यमे इव यतमाने युदेत।

प्रवाम्भरन्नमनुषा देवयन्तो आ सीदतां स्वमु लोकं विदाने ॥ ३८ ॥

स्वास स्थे भवतमिन्दवे नो युजे वां ब्रह्मपूर्व्यन्नमोभिः।

वि श्लोक एति पथेव सूरे शृण्वन्त् विश्व अमृतास एतत् ॥ ३९ ॥

त्रीणि पदानि रूपो अन्वरोहच्चतुष्पदीमन्वैतद्व्रतेन।
अक्षरेण प्रति मिमीते अर्कमृतस्य नाभावभि सं पुनाति ।४०।१६।
देवेभ्यः कमवृणीत मृत्युं प्रजायै किममृतं नावृणीत।
बृहस्पतिर्यज्ञमतनुत ऋषिः प्रियां यमस्तन्वमा रिरेच ॥ ४१ ॥
त्वमग्न ईडितो जातवेदो ऽवाड्ढव्यानि सुरभीणि कृत्वा।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि ॥४२॥
आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय।
पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥ ४३ ॥
अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः।
अत्तो हवींषि प्रयतानि बर्हिषि रयिं च नः सर्ववीरं दधात॥४४॥
उपहूता नः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु ते ऽवन्त्वस्मान् ॥ ४५ ॥

---

त्रीणी यदीनि रूपो आत्वरोहं चतुष्पदात्वातद्व्रतेन।
अक्षरेण प्रतिमिमीते अर्कमृतस्य नाभावधि संपुनाति ॥ ४० ॥
देवेभ्यः कमवृणीतः मं प्रजायै कममृतं नावृणीत।
बृहस्पतिर्यज्ञमत उत ऋषिं प्रिया यमस्तत्वमा रिरेचीत् ॥ ४१ ॥
त्व मग्न ईडितो जातवेदो वाड्व्यानि सुरभीणि कृत्वा।
प्रदाः पितृभ्यः स्वधया ते अक्षन् द्विलं देव प्रजाय त्वाद्दवो षि ॥ ४२ ॥
आसीनासो अरुणीनामुपस्थे रयिन्ध तदा श्रुषे मत्यपि।
पुत्रेभ्यः पितरस्तस्य वस्वः प्रयच्छतत इहोर्जन्दधात ॥ ४३ ॥
अग्निष्वाताः पितरः एह गच्छत सदसदः सदत सुप्रणीतयः।
अता हवींषि प्रयतानि बर्हिष्यन्यारयि सर्ववीरन्दधात ॥ ४४ ॥
उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु।
त आ गमन्तु त इवह श्रुवं त्वधिक्रयन्तु तेवं त्वस्मान ॥ ४५ ॥

ये नः पितुः पितरो ये पितामहा अनूहिरे सोमपीथं वसिष्ठाः।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु॥ ४६॥
ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः।
अग्ने याहि सहस्रं देववन्दैः सत्यैः कविभिर्ऋषिभिर्घर्मसद्भिः॥४७॥
ये सत्यासो हविरदो हविष्पा इन्द्रेण देवैः सरथं तुरेण।
आग्ने याहि सुविदत्रेभिरर्वाङ्परैः पूर्वैर्ऋषिभिर्घर्मसद्भिः॥ ४८॥
उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम्।
ऊर्णम्रदाः पृथिवी दक्षिणावत एषा त्वा पातु प्रपथे पुरस्तात्॥४९॥
उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपसर्पणा।
माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि॥ ५०॥ १७॥
उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयन्ताम्।
ते गृहासो घृतश्चुतः स्योना विश्वाहास्मै शरणाः सन्त्वत्र॥ ५१॥

---

ये नः पितरो ये पितामहा अनुजाहिरे सोमपीथ वशिष्ठाः।
तेभिर्यमः संरराणो हवीं ष्युशन्नुशद्भिः प्रकामन्तु॥ ४६॥
ये तानृषु दे'वत्रा जेहमाना खे त्रावि स्तोमृतष्टासो अर्कैः।
अग्नेयाहि सहस्रस्य देवं वदेः परैः पूर्वैः पितृभिर्वसमद्भि॥ ४७॥
ये सत्यासो हविरदोहविष्पा इन्द्रेण देवैः सरथं तरेण।
आग्नेयाहि सुवित्रेभिरर्वाङ्मयैः पूर्वैं ऋषिर्व्यर्मसद्भिः॥ ४८॥
उप सर्प मातरं भूमेतामुरुव्यचस पृथिवी सुशेवाम्।
उर्णमुदाः पृथिवीं दक्षिणावत एषा त्वा पातु प्रपथे पुरस्तात्॥ ४९॥
उच्छलस्व पृथिवी मा नि बाधथाः सुपायासस्म भव सूपा सपर्णा।
माता पुत्रं यथा सिचाभ्येनं भूमि ऊर्णुहि॥ ५०॥ १७॥
ऊच्छलमाना पृथिवी सु तिष्ठतु सहस्रमित उप हि श्रयन्ताम्।
ते गृहासो घतश्चतः स्योना विश्वाहास्म शरणाः सन्त्वत्र॥ ५१॥

उत्ते स्तभ्नामि पृथिवीं त्वत्परीमं लोगं निदधन्मो अहं रिषम्।
एतां स्थूणां पितरो धारयन्ति ते तत्र यमः सादना ते कृणोतु ५२
इममग्ने चमसं मा वि जिह्वरः प्रियो देवानामुत सोम्यानाम्।
अयं यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ताम्॥ ५३॥
अथर्वा पूर्णं चमसं यमिन्द्रायाबिभर्वाजिनीवते।
तस्मिन् कृणोति सुकृतस्य भक्षं तस्मिन्निन्दुः पवते विश्वदानीम्॥५४॥
यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः।
अग्निष्टद्विश्वादगदं कृणोतु सोमश्च यो ब्राह्मणाँ आविवेश॥ ५५॥
पयस्वतीरोषधयः पयस्वन्मामकं पयः।
अपां पयसो यत्पयस्तेन मा सह शुम्भन्तु॥ ५६॥
इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सं स्पृशन्ताम्।
अनश्रवो अनमीवाः सुरत्ना आ रोहन्तु जनयो योनिमग्रे॥ ५७॥

---

उते स्तिभ्नामिभ्न पृथिवी स्त्वत्परीमल्लोगं निदधन् मोऽहं रिषन्।
एतां स्थूणां पितरो धारयन्तु ते तत्र यमः साधना ते चणोत॥ ५२॥
इममग्ने चमसं मा वि जिह्वरः प्रियो देवानामुत सोम्यानाम्।
अयं यश्चमसो देवयानस्तस्मिन्देवा अमृता मदयन्ताम्॥ ५३॥
अथर्वाप्राणं चमसं यमिद्राबिभर्वाजिनीवते।
तस्मिन् चणोति सुकृतस्य भक्षं तस्मिन् बिंद्रंवते विश्वदानीम्॥ ५४॥
यत्ते कृष्णः शतुन आतुतोद पिपील. सर्प उत वा श्वापदः।
अग्निष्टद्विश्वादगदं कृणोतु सामश्च यो ब्राह्मणां आविवेश॥ ५५॥
पयस्वती रोषधयः पयःपयस्वान् मामकं पयः।
अपां पयस्व दित्यत्पयस्तेनमामह शुम्भत्॥ ५६॥
इमानारीरित्येका॥ ५७॥

सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन्।
हित्वायावद्यं पुनरस्तमेहि सं गच्छतां तन्वा सुवर्चाः॥ ५८॥
ये नः पितुः पितरो ये पितामहा य आविविशुरुर्वन्तरिक्षम्।
तेभ्यः स्वराड़सुनीतिर्नो अद्य यथावशं तन्वः कल्पयाति॥ ५९॥

शं ते नीहारो भवतु शं ते प्रुष्वाव शीयताम्।
शीतिके शीतिकावति ह्लादिके ह्लादिकावति।
मण्डूक्यप्सु शं भुव इमं स्वग्निं शमय॥ ६०॥ १८॥

विवस्वान्नो अभयं कृणोतु यः सुत्रामा जीरदानुः सुदानुः।
इहेमे वीरा बहवो भवन्तु गोमदश्ववन्मय्यस्तु पुष्टम्॥ ६१॥
विवस्वान्नो अमृतत्वे दधातु परैतु मृत्युरमृतं न ऐतु।
इमान्रक्षतु पुरुषाना जरिम्णो मो ष्वेषामसवो यमं गुः॥ ६२॥

---

सङ्गच्छस्वपितृभिः संयमेनेष्टा पूर्त्तेन परमे व्योमन्।
हित्वायावद्यं पुनस्तमेहि सङ्गच्छतां तत्वा सुवर्चाः॥ ५८॥
ये ते पितरो ये पितामहा य आविविशुरुर्वन्तरिक्षम्।
तेभ्यः स्वराडसुनीतिर्नोऽद्य यथावशं तन्वः कल्पयताम्॥ ५९॥
शन्ते नीहारो भवन्तु शन्ते प्रुषाव शीयतम्।
शीतिके शीतिमावति ह्रादेके ल्हादिकावति।
मण्डुक्या इषु ० ० ० ० शंमया॥ ६०॥
विवस्वान्ने ऽभयं कृणोतु या सुत्रामाजोराटा सुदानु।
इहेमे वीरा बहवो भवन्तु गोमदश्व वन्मय्यस्तु च पुष्टाम्॥ ६१॥
विवस्वान्नोऽमृतत्वं दिशतु परैस्त मृत्युरमृतन्नयन्तु।
इमाभक्षतु पुरुषन्तोऽजरिम्णो मोष्वेषाम स नोयमगुः॥ ६२॥

यो दध्रे अन्तरिक्षेण मह्ना पितॄणां कविः प्रमतिर्मतीनाम्।
तमर्चत विश्वमित्रा हविर्भिः स नो यमः प्रतरं जीवसे धात्।६३॥
आ रोहत दिवमुत्तमामृषयो मा बिभीतन।
सोमपाः सोमपायिन इदं वः क्रियते हविरगन्म ज्योतिरुत्तमम्॥६४॥
प्र केतुना बृहता भात्यग्निरा रोदसी वृषभो रोरवीति।
दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो ववर्ध॥ ६५॥
नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्॥ ६६॥
इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा।
शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि॥६७॥
अपूपापिहितान् कुम्भान्यांस्ते देवा अधारयन्।
ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः॥ ६८॥

---

यो दध्रे अन्तरिक्षेण मह्नापितृणां कविः प्रमतिर्मतीनाम्।
तमर्चम विश्वामित्रा हविर्भिः सनो यमः प्रतरं जीवसे द्धात्॥ ६३॥
आरोहतन्दिवमुतमामृषयो मा बिभीतन।
सोमयायिन इदं वः क्रियते हविरगन्मज्योति रुत्तरम्॥ ६४॥
प्रकेतुना वहता भात्यग्नि स रोदसी वृषभो रोरवीति।
दिवश्चि दन्तादुपमामुपस्थे महिषो ववर्द्ध॥ ६५॥
नाक सुपर्णमुप यत्पतंतं हृदा वेनते अभ्यचक्षत त्वा।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्॥ ६६॥
इन्द्र त्वं न आभर पितापुत्रेभ्यो यथा।
शिक्षी णोऽस्मिन् पुरुहूत यामनि जीव ज्योतिरशीमहो॥ ६७॥
अपूपाहिता कुम्भन्यस्ते देवा अधारयन्।
ते ते सन्तु स्वधावतो मधुमन्तोऽश्नत् मृतं ह॥ ६८॥

यस्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः।
तास्ते सन्तु विभ्वीः प्रभ्वीस्तास्ते यमो राजानु मन्य-
तान्॥ ६९॥
पुनर्देहि वनस्पते य एष निहितस्त्वयि।
यथा यमस्य सादन आसातै विदथा वदन्॥ ७०॥
आ रभस्व जातवेदस्तेजस्वद्धरो अस्तु ते।
शरीरमस्य सं दहाथैनं धेहि सुकृतामु लोके॥ ७१॥
ये ते पूर्वे परागता अपरे पितरश्च ये।
तेभ्यो घृतस्य कुल्यैतु शतधारा व्युन्दती॥ ७२॥
एतदा रोह वय उन्मृजानः स्वा इह बृहदु दीदयन्ते।
अभि प्रेहि मध्यतो माप हास्थाः पितॄणां लोकं प्रथमो यो अत्र
॥ ७३॥ (१८)

॥ तृतीयोऽनुवाकः॥

---

यांस्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः।
तांस्ते सन्तु विभ्वीः प्रभ्वीस्तास्ते यमो राजानु मन्यताम्॥ ६९॥
पुनर्देह वनस्पते पराष निहितस्त्वयि।
यथा यमस्य सादन आसाथ ते विदथा वदतः॥ ७०॥
आ भरस्व जातवेदस्तेजस्वद्वरोऽस्तु ते।
शरीरमस्य संविदग्धाथैनन्धेहि सुकृतामु लोके॥ ७१॥
ये ते पूर्वे परागता अपरे पितरश्च ये।
तेभ्यो घृतस्य कुल्यैतु शतधारा व्युदन्ति॥ ७२॥
एतदा रोह वय उन्मजानः स्वा इह वृहत् भटादयन्ते।
अभि प्रेहि मध्यतो माप हास्थाः पितॄणां लोक प्रायमो यो अत्र॥७३॥१९॥
इति तृतीयोऽनुवाकः। ऋचः ७३।

आ रोहत जनित्रीं जातवेदसः पितृयाणैः सं व आ रोहयामि ।
अवाड्ढव्येषितो हव्यवाह ईजानं युक्ताः सुकृतां धत्त लोके ॥ १॥
देवा यज्ञमृतवः कल्पयन्ति हविः पुरोडाशं स्रुचो यज्ञायुधानि ।
तेभिर्याहि पथिभिर्देवयानैर्यैरीजानाः स्वर्गं यन्ति लोकम् ॥ २ ॥
ऋतस्य पन्थामनु पश्य साध्वङ्गिरसः सुकृतो येन यन्ति ।
तेभिर्याहि पथिभिः स्वर्गं यत्रादित्या मधु भक्षयन्ति तृतीये नाके
अधि वि श्रयस्व ॥ ३ ॥
त्रयः सुपर्णा उपरस्य मायू नाकस्य पृष्ठे अधि विष्टपि श्रिताः ।
स्वर्गा लोका अमृतेन विष्ठा इषमूर्जं यजमानाय दुह्राम् ॥ ४ ॥
जुहूर्दाधार द्यामुपभृदन्तरिक्षं ध्रुवा दाधार पृथिवीं प्रतिष्ठाम् ।
प्रतिमां लोका घृतपृष्ठाः स्वर्गाः कामङ्कामं यजमानाय दुह्राम् ।५।

---

यदातुम् आ रोहत जनित्रीं जातवेदसः पितृयाणैः मद्य आ रोहयामि ।
अव्यायावाद्व्योषितो हव्यवाह ईजानं युक्ताः सुकृतां ध लोके ॥ १ ॥
देवा यज्ञमृतवः कल्पयन्ति हवि पुरोडाशं मभौ यज्ञायुधानि ।
तेभिर्याहि पथिभिर्देवयानै यैरीज्ञानो स्वर्गं यन्ति लोकम् ॥ २ ॥
मृतस्य पन्यामनुपश्य साध्वङ्गिरसः मुकृतो येन यन्ति ।
तेभिर्याहि पथिभिः स्वर्गं यत्रादित्या मधु भक्षयन्ति तृतीये नाके अधि अयस्यो
॥ ३ ॥
त्रयः मुपर्णा उपरस्य मायु नाकस्य पृष्ठे अधि विष्टपिश्रिता ।
स्वर्गालोकामृतेनविष्ट इषमूर्जं यजमानाय दुह्राम् ॥ ४ ॥
जुहूर्दधार द्यामुपभृदन्तरिक्षं ध्रुवा दाधार पृथिवीं प्रतिष्ठाम् ।
इतिमा लोका घृतपृष्ठाः स्वर्गाः कामकामे यजमानाय उक्तं हे ॥ ५ ॥

ध्रुव आ रोह पृथिवीं विश्वभोजसमन्तरिक्षमुपभृदा क्रमस्व।
जुहु द्यां गच्छ यजमानेन साकं स्रुवेण वत्सेन दिशः प्रपीनाः सर्वा
धुक्ष्वाहृणीयमानाः ॥ ६ ॥
तीर्थैस्तरन्ति प्रवतो महीरिति यज्ञकृतः सुकृतो येन यन्ति।
अत्रादधुर्यजमानाय लोकं दिशो भूतानि यदकल्पयन्त ॥ ७ ॥
अङ्गिरसामयनं पूर्वो अग्निरादित्यानामयनं गार्हपत्यो दक्षिणा-
यनं दक्षिणाग्निः।
महिमानमग्नेर्विहितस्य ब्रह्मणा समङ्गः सर्व उप याहि शग्मः ॥८॥
पूर्वो अग्निष्ट्वा तपतु शं पुरस्ताच्छं पश्चात्तपतु गार्हपत्यः।
दक्षिणाग्निष्टे तपतु शर्म वर्मोत्तरतो मध्यतो अन्तरिक्षाद् दिशो
दिशो अग्ने परि पाहि घोरात् ॥ ९ ॥

---

ध्रुव आ रोह पृथिवीं श्वभोजसमन्तरिक्षनुपभृदा क्रमस्व।
जुहुयाद्या उगच्छ यजमानेन साकं स्रुवेण वत्सेन दिशः प्रपीनाः सर्वा धुक्षा-
हृणीयमानाः ॥ ६ ॥
तीर्थैः स्तरति प्रवतो मह्यारिति यज्ञतः सुकृतो येन यन्ति।
अत्रादध्वर्युर्यजमानाय लोकन्दिशो भूतानि यदकल्पयन्ते ॥ ७ ॥
अङ्गिरसामयनं पूर्वोऽग्निरादित्यनामयनं गार्हपत्यो दक्षिणानामयनं दक्षि-
णाग्नि।
महिमानमाग्ने विहितस्य ब्रह्मणा समङ्गः सर्व उप याहि शमः ॥ ८ ॥
पूर्वोऽयत यतु शं पुरस्ताच्छं पश्चात्पतु गार्हपत्य।
दक्षिणाग्ने ष्टे तपन्तु, शर्म वर्मोत्तरतो मध्यतोऽन्तरिक्षा दिशोऽग्नये परि-
याहि घोरात् ॥९॥

ययमग्ने शन्तमाभिस्तनूभिरीजानमभि लोकं स्वर्गम्।
अश्वा भूत्वा पृष्टिवाहो वहाथ यत्र देवैः सधमादं मदन्ति॥१०॥२०॥
अमग्ने पश्चात्तप शं पुरस्ताच्छमुत्तराच्छमधरात्तपैनम्।
एकस्त्रेधा विहितो जातवेदः सम्यगेनं धेहि सुकृतामु लोके॥११॥
अमग्नयः समिद्धा आ रभन्तां प्राजापत्यं मेध्यं जातवेदसः।
शृतं कृण्वन्त इह माव चिक्षिपन्॥ १२॥
यज्ञ एति विततः कल्पमान ईजानमभि लोकं स्वर्गम्।
तमग्नयः सर्वहुतं जुषन्तां प्राजापत्यं मेध्यं जातवेदसः।
शृतं कृण्वन्त इह माव चिक्षिपन्॥ १३॥
ईजानश्चित्तमारुक्षदग्निं नाकस्य पृष्ठाद्दिवमुत्पतिष्यन्।
तस्मै प्र भाति नभसो ज्योतिषीमान् स्वर्गः पन्थाः सुकृते देव-
यानः॥ १४॥

---

ययमग्ने सन्तमाभिर्दरग्नेभिराजानमभि लोकं मर्वम।
अश्वा भूत्वा प्रष्टिवाहो वहाऽथ यच देवैः सदमादं मदन्ति॥१०॥ २०॥
अमग्ने पश्चात्पतु अं पुरस्ताच्छमधराग्नथैननम।
एकस्त्रेधाविहितो जातवेदः सम्यगेनं धेहि सुकृताम् लोके॥ ११॥
अमग्नयः समिधो आ रभन्तां प्राजापत्यं मेध्यं जातवेदसः।
शृतं कृण्व इहमाविवि चिपम॥ १२॥
यज्ञपति विततः कल्पमाईजानमभि लोकं स्वर्गम्।
तमग्नयः सर्वहुतं यतां प्राजापत्यं मेध्यं जातवेदसः।
शृतं कृण्वन्त इह मा किचिपत्॥ १३॥
ईजानश्चितमारुक्षदग्नि वाकस्य पृष्ठादिवमुत्पतिष्यम्।
तस्मै प्र भाति नभसो ज्योतिषीमात् स्वर्ग पन्थाः सुकृतो देवयामः॥ १४॥

अग्निर्होताध्वर्युष्टे बृहस्पतिरिन्द्रो ब्रह्मा दक्षिणतस्ते अस्तु।
हुतो ऽयं संस्थितो यज्ञ एति यत्र पूर्वमयनं हुतानाम् ॥ १५ ॥
अपूपवान् क्षीरवांश्चरुरेह सीदतु।
लोकक्रतः पथिक्रतो यजामहे ये देवानां हुतभागा इह स्थ ।१६॥
अपूपवान् दधिवांश्चरुरेह०।०॥ १७ ॥
अपूपवान् द्रप्सवांश्चरुरेह०।०॥ १८ ॥
अपूपवान् घृतवांश्चरुरेह०।०॥ १९ ॥
अपूपवान्मांसवांश्चरुरेह०।०॥ २० ॥ २१ ॥
अपूपवानन्नवांश्चरुरेह०।०॥ २१ ॥
अपूपवान्मधुमांश्चरुरेह०।०॥ २२ ॥
अपूपवान्रसवांश्चरुरेह०।०॥ २३ ॥
अपूपवानपवांश्चरुरेह सीदतु।
लोकक्रतः पथिक्रतो यजामहे ये देवानां हुतभागा इह स्थ ॥२४॥

---

अग्निर्होताध्वर्युष्ट बृहस्पतिरिन्द्रो ब्रह्मा दक्षिणतस्ते अस्तु।
हुतोयं ० ० ० ० ० ० ० ० नं हुतानाम् ॥ १५ ॥
अपूपवां क्षीरवांश्चरुरिह सीदतु।
लोकक्रतः पथिक्रतो यजामहे देवानां हुतभागा इहस्थाः ॥ १६ ॥
अपूपवान् दधिवांश्चरुः ०।०॥ १७ ॥
अपूपवान्नपवांश्चरुः।०।०॥१८॥
अपूपवां मधुवांश्चरुः ०। ॥ २२ ॥
अपूपवान्नपर्वांश्चरुः ॥ २३ ॥
अपूपवानयवांश्चरुरेह सीदतु।
लोकक्रतः पथिक्रतो यजामहे देवानां हुतभागा इह स्थाः ॥ २४ ॥

अपूपापिहितान् कुम्भान्यांस्ते देवा अधारयन्।
ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः ॥ २५ ॥
यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः।
तास्ते सन्तूद्भ्वीः प्रभ्वीस्तास्ते यमो राजानु मन्यताम्॥२६॥
अक्षितिं भूयसीम् ॥ २७ ॥
द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः।
समानं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ २८ ॥
शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते रयिम्।
ये पृणन्ति प्र च यच्छन्ति सर्वदा ते दुह्रते दक्षिणां सप्तमातरम्।
कोशं दुहन्ति कलशं चतुर्बिलमिडां धेनुं मधुमतीं स्वस्तये॥
ऊर्जं मदन्तीमदितिं जनेष्वग्ने मा हिंसीः परमे व्योमन् ॥३०॥२२॥

---

अपूपान्नपिहितानित्येका ॥ २५ ॥
यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः।
तास्ते सन्त्वद्वा प्रभवीस्तस्ते यमो राजानु मन्यताम् ॥ २६ ॥
अक्षितिं भूयसी ॥ २७ ॥
द्रप्सस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः।
समानं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ २८ ॥
शतधारं वायुमर्कं स्वर्विदं नृचक्षसो अभि चक्षते हविः।
ये पृणन्ति प्र च यच्छन्ति सङ्गमेते दक्षिणां दुहते सप्तमातरम् ॥ २९ ॥
कोशं दुहन्ति कलशं चतुर्बिलमिडां धेनुं मधुमतीं स्वस्तय।
ऊर्जं मदन्तीमदिति जनेष्वग्ने मा हिंसीः परमे व्योमन् ॥ ३० ॥

एतत्ते देवः सविता वासो ददाति भर्तवे।
तत्त्वं यमस्य राज्ये वसानस्तार्प्यं चर॥ ३१॥
धाना धेनुरभवद्वत्सो अस्यास्तिलो ऽभवत्।
तां वै यमस्य राज्ये अक्षितामुप जीवति॥ ३२॥
एतास्ते असौ धेनवः कामदुघा भवन्तु।
एनीः श्येनीः सरूपा विरूपास्तिलवत्सा उप तिष्ठन्तु त्वात्र॥३३॥
एनीर्धाना हरिणीः श्येनीरस्य कृष्णा धाना रोहिणीर्धेनवस्ते।
तिलवत्सा ऊर्जमस्मै दुहाना विश्वाहा सन्त्वनपस्फुरन्तीः॥ ३४॥
वैश्वानरे हविरिदं जुहोमि साहस्रं शतधारमुत्सम्।
स बिभर्ति पितरं पितामहान् प्रपितामहान् बिभर्ति पिन्वमानः॥३५।
सहस्रधारं शतधारमुत्समक्षितं व्यच्यमानं सलिलस्य पृष्ठे।
ऊर्जं दुहानमनपस्फुरन्तमुपासते पितरः स्वधाभिः॥ ३६॥

---

एतत्ते देवः सविता वासो ददाति तवे।
तत्वं यमस्य राज्ये वसानस्तीर्थाच्चरा॥ ३१॥
धाना धेनुरभवद्वत्सो स्यास्तिलोभवत।
तां वै यमस्य राज्ये अचितामुप जीवति॥ ३२॥
एतास्ते असौ धेनवः कामदुघा भवन्ति तु।
एनीं श्येनी यरूप विरूपस्तिलवत्सा उप तिष्ठतु त्वाव॥ ३३॥
एनीधाना हरिणी श्येनीरस्य कृष्णा धाना रोहिणी धेनवस्ते।
तिलवत्सा ऊर्जमस्मै दधाना विश्वाहा सन्तुरयस्फुरन्तीः॥ ३४॥
वैश्वानरं हविरिदं जुहोमि साहस्र शतधारश्राम्।
सं बिभर्ति पितरं पितामहान् प्रपितामहान्विवर्त्ति पिलमानः॥ ३५॥
सहस्रधारं शतनुत्समचितं वच्यमानं सलिल पृष्टे।
ऊर्जं दुहानमनयस्फुरन्तमासते पितरः स्वधाभिः॥ ३६॥

इन्द्रं कसाम्ब चयनेन चितं तत्सजाता अव पश्यतेत।
मर्त्योऽयममृतत्वमेति तस्मै गृहान् कृणुत यावत्सबन्धु ॥ ३७ ॥
इहैवैधि धनसनिरिहचित्त इह क्रतुः।
इहैधि वीर्यवत्तरो वयोधा अपराहतः ॥ ३८ ॥
पुत्रं पौत्रमभितर्पयन्तीरापो मधुमतीरिमाः।
स्वधां पितृभ्यो अमृतं दुहाना आपो देवीरुभयांस्तर्पयन्तु ॥ ३९ ॥
आपो अग्निं प्र हिणुत पितॄंरुपेमं यज्ञं पितरो मे जुषन्ताम्।
आसीनामूर्जमुप ये सचन्ते ते नो रयिं सर्ववीरं नि यच्छान्॥४०।२३।
समिन्धते अमर्त्यं हव्यवाहं घृतप्रियम्।
स वेद निहितान्निधीन् पितॄन् परावतो गतान् ॥ ४१ ॥
यं ते मन्थं यमोदनं यन्मांसं निपृणामि ते।
ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः ॥ ४२ ॥

---

इन्द्र कसाम्बु इयानन चितं ततसजाता अव पश्यतेत।
मर्मोऽयममृतत्वमेति तस्मै गृहात कृणुत यादात्सबन्धः ॥ ३७ ॥
इहैवैधि धनमन्निरिहचित इहक्रतुः।
इहैधि वीर्यवतरो वयोधा पपराहतः ॥ ३८ ॥
पुत्रं पौत्रमभितर्पयती प्रायो मधुमतीरिमाः।
स्वधा पितृभ्योऽमृतं दुहाना आयो देवीरुभयांस्तर्पयन्तु ॥ ३९ ॥
आपो अग्निं प्र हिणुतः पितृरूपेमयज्ञं पितरो जुषताम।
आसीतामूर्जमुप ये सेमचन्ते ते नो रथिं सर्ववीरं नि यच्छात् ॥ ४० ॥ २३ ॥
समिधेत अमर्त्यं हव्यवाह घृतप्रियम्।
स वेद निहितान्निधीन् पितॄन् परावतो गतात् ॥ ४१ ॥
यं ते मन्थं यमोदनं यत्प्रामं निपृणोमि ते।
ते ते सन्त, स्वधावन्तो मधुमन्तो घृतश्चुतः ॥ ४२ ॥

यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः।
तास्ते सन्तु विभ्वीः प्रभ्वी स्तास्ते यमो राजानु
मन्यताम् ॥ ४३ ॥

इदं पूर्वमपरं नियानं येना ते पूर्वे पितरः परेताः।
पुरोगवा ये अभिषाचो अस्य ते त्वा वहन्ति सुकृतामु लोकम्॥४४॥
सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने।
सरस्वतीं सुकृतो हवन्ते सरस्वती दाशुषे वार्यं दात् ॥ ४५ ॥
सरस्वतीं पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः।
आसद्यास्मिन् बर्हिषि मादयध्वमनमीवा इष आ धेह्यस्मे ॥ ४६ ॥
सरस्वति या सरथं ययाथोक्थैः स्वधाभिर्देवि पितृभिर्मदन्ती।
सहस्रार्घमिड़ो अत्र भागं रायस्पोषं यजमानाय धेहि ॥ ४७ ॥
पृथिवीं त्वा पृथिव्यामा वेशयामि देवो नो धाता प्र तिरात्यायुः।
परापरैता वसुविद्वो अस्त्वधा मृताः पितृषु सं भवन्तु ॥ ४८ ॥
आ प्र च्यवेथामपतन्मृजेथां यद्वामभिभा अत्रोचुः।
अस्मादेतमघ्न्यौ तद्वशाय दातुः पितृष्विहभोजनौ मम ॥ ४९ ॥

---

यास्ते धाना ० ० ० ० ॥ ४३ ॥
इति पूर्वा इन्द्रदं पूर्वमपरं नियानं येना ते पूर्वे पितरः परेताः।
पुरोगावा ये अभिश्रोवोऽस्य ते त्वावहन्ति सुकृता सुलोकम् ॥ ४४ ॥
सरस्वतीं यन्तोऽभितिस्रः ॥ ४७ ॥
पृथिवीं त्वा पृथिव्यामा वेशयामि देवो ना धाता प्रतिरात्याङुः।
परापरेता वासुविद्वोऽस्त्वधाताः पितृषु सम्भवन्तु ॥ ४८ ॥
आप्र च्यवेथा मथ तन्मृजेथा यद्वामभिभी अत्रोचुः।
अस्मादेततमघ्नैतद्वशीयो दातुः पितृषु इह भोजनौ समा ॥ ४९ ॥

एयमगन्दक्षिणा भद्रतो नो अनेन दत्ता सुदुघा वयोधाः ।
यौवने जीवानु पपृञ्चतो जरा पितृभ्य उपसम्पराणयादि-
मान् ॥ ५० ॥ २४ ॥
इदं पितृभ्यः प्र भरामि बर्हिर्जीवं देवेभ्य उत्तरं स्तृणामि ।
तदा रोह पुरुष मेध्यो भवन् प्रति त्वा जानन्तु पितरः परेतम् ॥ ५१ ॥
एदं बर्हिरसदो मेध्योऽभूः प्रति त्वा जानन्तु पितरः परेतम् ।
यथापरु तन्वं सं भरस्व गात्राणि ते ब्रह्मणा कल्पयामि ॥ ५२ ॥
पर्णो राजापिधानं चरूणामूर्जो बलं सह ओजो न आगन् ।
आयुर्जीवेभ्यो विदधद्दीर्घायुत्वाय शतशारदाय ॥ ५३ ॥
ऊर्जो भागो य इमं जजानाश्मान्नानामाधिपत्यं जगाम ।
तमर्चत विश्वमित्रा हविर्भिः स नो यमः प्रतरं जीवसे धात् ॥ ५४ ॥
यथा यमाय हर्म्यमवपन् पञ्च मानवाः ।
एवा वपामि हर्म्यं यथा मे भूरयोऽसत ॥ ५५ ॥

---

यमं मनं दक्षिणा भद्रतो नोऽनेन दत्ता सुदुधा च योधाः ।
यौवने जीवानुप प्रचतो जरा पितृभ्य उपसम्पराणयादिमान् ॥ ५० ॥ २४ ॥
इदं पितृभ्यः प्रभरामि बर्हिः जानवे देवेभ्य उत्तरं स्तृणामि ।
तदा रोह पुरुष मे प्रतिभवन् प्रति त्वा जानन्तु पितरः परेतम् ॥ ५१ ॥
इदं बर्हिरसदो नेभ्यो भूः परित्वा जानन्तु पितरः परेतं ।
यथापुरु तन्वम् सम्भरस्व गात्राणि ते ब्रह्मणा कल्पयामि ॥ ५२ ॥
पर्णा राजा पिधानं चरूणामूर्जो बलं सह ओजो न आगन् ।
आयुर्जीवेभ्यो विदधद्दीर्घायुत्वाय शतशारदाय ॥ ५३ ॥
ऊर्जो भागो य इमं जजानोऽश्मान्नानामधिप जगाम ।
तमर्च विश्वामित्रा हविर्भिः सनो यमः प्रजीवसे धातम् ॥ ५४ ॥
यथा यमाय हर्म्यमवमन्यञ्च मानवोः ।
एवा चयामि हर्म्यं यथा मे भूर्यो समः ॥ ५५ ॥

इदं हिरण्यं बिभृहि यत्ते पिता बिभः पुरा।
स्वर्गं यतः पितुर्हस्तं निर्मृड्ढि दक्षिणम्॥ ५६॥
ये च जीवा ये च मृता ये जाता ये च यज्ञियाः।
तेभ्यो घृतस्य कुल्यैतु मधुधारा व्युन्दती॥ ५७॥
वृषा मतीनां पवते विचक्षणः सूरो अह्नां प्रतरीता उषसां दिवः।
प्राणः सिन्धूनां कलशाँ अचिक्रददिन्द्रस्य हार्दिमाविशन्
मनीषया॥ ५८॥
त्वेषस्ते धूम ऊर्णोतु दिवि षं शुक्र आततः।
सूरो न हि द्युता त्वं कृपा पावक रोचसे॥ ५९॥
प्र वा एतीन्दुरिन्द्रस्य निष्कृतिं सखा सख्युर्न प्र मिनाति सङ्गिरः।
मर्य इव योषाः समर्षसे सोमः कलशे शतयामना पथा॥६०॥२५॥
अक्षन्नमीमदन्त ह्यव प्रियाँ अधूषत।
अस्तोषत स्वभानवो विप्रा यविष्ठा ईमहे॥ ६१॥

---

इदं हिरण्यं पिपृहि यते पिता बिभः पुरा।
स्वर्गं यतः पितुर्हस्तं निर्मृधि दक्षिणम्॥ ५६॥
ये च जीवा ये च मृता ये जाता ये च यज्ञियाः।
तेभ्यो घृतस्य कुल्यैतु मधुधारा व्युदन्ती॥ ५७॥
वृषा मतीनां पवते विचक्षणः सूरो अह्नः प्रतिरोषसो दिवः।
प्राणाः सिन्धूनां कलशाँ अचिक्रददिन्द्रस्य हार्दिमाविशन् मनीषया॥ ५८॥
त्वेषस्ते धूम ऊर्णोभि दिवि षंक्र आततः।
सूरो नहि द्युतावचं कृया यावक रोचसे॥ ५९॥
प्रवायवीन्दुरिन्द्रस्य निश्रुतिः सखा सख्युर्न प्रमिनाति सङ्गिरः।
मर्य इव योषाः समर्षसे सोमः कलशे शतया मना यथा॥ ६०॥२५॥
अक्षन्नमी मदन्त ह्यव प्रिया अधूषत।
अस्तोषत स्व भानवो विप्रा यविप्राःयविष्ठा ईमहे॥ ६१॥

आ यात पितरः सोम्यासो गम्भीरैः पथिभिः पितृयाणैः ।
आयुरस्मभ्यं दधतः प्रजां च रायश्च पोषैरभि नः सचध्वम् ॥६२॥
परा यात पितरः सोम्यासो गम्भीरैः पथिभिः पूर्व्याणैः ।
अधा मासि पुनरा यात नो गृहान् हविरत्तुं सुप्रजसः सुवीराः॥६३॥
यद्वो अग्निरजहादेकमङ्गं पितृलोकं गमयं जातवेदाः ।
तद्व एतत्पुनरा प्याययामि साङ्गाः स्वर्गे पितरो मादयध्वम् ॥६४॥
अभूद्दूतः प्रहितो जातवेदाः सायं न्यह्न उप वन्द्यो नृभिः ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि ॥६५॥
असौ हा इह ते मनः ककुत्सलमिव जामयः ।
अभ्येनं भूम ऊर्णुहि ॥ ६६ ॥
शुम्भन्तां लोकाः पितृषदनाः पितृषदने त्वा लोक आ सादयामि
॥ ६७ ॥

---

आयात पितरः सोम्यासो गम्भीरैः पथिभिः प्रितृयाणैः ।
पायुरभ्यन्द धतः प्रजां च रयोपेरभिनः सचध्वम् ॥ ६२ ॥
परामात पितरः सोम्यासो गम्भीरैः पथिभिः पूर्व्याणैः ।
अधामासि पुनरापायनो गृहान् हविरत्तुं सुप्रजसः सुवीराः ॥ ६३ ॥
यद्वा अग्निरजहादेकमगं पितृलोकं गम जातवेदाः ।
तद्वत् एतत् पुनराप्याययामि साङ्गाः स्वर्गे पितरः मादयध्वम् ॥ ६४ ॥
अभूद्दतः प्रहितो जातवेदाः सामन्यह्न उपवन्द्यो नृभिः ।
प्रादाः पितृभ्यः स्वधाया ते अचरं नद्धि चन्द्रेय प्रयता हवींषि ॥ ६५ ॥
असौदा इह ते मनः ककुत्सलमिव जामयः ।
भोनभ्य म ऊर्णुहि ॥ ६६ ॥
शुभम्मां लोकाः, पितृषदने त्वा लोकं, आसादयामि ॥ ६७ ॥

येऽस्माकं पितरस्तेषां बर्हिरसि ॥ ६८ ॥

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अधा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ ६९ ॥

प्रास्मत्पाशान् वरुण मुञ्च सर्वान्यैः समामे बध्यते यैर्व्यामे ।
अधा जीवेम शरदां शतानि त्वया राजन् गुपिता रक्षमाणाः ॥ ७० ॥ (२६)

अग्नये कव्यवाहनाय स्वधा नमः ॥ ७१ ॥

सोमाय पितृमते स्वधा नमः ॥ ७२ ॥

पितृभ्यः सोमवद्भ्यः स्वधा नमः ॥ ७३ ॥

यमाय पितृमते स्वधा नमः ॥ ७४ ॥

एतत्ते प्रततामह स्वधा ये च त्वामनु ॥ ७५ ॥

एतत्ते ततामह स्वधा ये च त्वामनु ॥ ७६ ॥

---

येऽस्माकं पितरस्तेषां बर्हिरसि ॥ ६८ ॥

उदुत्तममित्येका ॥ ६९ ॥

प्रास्मत्पाशान् वरुण मुञ्च सर्वाभ्यः समाने बध्यते यैर्वामे ।

अथ जीव शरदः शतानि त्वया राजन् वाधिता रक्षमाणाः ॥ ७० ॥ २६ ॥

अग्नये कव्यवाहनाय स्वधा नमः ॥ ७१ ॥

सोमाय पितृमते ॥ ७२ ॥

पितृभ्यः सोमवद्भ्यः स्वधा ॥ ७३ ॥

यमाय पितृमते स्वधा नमः ॥ ७४ ॥

एतत्ते प्रततामह स्वधा येच त्वामनु ॥ ७५ ॥

एतत्ते प्रमाह स्वधा येच त्वामनु ॥ ७६ ॥

एतत्ते तत स्वधा ॥ ७७ ॥

स्वधा पितृभ्यः पृथिवीषद्भ्यः(१) ॥ ७८ ॥

स्वधा पितृभ्यो अन्तरिक्षसद्भ्यः ॥ ७९ ॥

स्वधा पितृभ्यो दिविषद्भ्यः ॥ ८० ॥ २७ ॥

नमो वः पितर ऊर्जे नमो वः पितरो रसाय ॥ ८१ ॥

नमो वः पितरो भामाय नमो वः पितरो मन्यवे ॥ ८२ ॥

नमो वः पितरो यद्घोरं तस्मै नमो वः पितरो यत्क्रूरं तस्मै॥ ८३॥

नमो वः पितरो यच्छिवं तस्मै नमो वः पितरो यत्स्योनं तस्मै ॥ ८४॥

नमो वः पितरः स्वधा वः पितरः ॥ ८५ ॥

ये ऽत्र पितरः पितरो ऽत्र यूयं स्थ युष्मांस्ते ऽनु यूयं तेषां श्रेष्ठा भूयास्थ ॥ ८६ ॥

य इह पितरो जीवा इह वयं स्म अस्मांस्ते ऽनु वयं तेषां श्रेष्ठा भूयास्म ॥ ८७ ॥

---

एतत्ते तत स्वधा ॥ ७७ ॥

स्वधा पितृभ्यः पृथिवीषद्भ्यः ॥ ७८ ॥

पितृभ्योऽन्तरिक्षषद्भ्यः ॥ ७९ ॥

स्वधा पितृभ्यो दिवि षद्भ्यः ॥ ८० ॥ २७ ॥

नमो वः पितर ऊर्जे नमो वः पितरो ० ० ० ॥ ८१ ॥

० ० ० ० मन्यवे ॥ ८२ ॥

नमो वः पितरो यच्चरं तस्मै नमो वः पितरो यत्क्रूरं तस्मै ॥ ८३ ॥

नमो वः पितरो यच्छिवं तस्मै नमो वः पितरो यत् स्योमनं तस्मै ॥ ८४ ॥

नमो वः पितरः स्वधा वः पितरः ॥ ८५ ॥

यत्र पितरः पितरो येत्र यूयंस्थे युष्मांस्तेऽनुयूयं तषां श्रेष्ठामयास्म ॥ ८६ ॥

इह पितरो जीवा इह वयं स्मः अस्मांस्तेन यथं तेषां श्रेष्ठा यास्म ॥ ८७ ॥

---

(१) पुस्तकान्तरे, पथिविषद्भ्यः।

आ त्वाग्न इधीमहि द्युमन्तं देवाजरम्।
यद्ध सा ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर॥८८॥
चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि।
न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी
॥ ८९ ॥ २८ ॥

॥ चतुर्थोऽनुवाकः॥

मय्यग्ने अग्निमिति च, मय्यग्ने अग्निं गृह्णामि सह क्षत्रेण वर्चसा बलेन मयि प्रजां मय्यायुर्दधामि स्वाहा इति मन्त्रेण अथो अग्नीन् 'समारोपयेत्'(२५पृ०) आत्माग्नौ निवेशयेत् समारोपणेन व्रतवान् 'स्यात्' भवेत्, 'तन्द्रा' आलस्यं, तद्रहितोऽतन्द्रितः। 'इति' अर्थसामाप्तौ।

मन्त्राणां सम्मतिमाह, तत्रेति(२५पृ०)। प्रथममाश्रमक्रमेण ब्रह्मचारि-गृहस्थ-वाणप्रस्थ-लक्षणद्वारा सन्न्यासपीठिकामाह। ब्रह्मेति। वेदं वेदौ वेदान् वेत्येकशेषः, अधीत्य स्थितः सन् गुरुणा अनुज्ञातः सन् दाराग्नीन् परिगृह्य 'आश्रमी'(२६पृ०) गृहस्थ इत्युच्यते। शक्तित इति(२६पृ०)। अग्निष्टोमादि-संस्कारान् सम्पाद्येति शेषः। स आश्रमी सन्न्यासविधये 'ब्राह्मी' पूर्वो-

---

आत्वाग्ने इधीमहि द्युमन्तं देवा जरम्।
यद्वस्या पनीसी समिद्दीदयति यवि एषां स्तोतृभ्य इत आभर॥ ८८॥
चन्द्रमा अप्स्वन्तरा सुपर्णो धावते।
नमो हिरण्यनेमयः पदं विन्दन्ति विद्युतोवित्तं मे अस्य रोदसी॥ ८९ ॥२८॥
इति चतुर्थमनुवाक खण्डं।
ऋचः॥ ८९॥

त्राम् इष्टिं 'यजेत्' कुर्य्यात्, 'तासां' देवतानां प्रीतये 'अहोरात्रेण निर्व्वपेत्' अहोरात्रमुपोष्य ततो निर्व्वपेत्; इदं हि द्वाहसाध्यं(१) कर्म्म, तत्र च जागरणादिकं कुर्य्यात्। संविभज्येति(२६पृ०) 'सुतान्' पुत्रान् अर्थैः 'संविभज्य' विभक्तधनान् कृत्वा 'ग्राम्य-कामान्' स्त्रीसङ्गादीन् विसृज्य चरेत, 'वनचर्य्येण' वनमार्गेणेति क्वचित्पाठः, वनचर्य्यया 'चरेत' चरेत् विचरेत्। साग्निकश्चेत् द्वादशरात्रीः पयसा होमभक्षौ(२) वनेऽभिनिवर्त्त्य ततो ब्राह्मेष्टिं कृत्वा समारोप्य चरेदिति द्रष्टव्यम्। 'शुचौ' पवित्रे 'देशे' तीर्थादौ, परिभ्रमतीति परिभ्रमः सन्* तस्मिन् काले वायुमात्राहारोऽम्बुमात्राहारो वा भवेत्। "भिक्षार्थं प्रविशेद्ग्रामम्" इत्यादि पक्षस्य दीक्षाविषयत्वादस्य चाद्यापि(३) दीक्षामुपेयादिति वक्ष्यमाणत्वेन दीक्षाया अकृतत्वात्; 'फलैः' वृक्षादिभवैः विहितम् 'अनस्य' प्राणस्य उत्तरं येन प्राणेन, उत्तरं किं(४) मेदास्यसीति, तत्र फलदानमेवोत्तरं(५) विदधातीति विहितानोत्तरः* फलैः शक्तितारतम्येन पक्षत्रय-परिग्रहः। विविधानोत्तरफलैरिति पाठे 'उत्तरफलैः' स्वर्गादिभिः न 'विविधाः' विशेषेण विधत्ते करोति प्रयत्नं, विविधाः, उत्तरफलोद्देशेन प्रयत्नमकुर्वन्।

अग्निमुपसमाधायेत्युक्तं, तस्याग्नेः का प्रतिपत्तिः? इत्यत आह, स्वशरीरे समारोप इति(२६पृ०)। 'स्वशरीरे' स्वदेहे

(१) ख, द्वश माध्यं। (२) क, भक्ष्यौ। * परिभ्रमन् इत्यत्र परिभ्रमः इति पाठो दीपिकासम्मतः। (३) क, चाद्यापि। ख, वाय्यापि। (४) क, ख, उक्तं किं। (५) क, फलदानमन्त्रोत्तरं। * विहितानोत्तरैः इत्यत्र विहितानोत्तरः इति पाठो दीपिकाभिमतः।

कोष्ठाग्नौ वाह्याग्नीनां समारोपः, यतः परमहंस-दीक्षायामुदराग्नौ लोकाग्नीनां परमहंसोपनिषदि समारोपो विहितः। पृथिव्यां नाश्रुपातका इति(२६पृ०)। पुत्रादयो भूमौ नाश्रु पातयन्ति।

नन्वजरामरं(१) वा एतत् सत्त्रमिति श्रुतेः कथमग्नेः परित्यागः? इत्यत आह, सह तेनैवेति। 'तेन' अग्निना सहैव वर्त्तमानः पुरुषः कथं 'सन्न्यस्तः' कृतसन्न्यास उच्यते नैवोच्यते इत्यर्थः।

ननु तर्हि कथमग्निशब्दमेवाभिचिन्तयेदिति ओङ्काराग्नौ ध्येये अपरित्यक्ते सन्न्यासोऽग्नित्वाविशेषादत आह, सनामधेयस्त्विति(२६पृ०)। 'यस्मिन्' प्रणवाग्नौ सति पुमान् सन्न्यस्त उच्यते स प्रणवाग्निः किं सनामधेयः? नैव नामधेयवान्, यथा आहवनीयादि-शब्दवाच्योऽग्निः, नैवमसौ शब्दवाच्यः प्रणवाग्नेर्ब्रह्मार्थकत्वात् ब्रह्मप्रतीकत्वाद्वा ब्रह्मातिरिक्तं नाभिमतं, ब्रह्म च न शब्दवाच्यं; तेन सन्न्यासे तस्य त्यागो न भवतीत्यर्थः।

ननु स्वरूपेण तस्य दृश्यान्तर्भूतत्वात्(२) कथं न सन्न्यासविरोधित्वम्? इति शङ्कामुपसंहार-व्याजेन परिहरति, तस्मादिति (२६पृ०)। 'फलविशुद्धाङ्गी' फलेन ब्रह्माख्येन विशुद्धः संसारातीतो योऽङ्गी संसारातीत-फलप्रदो यः प्रधानमोङ्कारः, 'अर्चिमान्' अर्चिष्मान् अग्निः, स सन्न्यासविरोधी न भवतीत्यर्थः।

ननु तथापि अग्निहोत्रादि-साधितस्य तल्लोक-प्राप्ति-हेतु-

(१) क, नन्वजरामयम्। ख, ननूजरामर्यम्। (२) ख, दृश्यान्तर्भूतत्वात्

भूतस्य सुकृताख्यस्य तेजसः क्व प्रतिपत्तिः? नहि तत् सुकृतं सन्न्यासिनि तिष्ठति, तल्लोकप्राप्ति-लक्षण-फलाभावादत आह, अग्निवर्णमिति(३६पृ०)। अग्नेर्वर्ण इव वर्णो यस्य तत् 'अग्नि-वर्णं' सुकृतं तेजः सन्न्यासिनः 'निष्क्रामति' निर्यांति; क्व याति? स्वाव्यवहितं वानप्रस्थं प्रपद्यते, सन्न्यासाधिकारिणोऽकृतसन्न्यासस्य ये लोकास्ते सन्न्यासे सति वानप्रस्थस्य भवन्तीत्यर्थः 'सुकृतमप्यस्य स्वजना दुष्कृतं दुर्जना उपजीवन्ति' इति श्रुत्युक्तेः; अत्रापि प्रत्यासन्ना भक्तिमन्तश्चेति बोद्धव्यम्।

ननु वानप्रस्थोऽपि मुक्तिफलभाक् कस्मान्न भवति? इत्यत आह, लोकादिति(३६पृ०)। वानप्रस्थः प्रकरणाल्लभ्यते, वान-प्रस्थः संयतोऽपि 'लोकात्' ग्रामादिभ्यः भार्य्यया सहितो वनं गच्छति; भार्य्यया सहित इत्युच्चैः पठनीयम्; यतो भार्य्यया सहितस्ततः कृतसंयमोऽपि लोकानेव गच्छति, नतु स्वस्थो भवतीत्यर्थः। लोकानित्येव क्वचित्पाठः।

इदानीं मध्यस्थः सन्न्यासफलं जिज्ञासुः पृच्छति, त्यक्त्वेति (३६पृ०)। 'कामान्' विषयान् त्यक्त्वा सन्न्यस्यति, पुरुषः संसारे किं भयं 'अनुपश्यति' आलोचयति, 'वा' अथवा किं दुःखं 'समुद्दिश्य' हेयत्वेन मनसि निश्चित्य 'सुस्थितान्' सम्यक् स्थितान् भोगान् त्यजति श्रुतिः। तस्योत्तरत्वेन सन्न्यास-प्रयोजनमाह, गर्भेति(३६प०)। संसारे यद्यपि पुण्यातिशयं करोति, तेन नरकं न प्रतिपद्यते; तथापि क्षीणे पुण्ये अवतरणमावश्यकमिति गर्भ-वासभयं परिहर्त्तुमशक्यम्; तेन ततो भीतः। तथा शरीरिणः पुण्यवतोऽपि शीतोष्णादि-द्वन्द्व-दुःखमपरिहार्य्य-मित्याह, शीतेति

(३६पृ०)। भीतः सन्निति हेतोः सन्न्यस्यति इति किम् अनामयं यत्परं पदं तदेव 'गुहां' संवृतस्थानं ब्रह्माख्यं प्रवेष्टुमिच्छामीति हेतोः सन्न्यासकाले त्यक्तेतिमन्त्रो गुरुणा पठनीयः प्रश्नरूपेण गर्भेत्यादि शिष्येणेति विधिरूह्नीयः। त्यक्तेति मन्त्रे सर्व्वत्र प्रथमपुरुषस्थाने मध्यमो द्रष्टव्यः।

सन्न्यस्य पुनरङ्गीकारे दोषमाह, इति सन्न्यस्येति(३७पृ०)। अग्निं सन्न्यस्य 'अपुनरावर्त्तनं' पुनः परिग्रहो न कर्त्तव्यः। कस्मादिति शङ्कायां स्त्रियोऽभावादित्युत्तरिते सापि कस्मान्नाङ्गीक्रियते इत्याशङ्क्याह, मन्युरिति(३७पृ०)। मन्युनामा रुद्रगणो 'जायां' सन्न्यासिपत्नीम् 'आवहत्' गृहीतवान् इति हेतोः सन्न्यासिभार्य्यायां मन्योरधिकार इत्यस्मादेव वाक्यादवसीयते; अयं सन्न्यासत्यागरूपो ननु दीक्षारूपः, तस्मिन् सति निषिद्धत्वात् पुनरङ्गीकारशङ्काभावात्।

तर्हि अग्निशुश्रूषाद्यभावे किं तस्य कार्य्यम्? अत आह अध्यात्ममन्त्रानिति(३७पृ०)। एतावन्तं कालं त्याग आसीत् ननु दीक्षारूपः सन्न्यासः इति; तामाह, दीक्षामुपेयादिति। दिव्यं भावं ददाति, क्षीयन्तेऽस्य दोषा इति 'दीक्षा' व्रतविशेषः; तदुक्तम्,

"ज्ञानं दिव्यं यतो दद्यात् कुर्य्यात् पापक्षयं लघु।
तस्माद्दीक्षेति सा प्रोक्ता देशिकैस्तत्त्ववेदिभिः"॥ इति।

ताम् 'उपेयात्' गृह्णीयात् गृहीत्वा पालयेदिति भावः। काषायेति(३७पृ०) कषायेण रक्तं 'काषायं' वासो यस्य तादृशः स्यात्।

"कषायो रसभेदे स्यादङ्गरागे विलेपने।
निर्य्यासे च कषायोऽपि सुरभौ लोहितेऽन्यवत्"॥ इति विश्वः॥

कक्षोपस्थलोमानि वर्जयेदिति,* अन्यानि वापयेदित्यर्थात्। ऊर्द्ध्वो बाहुरिति। ऊर्द्ध्वबाहुः कर्त्तव्यः। न मे कश्चित् प्रतिबन्धोऽस्तीति भावेन तदेव फलाभिधान-द्वारेण स्पष्टयति विमुक्तेति (३७पृ०)। अनयैव चेद्वृत्त्या तिष्ठति, तर्हि 'विमुक्तः' अप्रतिबद्धो मार्गो यस्य तादृशो भवति, कुत्रापि तस्य प्रतिबन्धो न भवतीत्यर्थः। अनिकेतश्चरेदिति पाठे स्पष्टोऽर्थः।

परिग्रहविशेषानाह, भिक्षाशनं दध्यादिति। भिक्षा अश्यते भुज्यते अनेनेति 'भिक्षाशनं' भोजनपात्रं 'दध्यात्' गृह्णीयात् 'पवित्रं' चामरादिपिच्छं मशकादि-निवारणार्थं, वस्त्रखण्डं वा जलजन्तुनिवारणार्थम्। श्लोकोक्तानामुपलक्षणमेतत्। 'कुण्डिकां' भिक्षाटन-पात्रं 'चमसः' काष्ठमयः पात्रविशेषः 'शिक्यम्' रज्जुमयम् अन्तरिक्षे भाण्डधारणार्थं मन्त्रं 'त्रिविष्टपं' त्रिविष्टपः(१) अन्योऽन्याश्रयं काष्ठत्रयम् 'अनामयं' सज्जनभक्तं, उपानहाविति पाठे'उपानहौ' पादत्राणे, कौपीनाच्छादनमिति, कूपे प्रवेशनमर्हतीति कौपीनं पुंलिङ्गं, तद्धि गुह्यत्वात् प्रकाशयितुमयोग्य मिति कूपे प्रवेशन मेवार्हति; स्त्रीयोनिर्वा कूपः, तस्मिन् हि बहवो मग्ना न पुनरुन्मज्जन्ति, तमर्हतीति कौपीनं, शालीन-कौपीने अधृष्टाकार्य्ययो(२) रिति निपातनात् साधुः, तस्याच्छादनं वासःखण्डः तच्च दध्यात्, 'पवित्रं'

* कक्षोपस्थलोमगुप्त इतात्र कक्षोपस्थलोमानि वर्जयेदिति दीपिकासम्मतः पाठः।

(१) ख, त्रिविष्टपकामो। (२) ख, अदृष्टाकार्थयो।

पूयते ऽनेनेति पुवः सञ्ज्ञायामिति इत्र ; "पवित्रं घर्षणे कुशे। पवित्रं ताम्र-पयसोर्मध्ये चापि तदन्यवत्" इति विश्वः। इह तु जलपात्रं जलशोधन-वस्त्रखण्डं पिच्छं वा गृह्यते। नदीपुलिनादन्यत्र चेद्वर्ष-व्याघ्रादि-भयात् सुप्यात्(१) तर्हि देवागारेषु न पुनर्जनकृत् संस्थानके(२) गृहादौ। नात्यर्थमिति(३७पृ०)। सुखार्थं दुःखपरिहारार्थञ्च नात्यन्तं यत्नः कर्त्तव्यः, नापि बलाद्दुःखं जनयेत्। 'दानं' तर्पणादि; ध्यानमिति पाठे ध्यानसाधनमाचमनादि(३)। 'परान्' (३७पृ०) निन्दकान्, भिक्षादि अवारितं न निषिद्धं यतीनां; तथा 'वैदलं' फलार्द्धखण्डादि तदप्यवारितम्; एताम् 'वृत्ति' वर्त्तनम् 'उपासीनाः' एतस्या वृत्तेराश्रयं कुर्व्वाणाः ते 'इन्द्रियाणि' चक्षुरादीनि 'घातयन्ति' हिंसार्थाश्चक्षुरादयः(४) तान् घ्नन्तीत्यर्थः।

कार्य्यकारणयोरैक्यात् ब्रह्मणो जातं ब्रह्मैवेति जीवस्यापि ब्रह्मसम्पत्तिरुपपद्यते इति दर्शयितुमाह, विद्याया इति(३७पृ०)।'विद्यायाः' स्वरूपज्ञानस्य, मनोऽधिकरणं, सम्बन्धः आध्यासिकः; मनसः सकाशादाकाशः सम्भूत इत्यादि योजना; छान्दसः सन्धिः; पृथिव्याः सकाशात्, 'इति' एवम्प्रकाराणाम् एषां 'भूतानां' शरीराणां सम्भव इति शेषः। तेन ज्ञानी 'ब्रह्म प्रपद्यते' तद्भवतीत्यर्थः; अथवा विद्याया मनसि 'संयोगः' ब्रह्म-ज्ञानस्योत्पत्तिः; तेन मनसि ज्ञानेन लीने तत्कार्य्यं सर्व्वं लीनं भवतीत्यर्थः। तत्स्वरूपमाह, अजरमिति(३७पृ०)। किं कृत्वा प्रपद्यते? 'तस्य' ब्रह्मणोऽभ्यासेन

---

(१) क, सर्य्यां। ख, सर्य्याम्। (२) क, सत्ताके, ख,स त्याक।
(३) क, ख, माचमणीयादि। (४) क, वाचौरादयः। ख, वायरादयः।

'प्राणापानौ' वायू 'संयम्य' नियम्य निरुध्य इति पूर्वोक्तयोगानुसन्धानं कृत्वा अक्षरं प्रपद्यते इत्यन्वयः ।

अविलम्बेन सिद्धिदं श्लोकैः प्रयोगविशेषमाह, वृषणापानयोरिति(३७पृ०) 'अपानात्' पायोरूर्द्ध्वं वृषणयोरधश्च पाणी 'आस्थाय' स्थापयित्वेत्यर्थः, संश्रयेत् प्राणायाममिति शेषः। पुनः किं कृत्वा ? 'दशनैः' दन्तैः यवमात्रे विनिर्गतां जिह्वां संदश्य संश्रयेत् प्राणायाममिति सम्बन्धः । तथा 'माषमात्रां' सङ्कुचितां दृष्टिं 'श्रोत्रे' वृषणे 'स्थाप्य' स्थापयित्वा, श्रुगताविति शृणोतेर्गत्यर्थत्वात् वीर्य्यस्रवणरूपगत्याधारत्वेन वृषणोऽपि श्रोत्रं भवति ; तथा पर्य्यायेण भ्रुवि स्थाप्य, तदुक्तममृतविन्दौ,

"तिर्य्यगूर्द्ध्वमधोदृष्टिं विनिधार्य्य महामतिः" इति ।

श्रोत्रे धारणमधः, भ्रुवि धारणमूर्द्ध्वं, श्रवणे तिर्य्यगिति । तथा 'नासिके' नासाग्रे दृष्टिं स्थाप्य संश्रयेत् । नासाग्रे दृष्टिः किं? गन्धैकाग्रतया नेत्याह, न गन्धायेति(३८पृ०) । गन्धग्रहणमुपलक्षणम् । श्रवणे दृष्टिः न शब्दं श्रोतुम् । एवमधोदृष्टावपि वृषणादौ स्थितायां कामोद्भवेन स्त्रीस्मरणात् तत्स्पर्शनायाभिलाषे प्राप्ते तं निषेधति, न त्वचं स्पर्शयेत् मनसा प्रयोज्येन ; पुनर्नेति वचनमुक्तार्थदार्ढ्याय, न शब्द एवार्थो वा अनेकार्थत्वान्निपातनानां नैव स्पर्शयेदित्यर्थः ।

तर्हि कुत्र मनः स्थाप्यम् ? इत्यत आह, अथेति(३८पृ०) । यत्र शैवं पदं 'शिवं' ब्रह्म, सदाशिवो वा शिवः, तत्सम्बन्धि 'यत्' स्थले 'पदं' व्यवसितं निश्चयः, तत्र मनः स्थापयेदिति शेषः। "पदं व्यवसित-त्राण-स्थान-लक्ष्माङ्घ्रि-वस्तुषु"(१) इत्यमरः। तदेवं दर्शयं

(१) क, ख, "विश्वामहेतुषु" ।

पदं तत् ब्रह्म तदेव परमयनम्। तत् कथं लभ्यते? इत्यत आह, तद्विति(३८पृ०)। अभ्यासेन योगस्य; कस्य? येन पूर्वजन्मनि स्वात्मा 'अर्जितः' साधितः प्रसन्नीकृतः; तदुक्तं,

"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते" इति।

अभ्यासे क्रियमाणे यद्भवति तदाह, अथेति(३८पृ०)। तैः 'सम्भूतैः' मिलितैः साधनैः आसन-प्राणायामादिभिः(१) हृदयं तपः तत् प्राप्त(२) 'हृदयं' मनः 'संस्थाप्य' स्थिरीकृत्य 'वायुः' प्राणः 'देहात्' शरीरात् ऊर्द्धम् 'अग्र्यं' ब्रह्म प्रपद्यते; किं कृत्वा? 'मूर्द्धानं भित्त्वा' ब्रह्मरन्ध्रेण।

पश्चात् किं स्यात्? अत आह, अथायमिति(३८पृ०)। 'अथ' अनन्तरम् 'अयं' वायुः मूर्द्धानम् 'अस्य' असुचेपणे, चित्वा 'देह' दिदेह, दिह उपचये, उपचयं गतः ब्रह्मणैकीभूतत्वात्; द्विर्व्वचने छन्दसि वा वचनमिति द्वित्वाभावः। उपसंहरति, एषा गतिर्गतिमतामिति(३८पृ०)। गतिमताम् एषा गतिः, अतः परा गतिर्नास्ति, गतेरयमवधिरित्यर्थः। पाठान्तरं दुर्य्योज्यम्।

ननु ये मुक्तास्तेऽपीश्वरेच्छया पुनरुन्मज्जेरन्निति साधन-वैयर्थ्यमित्याशङ्क्य परिहरति, य इति(३८पृ०)। 'ये' पुरुषाः परमाङ्गतिं प्राप्य वर्त्तन्ते, 'ते' पुरुषाः भूयो न निवर्त्तन्ते; कस्मात्? इत्यत आह, परात्परमवस्थादिति(३) 'परादपि' हिरण्यगर्भादेः यत् 'परं' स्थानं तत् प्राप्य 'अवस्थात्' अवस्थानात् इति, अवस्थानम् अवस्थम्, सुपिस्थ इत्यत्र सुपीति योगविभागात् कः; नियति-

(१) क, ख, आसनायामादिभिः। (२) क, ततपम्। (३) क, ख, परात्परमवस्थिता इति।

रेषा परमेश्वरस्य, यः स्वतो व्यवहितः, तं यदा व्यवहितं करोति तदा पुनस्तमेव न व्यवदधातीति सत्यप्रतिज्ञत्वात् दत्तापहारा-कारित्वात्(१) मुक्तस्योन्मज्जनं नास्तीति भावः। द्विरुक्तिः समाप्त्यर्था।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्ट-पदवाक्यानां सन्न्यासस्य प्रदीपिका॥

इति सन्न्यासोपनिषदो दीपिका समाप्ता।

---

# अथारुणेयोपनिषदो दीपिका

आरुणेयी पञ्चविंशो खण्डपञ्चकमण्डिता।
प्रतिखण्डं द्विरुक्तिश्च खण्डा वसति सूचिका(२)॥ १॥

---

(१) क, दत्ताषहाराकारित्वात्।

(२) ख, खण्डावसिति सचिका।

त्रिदण्डी सन्न्यास उक्तः ; इदानीं सर्व्वपरित्यागरूपं परमहंस-सन्न्यासमुपदेष्टुमारुण्युपनिषदारभ्यते, आरुणिरिति(३८पृ०)। आख्यायिका विद्या स्तुत्यर्था। विद्वत्-सन्न्यासोऽस्या विषयः; विष्णु-पद-दर्शनं प्रयोजनम्(१) ; विद्वान् निर्विघ्नत्व-(२) रधिकारी ; यथा-योगं सम्बन्ध ऊह्यः। अरुणस्यापत्यमारुणिः, 'प्रजापतेः' ब्रह्मणः, 'केन' उपायेन, 'भगवन्'।

"ऐश्वर्य्यस्य समग्रस्य धर्म्मस्य यशसः श्रियः।
ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीरणा" ॥

तद्वत् ; एतेन प्रश्नार्हता उक्ता; 'कर्म्माणि' संसृति-निमित्तानि ; 'इति' प्रश्न-समाप्तौ ; तछ्होवाच प्रजापतिरितिश्रुतेः वचः प्रजापतेर्वचः, तवेत्यादि। 'तव' त्वत्सम्बन्धिनः त्वदीयान् ममत्वा-लम्बनान् 'बन्ध्वादीन्' बन्धवो बान्धवा ज्ञातयः उपकारिणश्च, आदिशब्देन भार्य्यादयः, तान् 'सूत्र' योगप्रतिपादको ग्रन्थः, 'स्वाध्यायः' वेदराशिः, तदन्ता अष्टौ द्वितीयान्ताः ; यज्ञोपवीत-याग-सूत्र-स्वाध्यायेषु प्रत्येकं चशब्दैः तत्सम्बन्धीनि सन्ध्यादि-धनादि-पुस्तकादि-षड़ङ्गादीनि गृह्यन्ते; भूर्लोकादीनां सप्तानां समाहारद्वन्द्वः, सत्यलोकं चेति चकारात् प्रकृत्यादि-समुच्चयः(३)।

ऊर्द्ध्वलोकान् हेयत्वेनोक्त्वा अधोलोकानाह, अतलेति(३८पृ०)। अतलादीनां सप्तानां ब्रह्माण्डेन सह समाहारद्वन्द्वः; तानि च पा-नि-वि-सु-रसा-महा-तला-पूर्वाणि(४) तलानि ; पाताले तल-

(१) ख चिह्नितदीपिका पुस्तके, "विद्वत्सन्न्यासस्य चित्तविक्षेपणात्मनो निरन्तरानु-सन्धानं प्रयोजनम्" इत्यतिरिक्तः पाठो विद्यते। (२) क, ख, शिष्टत्सु-।
(३) ख, प्रत्यगादि समुच्चयः। (४) क, तानि च अतलादीनि रसातला सर्व्वाणि।

शब्दस्य दीर्घः; नितलं महातलमप्याहुः। पाताल-रसातल-नितल-तलातल--सुतल--वितलानि पादतल-तदग्र-गुल्फ--जङ्घा-जानूरु-तदूर्द्ध्वभागतयोपास्यानि, तथैव क्रमेण उत्तरोत्तराणि तथापि हेयतया अनास्थया व्युत्क्रमेण निर्दिष्टानि। ब्रह्माण्डे विराड्देहः; चकारादसद्विषयं मनोरथमपि विसृजेत्।

सर्व्वत्यागे कथं शरीर-यात्रा-निर्व्वाहः? इत्याशङ्क्य शास्त्रा-ण्याह दण्डमिति(३८पृ०)। गो-सर्प-निवारणार्थं दण्डं, लज्जा-शीतातप-वृष्टि-बाधा-निवारणार्थमाच्छादनञ्च, चकारात् जल-पात्रञ्च परिग्रहेत्, व्यत्ययेन शेषं परिगृह्णीयात्। देहोपयोगि चेत् ग्राह्यं, तर्हि मञ्चकोष्णीषादीन्यपि प्राप्नुवन्ति इत्यत आह, शेषं विसृजेदिति। मञ्चकोष्णीषादि(१) प्राणात्ययेऽपि न गृह्णी-यादित्यादरार्थोऽभ्यासः। १॥

अधिकारिणो निर्दिशति, गृहस्थ इत्यादिना (३८पृ०)। 'लौकिकाग्नीन्' लोकप्राप्ति-हेतून् श्रौत-स्मार्त्ताग्नीन् अन्त्येष्टिं कृत्वा 'उदराग्नौ' कोष्ठाग्नौ सम्यगग्ने इत्यादिमन्त्रेण निर्व्वाणपुरःसरं(२) समारोपयेत्। ज्ञानिनोऽर्थे प्राप्तेऽपि त्यागे निवृत्तप्रयोजन(३) विषाणापक्षेपवत् इयमग्न्यादीनां शास्त्रीय-प्रतिपत्तिः, 'गायत्रीं' सवितृदेवत्यां, च शब्दात् अन्यदपि मन्त्रजातं 'स्ववाचाग्नौ' स्वीया वाचा वागेवाग्निः, तत्र 'भूःसावित्रीं प्रविशामि' इत्यादिमन्त्रैः समारोपयेत्; उपवीतं शुद्धोदकालाभे भूमौ शुद्धायां, तल्लाभे

(१) क, मञ्चकयोषादि।

(२) क, विः माम पुरःसरं ख, निःपान पुरःसरं।

(३) ख, त्यागे चाषाणे निवृत्त प्रयोजन।

शुद्धास्वप्सु वा 'भूःसमुद्रं गच्छ स्वाहा' इतिमन्त्रेण विसृजेत्। वाशब्दो व्यवस्थितविकल्पे। 'कुटीचरः' कुटीचकस्त्रिदण्डी पुत्र एव भिक्षानिरतः; उपलक्षणमिदं बहूदक-हंसयोरपि; ब्रह्मचारि-ग्रहणं तस्य विशेषणम्, आश्रमि-ब्रह्मचारिण उक्तत्वात्, पालाशं बैल्वमित्यादिना तद्दण्डादित्यागस्य वक्ष्यमाणत्वाच्च; कुटुम्बमिति पुत्रभिक्षानिरतस्य कुटुम्बे वाससम्भवात्, 'पात्रं' भिक्षापात्रं 'पवित्रं' जलपावनवस्त्रं 'दण्डान्' त्रीन् वैणवान्, चात्पूर्ववस्त्रादिक-मपि। लौकिकाग्नीनिति त्रिदण्डिनो वैश्वदेवाधिकारात्। लोकांश्चेति पाठे स्वतपोऽर्जितान्; चात्तदिन्धनादिकमपि प्रत्येकं विसृजेदित्यावश्यकत्वार्थमुक्तम्। 'इतिह' किल 'उवाच' उक्तवान् प्रजापतिरारुणिम्; 'अत ऊर्ध्वं' त्यागानन्तरममन्त्रवत् स्वाध्या-यस्य विसृष्टत्वादाचरेत् स्नानाचमनादिकम्।

नन्वमन्त्रस्य कथमूर्ध्वलोकाप्तिः? अत आह, ऊर्द्ध्वगमनं विसृजे-दिति(३८पृ०)। भूर्लोकादेस्त्यक्तत्वात् पुनस्तद्वासनामपि त्यजे-दित्यर्थः। तर्ह्याचमनादिकमपि(१)अप्रयोजनात् त्यज्यतामित्या-शङ्क्याह, त्रिसन्ध्यादाविति। तिसृणां सन्ध्यानाम् 'आदौ' प्राक्काले 'स्नानं, मौषलम्(२)।

सन्ध्यावन्दनकाले किं कार्य्यम्? अत आह,सन्धिमिति(३८पृ०)। 'सन्धिं' सन्धानं समाधिमाश्रित्य 'आत्मनि' स्वस्मिन् परमात्मना सन्धानमभेदम् 'आचरेत्' भावयेत्। स्वाध्यायस्य परित्याग उक्तः, तस्य प्रतिप्रसवमाह, सर्वेष्विति। सर्वेष्विति निर्द्धारणे सप्तमी, 'आवर्त्तयेत्' पाठतोऽर्थतश्चाभ्यस्येत्।

(१) ख, तर्ह्याचारोऽपि। (२) ख, मौसलं।

आरण्यकेषु प्रवर्ग्यादयोऽपि कर्मग्रन्था(१)दृश्यन्ते, किं तत्सहित-स्यावृत्तिर्नेत्याह, उपनिषदमिति(३८पृ०)। ज्ञानप्रतिपादकं भागमभ्यस्येत्। वाक्याभ्यास आदरार्थः, सन्न्यासो ह्युपनिषदावर्त्तनार्थः; तदनावृत्तौ ज्ञानापाटवेन पातित्यं स्यादित्यादरः(२) ॥ २ ॥

तत्रापि परमामुपनिषदमावृत्त्यर्थमाह, खल्वहं ब्रह्मेति(३८-पृ०)। इदं महावाक्यं, सत्यं ज्ञानमनन्तं ब्रह्म, तच्च सत्यादिवत्(३) 'खलु' निश्चितम् 'अहम्' अहङ्कारोपलक्षितं शोधितजीवचैतन्यं ब्रह्मैव न ततोऽन्यदितिज्ञाने सर्वानर्थनिवृत्तिः परमानन्दावाप्तिश्च फलम्।

ननु प्रबन्धभेदे सति कथमनर्थनिवृत्तिः? इत्याशङ्क्य सूत्रपटन्यायेनाभेदं वक्तुं ब्रह्मणः सूत्ररूपकमाह, सूचनात् सूत्रं ब्रह्मेति (३८पृ०)। तन्तुर्हि स्वात्मनैवातान-वितानभूतेनापात-(४) रमणीयं पटं सूचयन् न तु जनयन् सूत्रं भवति, तथा ब्रह्मापि जगत्पटसूचनात् सूत्रं, कारणातिरिक्तं कार्य्यं नास्तीति ब्रह्मैव सूत्रमित्यर्थः(५)।

ननु सूचयितुर्मायया जीवो मुह्येदेवेत्याशङ्क्य सत्यमज्ञाने इदं स्यात्, ज्ञाने त्वहमेव(६) सूचयिता कथं मुह्येयमित्याह,

(१) क, ख, प्रवर्ग्यादीन्यपि कर्म्मग्रन्थानि।

(२) क, ज्ञानायापाठेनया नित्यं स्यादित्यादरः। ख, ज्ञानपाठवेन या नित्यं स्यादि यस्यत्यादरः।

(३) ख, सत्यादिवत्।

(४) ख, भूतेनावध प्रत्ययात्।

(५) क, ख, सत्यमित्यर्थः।

(६) ख, अन्यत्र तु ज्ञाने त्वहमेव।

सूत्रमहमेव विद्वानिति(३८पृ०)। यतो विद्वान्, अतोऽहमेव सूत्रमित्यन्वयः, मायापतित्वेन गृहीतस्य कथं माययाभिभव इत्यर्थः(१)। त्यागमुपसंहरति। त्रिवृत्सूत्रं त्यजेद्विद्वानिति। स विद्वान् (२) त्रिवृत् सूत्रन्त्यजेदित्यन्वयः; विद्वत्-सन्न्यासेनैवोपसंहारः।

इदानीं सूत्रत्यागार्थं सन्न्यासप्रैषानाह, सन्न्यस्तं मया सन्न्यस्तं मया सन्न्यस्तं मयेति(४०पृ०)। त्रिः कृत्वेति पाठेनैव त्रित्वे लब्धे त्रिरितिवचनं त्रयाणामपि त्रिःपाठार्थं, तत्रायमाम्नायः, एते त्रयोऽपि प्रैषाः सव्याहृतिकास्त्रिभिर्मन्द्र-मध्यमोत्तम-स्वरैरुच्चारणीयाः, लोकत्रयं श्रावयितुं त्रिरभिधानं प्रैषोच्चारणेन यत्त्यक्तं तत्पुनरभिलषन् वध्यो निन्द्यो वध्यश्चेति बोधयितुं 'सम्यक्' अपुनरादेयतया न्यस्तं सन्न्यस्तमित्यर्थः। प्रैषानन्तरं 'मत्तः' कृतप्रैषात् सर्वभूतेभ्योऽभयमस्तु(३)। कुतोऽभयं दत्तमित्यत आह, सर्व्वं प्रवर्त्तते मत्त इति। मत्त एव ब्रह्मणो यतः सर्वं प्रवर्त्तते, नहि जनयितुरेव भयं युक्तम् इति भावः।

इदानीं दण्डादाने मन्त्रमाह। सखेति। त्वं 'सखा' अवन्धकोऽसि 'मा' मां गोसर्पादिभ्यो गोपाय, ओजोनाम शुक्रस्य परिणामो धातूनामष्टमी दशा, तत्फलं तेजः शरीरशक्तिः, सखेति यत् त्वं सखा दृष्टे कर्म्मणि 'असि' भवसि, 'इन्द्रस्य' परमेश्वरस्य 'वज्रः' अरिभयङ्करोऽसि, एतावत् प्रतीकं मन्त्रस्य शाखान्तरे सम्पूर्णं पठितम्। 'इन्द्रस्य वज्रोऽग्निर्वार्त्रघ्नः

(१) ख, मायापतिः लोके नानुगृहीतस्य कथं मायाभिभव इति भावः।

(२) क, विवित् सूत्रं त्यजेद्विद्वान् य एवं खल्वहं ब्रह्मेति। चेदयं विद्वान्।

(३) ख, मत्तः कृतप्रैषात् पूर्वभूतेभ्यो ऽभयमस्तु।

शर्म्म मे भव यत्पापं तन्निवारय इति'। इतिशब्द इन्द्रस्य वज्रो-ऽग्निरिति मन्त्र-प्रतीकार्थः। त्रिःकृत्वोऽपि वैणवं दण्डमित्यनेन मन्त्रेण वैणवं दण्डम् 'ऊर्द्धम्' उपरि दक्षिणकरे निधायेत्यर्थः, अत एव सन्यासोपनिषद्यूर्ध्वं गोपायुरिति दण्डविशेषणम्; कौपीनं लज्जाहेतुत्वात्, कूप प्रवेशनमर्हति कौपीनं पुल्लिङ्गं, तस्मात्तांच्छा-दकत्वाद्-यतिवासोऽपि; कौपीन-शालीने अधृष्टाकार्य्ययोरिति साधुः, तदपि परिग्रहेत्। औषधवत् प्रीतिं विना शरीरस्थित्यर्थम् 'अशनं' भोजनमाचरेत्; अभ्यासस्त्वादरार्थः, सर्वथा रसासक्तिं न कुर्य्यात्, त्यागवैयर्थ्यादित्यादरः(१)॥ ३॥

इदानीं यदभावे महापातकिवत् पातित्यं, तानि पञ्चावश्य-कान्याह, ब्रह्मचर्य्यमिति(४०पृ०)। युवतीनां स्मरण-कीर्त्तन-केलि--प्रेक्षण-गुह्यभाषण--सङ्कल्पाध्यवसाय--क्रिया-निर्वृति--वर्जनं ब्रह्मचर्य्यम्; अहिंसा च मनो-वाक्-काय-कर्म्मभिर्भूतानिष्टवर्ज्जनम्; 'अपरिग्रहम्' उक्तपरिग्रह--व्यतिरिक्तवर्जनम्; सत्यं प्रियहित-प्रमाणं दृष्टार्थवचनम्; द्वौ चशब्दावुक्त-समुच्चयार्थौ; तृतीयोऽनु-क्तास्तेय-समुच्चयार्थः; एतानि पञ्च यत्नेन हे यतयो रक्षत रक्षत, पुनरेव द्वयोः प्लुतः, तृतीये पर्य्याये हे रक्षतेतिप्लुतिरुच्चैः श्रुत्यर्था, सर्व्वानुच्चैः श्रावयति प्रजापतिः; त्रिरुक्तिरादरार्था; प्राणात्यये-ऽप्येतानि न परित्याज्यानीति; इतिशब्द उपदेश समाप्त्यर्थः; हे शब्द उशब्दश्चाभिमुखीकरणे, हे मुमुक्षवो ब्रह्मचर्य्यादीनि 'रक्षत' पालयतावश्यमित्यर्थः।

---

(१) ख, त्यागवैयर्थ्यात् भयादित्यादरः।

इदानीं ब्रह्मचर्य्यादि पञ्चकस्थैर्य्यादि परमहंसधर्म्मं पुनर्विशेषेणाह, अथातः परमहंस-परिव्राजकानामिति(४०पृ०)। धर्म्मा वक्ष्यन्त इति शेषः। 'अथ' प्रैषोच्चारण-दण्डग्रहणानन्तरं यती ब्रह्मचर्य्यादिरक्षणं विना नसिद्धिरतो(१) धर्म्मा वक्ष्यन्ते; केषां? 'परं' केवलम् अहं सः न ततोऽन्योऽहमिति(२) निश्चिताः परमहंसाः, परिव्रजन्ति गृहबन्धं परित्यज्य परिव्राजकाः, ते च ते च तेषाम्, आसन-शयनाभ्यां भूमाविति, भूमावेवासनेन दिवा, शयनेन रात्रौ कालं नयेदितिशेषः; 'आसनं' स्वरूपावस्थानं, 'शयनं' वाह्यविषय-विस्मृतिः, तदुक्तं,

"यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः" इति।

तेन पर्य्यङ्कादि-परित्यागेऽपि स्वरूपविस्मृतौ विषयचिन्तनेन चाकृतार्थ एवेतिभावः॥ ब्रह्मचारिणामिति। तेषामेव विशेषणम्, उपलक्षणमेतत्, अहिंसासत्यास्तेयापरिग्रहव्रतामित्यपि ज्ञेयम्।

उदकव्यवहारार्थं पात्राण्याह, मृत्पात्रं वालावुपात्रं दारुपात्रं चेति(४०पृ०)। 'अलावुः' तुम्बीफलम्, अशनपात्रन्तु वक्ष्यति, पाणिपात्रश्चेति; वा शब्दोऽनास्थायां यथालाभम् तैजसानि पात्राणि स्युरिति च तव पुत्रानित्यादिना वाह्यानि त्याज्यानि उक्तानि, वैणवं दण्डमित्यादिना वाह्यानि ग्राह्याणि, खल्वहं ब्रह्मेत्यादिनान्तरं ग्राह्यमुक्तं; सम्प्रत्यान्तराणि त्याज्यान्याह, काम-क्रोधेत्यादिना(४०पृ०)। 'कामः' मैथुनेच्छा

(१) ख, न सिद्धिः तत्र स्वधर्म्मत्यागेनेति, अतो।

(२) ख, स परापरं केवलमहं न सतोऽन्योऽहमिति।

विषयसाचाभिलापो वा; 'क्रोधः' कामाविघातजः(१) कामानुजः प्रज्वलनात्मकः; 'लोभः' उपात्तस्यातितिक्षा; 'मोहः' नित्याशुचि-दुःखात्मनि शरीरे नित्यशुचि-सुखात्मबुद्धिः; 'दम्भः' धर्म्मध्वजित्वं; 'दर्पः' गर्वः परावज्ञानेन स्वात्मन्यधिकबुद्धिः; 'असूया' परोत्कर्षासहिष्णुता; 'ममत्वं' परस्मिन् स्वसम्बन्धित्वबुद्धिः; 'अहङ्कारः' जाति-गुण-कर्म्माभिमानः; 'अनृतम्' अप्रियाहिताप्रमाण-दृष्टार्थ-वचनम्; आदिशब्देन हर्ष-शोकादि द्वन्द्वानि गृह्यन्ते, कामादीनां नवानां* द्वन्द्वः, तत आदिशब्देन बहुव्रीहिः; तानि परित्यजेत् न पुनः स्मरेत्।

परिव्राजक-सञ्ज्ञया परितो व्रजनकर्त्तृत्वे प्राप्ते तदपवादमाह, वर्षासु ध्रुवशील इति(४० पृ०)। अन्येऽष्टावित्युक्तेः पञ्चचतुः-पक्षे(२) चत्वारो मासा वर्षाः, तासु ध्रुवं शीलमस्य, ध्रुव इत्येव सिद्धे शीलग्रहणं कीटाकुलायां भूमौ सर्व्वथाटननिषेधार्थम्; शेषेष्वर्थसिद्धमटनमित्यनुजानाति,(३) अष्टौ मासानेकाकी यतिश्चरेदिति(४० पृ०)।

"बहूनां कलहो यस्मात् द्वयोर्वार्त्ता भवेद्यतः।
एक एव चरेद्विद्वान् कुमार्य्या इव कङ्कणम्" ॥ इत्युक्तेः॥

(१) ख. कामविघातजः।

* कामादीनां नवानामिति पाठो दीपिकापुस्तकद्वयेऽपि दृश्यते। किन्तु मूले कामादयोऽनृतपर्य्यन्ता दश विद्यन्ते। दीपिकाकारेणापि दश एव व्याख्याताः; अतो नवानामित्यत्र दशानामिति पाठो भवितव्य इति सुधीभिर्विवेच्यम्।

(२) क, पञ्चतुर्यज्ञे।

(३) ख, शेषेषु नामधेयमिद्धार्थमनुजानाति।

समानशीलत्वे द्वितीयमनुजानाति, द्वावेव वा चरेदिति(४०पृ०)। अध्यात्म-कथारस-व्यसने तु द्वावेव मिलित्वा चरेत्। चरतामिति वक्तव्ये चरेदित्युक्तिरेकचित्ततामावेदयितुम्; वा शब्दोऽनास्थायाम्। एकचित्तता(१) दशानामपि जायते पाण्डवानां सहाटनस्मरणात्। एवकारो भिन्नशीलव्यावृत्त्यर्थः। वाक्याभ्यास आदरार्थः॥ ४॥

सन्न्यासे यथा आश्रम-क्रमनियमो नास्ति, तथा उपनयनस्यापि नास्तीत्याह, खलु वेदार्थमित्यादिना(४०पृ०)। वेदार्थं विद्वानिति नलोकेति षष्ठीनिषेधः; सोपनयनादिति सन्धिरार्षः; 'तानि' पूर्वोक्तानि, एतानीति पाठे वक्ष्यमाणानि, प्राग्वा त्यजेदिति, यस्तु प्राग्भवीयानन्त-सुकृत-(२)वशादुपनयनमन्तरेणापि केनचिन्निमित्तेन विज्ञातवेदार्थः, स उपनयनात् पूर्वमपि त्यजेत्, तथा स्मर्य्यन्ते हि भरतैतरेयक-दुर्वासो-व्यास-शुकादयः, प्राक्त्यागपक्षे यानि बाल्येन दुस्त्याज्यानि,(३) पितरं त्यजेत्, पुत्रं यतिपिता त्यजेत्, अग्न्याद्युपवीतं विषयं; च शब्देन समुचितं सामान्येनाह, अन्यदपीहेति(४०पृ०)। 'अन्यत्' गृहक्षेत्रादिकम्, अपिशब्दाद्यद्यस्य स्वभावप्रियं तदपि त्यजेत्।

यतेरग्रामवासश्च कर्त्तव्य इत्याह, यतयो हीति(४०पृ०)। विशेषविधिः शेषनिषेधफलः ब्राह्मणैः प्रवेष्टव्यमिति वत्; तेन अन्यद्ग्रामं न प्रविशन्तीत्यर्थः। जलपात्रवद्भिक्षापात्रं न सङ्ग्राह्य-

(१) ख, एकचित्तानां।

(२) क, प्राग्भवीयातं न सुकृत-। ख, प्रागभावीयानं नतसुकृत।

(३) क, प्राक्त्यागयज्ञे बाल्ये दुसज्जे। ख, बाल्येन दुस्त्यजेत्।

मित्याह, पाणीति। पाणिपात्रमुदरपात्रञ्चेति कर्म्मधारयौ, 'पाणिः' अञ्जलिः पाणिर्वा पात्रम्, उदरं ग्रासार्थं मुखप्रमाणेन पात्रं; वा शब्दोऽनास्थायाम्; तेन भूम्यादिकमपि भिक्षादौ।

जप्यं मन्त्रमाह ओं हीति(४१पृ०)। मन्त्रार्थस्तु, 'हि' निश्चितं सर्वम् 'ओं' परमात्मैव; त्रिरावृत्तिर्जपप्रकार-प्रदर्शनार्थम्, ओङ्कारस्यैव प्राधान्येऽपि हिशब्दः सन्धिव्यावृत्त्यर्थः। तस्य कल्पोक्तान् न्यासानपि कुर्य्यादित्याह, एतदुपनिषदं विन्यसेदिति(४१पृ०)। उपनिषद्-शब्दोऽकारान्तो नपुंसकम, यद्वा. एषा चासावुपनिषच्च तां, रहस्यज्ञानमुपनिषत् उपचारान्मन्त्रोऽपि। न्यासप्रकारस्तु प्रणवकल्पादवसेयः।

उपासनफलमाह, विद्वान् य एवमिति(४१पृ०)। ब्रह्मचर्य्यादिभिर्यः 'एवं' एवङ्गुणकमोङ्कारं शब्दतोऽर्थतश्च(१) 'वेद' विदित्वा चाभ्यस्यति, स विद्वान् भवति, यथोक्तं ब्रह्म साक्षात्करोतीत्यर्थः।

इदानीं ब्रह्मचारिणां सन्न्यासे कर्त्तव्ये पूर्ब्बदण्डेनैव दण्डित्वनिरासार्थमाह, पालाशमित्यादि(४१पृ०)। अत्र दण्डस्य पलाशादि-प्रकृतित्रयं त्रैवर्णिकाभिप्रायं, इयोरनधिकारेऽपि ब्राह्मणस्यैव पूर्ब्बालाभे उत्तरग्रहण-सूचनार्थम्।

"सन्न्यासो ब्राह्मणस्योक्तो नान्यवर्णस्य कस्यचित्" इतिस्मृतेः।

अजिन-मेखलयोः पूर्ब्बमनुक्तत्वादुपादानम्। उपवीतस्य दण्डबन्धनशङ्का--निरासार्थं यज्ञोपवीतञ्चेत्युक्तम्, चकारो लौकिकाग्नि-समिद्धोमादीनां समुच्चयार्थः, 'त्यक्त्वा' परित्यज्य शूरः

(१) ख,शब्दतो न्यासतोऽर्थतश्च।

अन्यथानधिकार:(१) भवेदितिशेष: ; न हि त्यागमात्रेण किन्तु शूरो मनोऽरिजये स्यात्, तदुक्तं,

"न हि सन्न्यसनादेव सिद्धिं समधिगच्छति" इति।

क: शूर:? इत्यत आह, य एवं वेदेति, (४१पृ०) 'य:' विदितवेदार्थ: सन्न्यासं सत्यधिकारे कर्त्तव्यत्वेन 'वेद' जानाति, स: 'शूर:' साधकश्रेष्ठ:।

उक्तसन्न्यास-फलावेदकमृग्द्वयमुदाहरति, तद्विष्णोरित्यादि (४१पृ०)। सूरयो दिव्यदृष्ट्या 'तत्' मुक्तोपसृप्यं विष्णो: परमं पदं सदा पश्यन्ति। तस्य नित्यत्वात् स्वरूपे दृष्टान्तमाह दिवीति। निर्म्मल आकाशे 'आततं' व्याप्तं चक्षुर्यथा आवरकाभावाद्विततं निर्विकल्पकं ज्ञानं भवति, तथा विकल्पकशून्यंचिद्घनं तदित्यर्थ:।

ननु कथं तदेवं लभ्यमित्याशङ्क्य गुरूपदेशादित्याह, तद्विप्रास इति (४१पृ०)। छान्दसोऽसुक्, ब्राह्मणानामेवोपदेशाधिकार इति विप्रग्रहणेन सूचितम्; 'विपन्यव:' विमन्यव: छान्दसो वर्णव्यत्यय:, काम-क्रोधादिरहिता:, यतस्तुतौ पत्यु: स्तुति: तद्रहिता:, तुल्यनिन्दास्तुतय इति वा, 'जागृवांस:' त्यक्ताज्ञाननिद्रा:, तदुक्तम्,

"या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी" इति।

'समिन्धते' सम्यक् दीपयन्ति परहिताय प्रकाशयन्ति; किं तत्? यद्विष्णो: परमं 'पदं' पदनीयं मुक्तोपसृप्यं स्थानं स्वरूपात्मकमेव, विप्रोपदेशादेव तल्लभ्यमितिभाव:। इति शब्दो मन्त्रद्वयसमाप्त्यर्थ:।

(१) ख, अन्ययोरनधिकार:।

उपसंहरति, एवं निर्व्वाणेति(४१पृ०) वातिर्भावे क्तः, निर्व्वाणो ऽवाते इति निष्ठानत्वं, 'निर्व्वाणम्' उपशान्तिर्मोक्ष इति यावत्, तस्यानुशासनमेवं द्रष्टव्यम्। ननु किमिदं प्रजापतेरनुशासनम्?. ओमिति चेत्, तथा सति पौरुषेयत्वेनाप्रामाण्य-शङ्का स्यादित्या-शङ्क्याह वेदानुशासनमिति। आरुणिप्राजापत्याख्यायिका तु विद्या स्तुत्यर्थैव 'वेदस्य' शब्दराशेः सर्वस्य सर्ववर्णाश्रमादि-व्यवस्थाहेतोः राजकल्पस्यानुशासनं, तदकरणे संसारशूले तस्क-रादेरिव विनिक्षेपः स्यात्। अभ्यासोऽन्येषामपि वेदानामेता-वदर्थ-पर्य्यवसायित्वमित्येतदर्थः। इति शब्द उपनिषत्समाप्त्यर्थः।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानामारुणेय-प्रदीपिका॥

इत्यारुणेयोपनिषदो दीपिका सम्पूर्णा।११।

———

# ब्रह्मविद्योपनिषत् ।

## दीपिका-सहिता ।



ओँ ब्रह्मविद्यां प्रवक्ष्यामि सर्व्वज्ञानमनुत्तमाम् ।
यत्रोत्पत्तिं लयञ्चैव ब्रह्म-विष्णु-महेश्वरात् ॥ १ ॥

ओँ ब्रह्मविद्योपनिषदि द्विखण्डायां त्रिदेवताः ।
स्थित्युत्पत्ति-लयाः प्रोक्ताः प्रणवस्याक्षरत्रयात् ॥ १ ॥

प्रश्ने प्रणवस्त्रिमात्राभेदेनोपास्यतयोपक्षिप्तः, तस्यावयवशः शरीर-वर्ण-स्थान-लया नोक्ता इति तदर्थं ब्रह्मविद्योपनिषदारभ्यते । ब्रह्मविद्यां प्रवक्ष्यामीति श्लोकः क्वचिदेवादौ पठ्यते । 'ब्रह्म' प्रणवः तस्य 'विद्यां' ज्ञानं, तां किम्भूतां? सर्व्वेषां 'ज्ञानम्' उपायभूताम्, तथा 'यत्र' विद्यायां देवत्रयात् उत्पत्तिं लयं चकारात् पालनञ्च प्रवक्ष्यामीति पूर्व्वेणान्वयः । श्रुतेः प्रतिज्ञेयम् ।

प्रसादान्तःसमुत्थस्य विष्णोरद्भुतकर्म्मणः ।
रहस्यं ब्रह्मविद्यायां ध्रुवाग्निः(१) सम्प्रचक्षते ॥ २ ॥
ओमित्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः ।
शरीरं तस्य वक्ष्यामि स्थानं कालं लयं तथा ॥३॥

प्रसादेति । विष्णोर्ब्रह्मविद्यायां रहस्यं 'ध्रुवाग्निः' प्रणवतेज

(१) ख चिह्नित-दीपिकापुस्तके ध्रुवाग्निरित्यत्र भुवाग्निरिति पाठो विद्यते । एवं स्थानान्तरेऽपि ।

इति प्रचक्षते बुधा इत्यन्वयः। विष्णुनेयं विद्या प्रवर्त्तितेत्यर्थः। कीदृशस्य? 'प्रसादेन' भक्तकृपया 'अन्तः' अन्तरात् स्तम्भमध्यात् 'समुत्थस्य' नृसिंहरूपेण प्रकटीभूतस्य, यद्वा "प्रसादो देव-भू-भुजाम्" इति कोषात् क्षीरोदार्णव-वैकुण्ठ-बलिगृहद्वारादेः प्रसा-दस्यान्तरात् जगद्रक्षणार्थं प्रकटीभूतस्य, यद्वा 'प्रसादः' लिङ्गा-द्यपेक्षया प्रसन्नरूपो जीवः, तस्य आन्तरम् आवरणमविद्यादि, ततः 'समुत्थस्य' निष्क्रान्तस्य अविद्यावरण-रहितस्येत्यर्थः; यथोक्तं छान्दोग्ये 'स एष प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतीरूपं सम्पद्य स्वेन रूपेणाभिसम्पद्यते, स उत्तमः पुरुषः' इति। अद्भुतकर्म्मणः मत्स्यादिरूपेण, ओङ्कारः 'ध्रुवः' अक्षर-निर्घण्टावुक्तः; तथाहि,

"ओङ्कारो वर्त्तुलस्तारो बिन्दुः शक्तिस्त्रिदैवता।
प्रणवो मन्त्रगर्भश्च पञ्चदेवो ध्रुवः शिवः।
मन्त्राद्यः परमं बीजं मूलमाद्यश्च तारकः।
शिवादि व्यापको व्यक्तः परं ज्योतिश्च संविदः"। इति।

स्थानं कालं लयं तथेति। कालशब्दो भेचकवाचको वर्णं लक्षयति, तेन वर्णं वक्ष्यामीत्यर्थः। वर्णमित्येव वक्तव्ये काल-ग्रहणं मात्रारूप-कालस्यापि सङ्ग्रहार्थमिति द्रष्टव्यम्।

**तत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोऽग्नयः।**
**तिस्रो मात्रार्द्धमात्रा च त्र्यक्षरस्य(१) शिवस्य च॥**

अवयवशः शरीरं तावदाह, तत्र देवा इति। त्र्यक्षरस्य(२)

(१) क, ख, अक्षरस्य। (२) क, ख, अक्षरस्य।

शिवस्य चेति, 'शिवः' अर्द्धमात्रार्थः तिस्रो मात्रास्त्र्यक्षरस्य अर्द्ध-मात्रा शिवस्येत्यर्थः, प्रणवस्य देवादयस्त्रय उक्ताः। तिस्रो मात्रा अर्द्धमात्रा चेति वक्तव्ये छान्दसः सन्धिः। तदुक्तं हठप्रदीपिकायाम्।

"अकारश्च उकारश्च मकारो विन्दु-सञ्ज्ञकः।
त्रिधा मात्रा स्थिता यत्र तत्परं ज्योतिरोमिति"॥

ऋग्वेदो गार्हपत्यश्च पृथिवी ब्रह्म एव च।
अकारस्य शरीरन्तु व्याख्यातं ब्रह्मवादिभिः॥ ५॥
यजुर्वेदोऽन्तरिक्षञ्च दक्षिणाग्निस्तथैव च।
विष्णुश्च भगवान् देव उकारः परिकीर्त्तितः॥ ६॥
सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च।
ईश्वरः परमो देवो मकारः परिकीर्त्तितः॥ ७॥

त्रय इत्युक्तं, तदेव विभजते, ऋग्वेद इत्यादिना। ब्रह्म एव चेत्यत्र छान्दसो ह्रस्वः प्रकृतिभावश्च, ब्रह्मा देव इत्यर्थः।

सूर्य्यमण्डलमिवाभात्यकारः शङ्खमध्यगः।
उकारश्चन्द्र-सङ्काशस्तस्य मध्ये व्यवस्थितः॥ ८॥
मकारश्चाग्नि-सङ्काशो विधूमो विद्युतोपमः।
तिस्रो मात्रास्तथा ज्ञेयाः सोम-सूर्य्याग्नि-तेजसः॥९॥
शिखाभा दीपसङ्काशा यस्मिन्नुपरि वर्त्तते।
अर्द्धमात्रा तु सा ज्ञेया प्रणवस्योपरि स्थिता॥ १०॥

खण्डाम्तेन ग्रन्थेन शरीरमुक्तं, सम्प्रति स्थानं वर्णसहित-

माह, सूर्य्येति । सूर्य्यमण्डलमिव आभाति अकारः, 'शङ्खः' ललाटास्थि 'तन्मध्ये' नेत्रस्थानं तत्र वर्त्तमानः, योऽयं दक्षिणेऽक्षपुरुष इति श्रुतेः ।

"शङ्खो निध्यन्तरे कम्बु-ललाटास्थि-नखेषु च" इति विश्वः । 'तस्य मध्ये' शङ्खस्यैव मध्ये अर्थात् वामनेत्रे स्थितः । मकार इति । अत्रापि तस्य मध्ये इत्यपेक्षते, शङ्खस्य मध्ये अर्थात् तृतीयनेत्रे व्यवस्थितः ; अतएव जाज्ञवल्क्येनोक्तम् ।

"इडायां पिङ्गलायाञ्च चरतश्चन्द्र-भास्करौ ।
इडायां चन्द्रमा ज्ञेयः पिङ्गलायां रविः स्मृतः" ॥ इति ।

खेचर्य्याञ्च ।

"जिह्वामूले स्थितो देवि! सर्व्वतेजोमयोऽनलः ।
तदग्रे भास्करश्चन्द्रस्तालुमध्ये प्रतिष्ठितः ।
एवं यो वेत्ति तत्त्वेन तस्य सिद्धिः प्रजायते" ॥ इति ।

'तिस्रो मात्राः' अकारादयः, अनेन काल उक्तः, सोम-सूर्य्याग्नि-तेजस इत्यनेन वर्णा उक्ताः, 'यस्मिन्' शङ्खे 'उपरि' तृतीयनेत्रादुपरि, अनेनार्द्धमात्रास्थानमुक्तम् ।

**पद्मसूत्रनिभा सूक्ष्मा शिखाभा दृश्यते परा(१) ।**
**सा नाडी सर्य्यसङ्काशा सूर्य्यं भित्त्वा तथा परम् ॥११॥**
**द्वासप्तति-सहस्राणि सूर्य्यं भित्त्वा तु मूर्धनि ।**
**वरदः सर्वभूतानां सर्वं व्याप्यैव तिष्ठति ॥ १२ ॥**

पद्मसूत्रेति । पद्मसूत्रनिभेति तस्या वर्णा उक्ताः, 'शिखाभा'

(१) घ चिह्नित पुस्तके, 'पद्मसूत्रनिभा चैव सङ्काशा दृश्यते परा' इति पाठः ।

ज्वालाभा ऊर्द्धता-वैषम्याभ्यां, तथा मूले स्थूला उपर्य्युपरि तन्वी च।

"शिखा शिखायां ज्वालायां चूड़ायामग्रमात्रके।
लाङ्गल्याञ्चापि शाखायां चूड़ायाञ्च शिखण्डिन:"॥

इति विश्वः।

'सा नाड़ी' सुषुम्णा, तस्या एव वा पूर्वाणि विशेषणानि, 'सूर्य्यं' चक्षुरधिष्ठानम्, अथवा, सूर्य्यात् लब्धरश्मित्वान्मनोऽधिष्ठानश्चन्द्रः सूर्य्यः, तं भित्त्वा, तथापरम् अधस्कन्धे द्वासप्तति-सहस्राणि नाड़ीर्भित्त्वा ऊर्द्ध्वं गता, तदुक्तं गोरक्षेण,

"ऊर्द्ध्वं मेढ्रादधो नाभेः कन्दयोनिः खगाण्डवत्।
तत्र नाड्यः समुत्पन्नाः सहस्राणि द्विसप्ततिः"॥ इति।

पुनरधिदैवतं सूर्य्यं भित्त्वा मूर्द्धनि ब्रह्मलोके द्वादशान्ते च दृश्यते इत्यनुषङ्गः। तदुक्तं याज्ञवल्क्येन,

'तासां मुख्यतमास्तिस्रस्तिसृष्वेकोत्तमोत्तमा।
मुक्तिमार्गेति सा प्रोक्ता सुषुम्णा विश्वधारिणी॥
कन्दस्था मध्यमा गार्गि! सुषुम्णा सुप्रतिष्ठिता।
पृष्ठमध्य-स्थिता नाड़ी सा हि मूर्ध्नि व्यवस्थिता॥
मुक्तिमार्गे सुषुम्णा सा ब्रह्मरन्ध्र-प्रतिष्ठिता।
अव्यक्ता सैव विज्ञेया सूक्ष्मा सा वैष्णवी स्मृता"॥ इति।

प्रणवो नादरूपेण सर्व्वव्याप्येवेत्याह, वरद इत्यनेन। ओङ्कारोऽनाहतशब्दो विष्णुरेवैक इत्युक्तं भवति।

**कांस्यघण्टा-निनादस्तु यथा लीयति शान्तये।**
**ओङ्कारस्तु तथा योज्यः शान्तये सवमिच्छता॥१३॥**

इदानीं लयमाह, कांस्यघण्टेति। यथा 'लीयति' लीनो भवति उपरतव्यापारो भवति, ओङ्कारस्तथा शान्तये योज्यः प्लुततरो जप्तव्य इत्यर्थः। 'सर्व्वं' सर्व्वात्मभावं ब्रह्मभावमिच्छता।

यस्मिन् संलीयते शब्दस्तत्परं ब्रह्म गीयते।
ध्रुवं हि चिन्तयेद्ब्रह्म सोऽमृतत्वायकल्पते।
सोऽमृतत्वाय कल्पते ॥ १४ ॥

इति ब्रह्मविद्योपनिषत् समाप्ता। १२ ॥

यस्मिन् 'संलीयते' यद्वस्तु अनुभूय 'शब्दः' विषयः नोपलभ्यते विलीयते, तत्परं ब्रह्म। तदुक्तं हटप्रदीपिकायाम्,

"काष्ठे प्रवर्त्तितो वह्निः काष्ठेन सह शाम्यति।
नादे प्रवर्त्तितं चित्तं नादेन सह लीयते ॥
विसृज्य सकलं वाह्यं नादे दुग्धाम्बुवन्मनः।
एकीभूयास्य मनसा ब्रह्माकाशे विलीयते" ॥ इति।

लयलक्षणन्तु।

"लयो लय इति प्राहुः, कीदृशं लयलक्षणम्?।
अपुनर्व्वासनोत्थानात् लयो विषय-विस्मृतिः" ॥ इति।

यद्वा यतो(१) वाचो निवर्त्तन्ते इत्यर्थः।

उपसंहरति, ध्रुवमिति। 'ध्रुवम्' ओङ्कारं हि ब्रह्म चिन्तयेत् 'ध्रुवम्' एकरूपं वा एकाग्रतया वा ब्रह्म चिन्तयेत्। द्विरुक्तिः समाप्त्यर्था।

(१) क, ख, यतो।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानां दीपिका ब्रह्मवेदने॥
इति ब्रह्मविद्योपनिषदो दीपिका सम्पूर्णा। १२।

---

## क्षुरिकोपनिषत्।

ओं क्षुरिकां सम्प्रवक्ष्यामि धारणां योग-सिद्धये।
यां प्राप्य न पुनर्जन्म योगयुक्तः स(१) जायते॥ १॥

ओं क्षुरिका शस्त्रिका प्रोक्ता तत्तुल्या धारणा यतः।
तद्वाचकस्त्रिखण्डोऽयं क्षुरिकाग्रन्थ उच्यते॥ १॥

गुरुतः प्राप्तविद्यस्य तत एव लब्धज्ञान-प्रणव-मन्त्रस्य षड़ङ्गे योगेऽधिकार इति तदर्थमुत्तरो ग्रन्थः, क्षुरिकामित्यादि। 'क्षुरिकामिव' संसारोच्छित्तये(२) शस्त्रिकामिव रूपकं, 'धारणाम्' आत्मनि चित्तावस्थानलक्षणाम्, उक्तञ्च योगियाज्ञवल्क्येन,

---

(१) क, ख, योगयुक्तस्य। (२) क, संसारोत्कृन्तये।

"शमादि-गुणयुक्तस्य मनसः स्थितिरात्मनि ।
धारणेत्युच्यते सद्भिः शास्त्रतात्पर्य्य-वेदिभिः" ॥ इति ।

न पुनर्जन्म भवतीति शेषः । 'सः' धारणावान् कुतश्चिदपराधाद्यदि योगभ्रष्टो भवति, तर्हि जन्मान्तरे योगयुक्त एव जायते इत्यर्थः । योगश्चित्तवृत्ति-निरोधः ।

"तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्" इति स्मृतेः ।

**वेद-तत्त्वार्थ-विहितं यथोक्तं हि स्वयम्भुवा ।**
**निःशब्दं देशमास्थाय तत्रासनमवस्थितः ॥ २ ॥**

वेदेति । इदं योगस्वरूपं वेदेन 'तत्त्वार्थेन' परमार्थेन(१) विहितं' विधि-विषयीकृतं 'स्वयम्भुवा' ब्रह्मणा 'यथोक्तं' यथा वर्त्तते तथोक्तं न विसंवादीत्यर्थः । तथोक्तं योगियाज्ञवल्क्येन,

"वक्ष्यामि योगसर्व्वस्वं ब्रह्मणा कीर्त्तितं पुरा" । इति ।
"तथोक्तं परमेष्ठिना"० ० ० इति च ।

योगस्वरूपं साधयितुं षड्ङ्गान्याह, निःशब्दमिति ।

यदुक्तं,

"कान्तारे विजने देशे फल-मूलोदकान्विते ।
तपश्चरन् वसेन्नित्यम्० ० ० इति ।

षड्ङ्गलक्षणान्यमृतविन्दावुक्तानि । यमादीनां(२) पूर्वकाण्डादेव सिद्धत्वादिहानभिधानं, नतु कापालिकवदनङ्गीकारात् । यमा यथा

(१) ख, परमार्थत्वेन । (२) ख, यमनियमयोः ।

"अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं दयार्जवम्।
क्षमा धृतिर्मिताहारः शौचञ्चेति यमा दश" ॥

नियमा दश यथा,—

"तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम्।
सिद्धान्त-श्रवणञ्चैव ह्रीर्मतिश्च(१) जपो हुतम्" ॥ इति।

'अवस्थितः' आवस्थित आरूढः, तदुक्तं गीतासु।

"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिन-कुशोत्तरम्" ॥ इति।

तथा तन्त्रेणासनं पद्माद्यास्थित इत्यपि बोद्धव्यम्। तदुक्तं हठप्रदीपिकायाम्।

"हठस्य प्रथमाङ्गत्वादासनं पूर्वमुच्यते।
तत्कुर्य्यादासनस्थैर्य्यमारोग्यञ्चाङ्ग-पाटवम्" ॥ इति।

**कूर्मोऽङ्गानीव संहृत्य मनो हृदि निरुध्य च।**
**मात्रा-द्वादश-योगेन प्रणवेण शनैः शनैः ॥ ३ ॥**
**पूरयेत् सर्व्वमात्मानं सर्व्वद्वारान् निरुध्य च।**
**उरो-मुख-कटि-ग्रीवं किञ्चिद्धृदयमुन्नतम् ॥ ४ ॥**

कूर्मोऽङ्गानीवेति प्रत्याहार उक्तः, अत्र इन्द्रियाणीति शेषः। तदुक्तम्,

"इन्द्रियाणां विचरतां विषयेषु स्वभावतः।
बलादाहरणं तेषां प्रत्याहारः स उच्यते" ॥ इति।

(१) क, ख, ह्रीर्मृतिश्च।

आन्तर-प्रत्याहार-सिद्धये मन इति। 'हृदि' हृत्पुण्डरीके। मात्रा इति। द्वादश मात्रा नादविन्द्वाद्युक्ताः 'घोषिणी प्रथमा मात्रा' इत्यादिना, तत्रैव द्रष्टव्याः। प्रणवेन शनैरुच्चारितेन वायुं पूरयेत्; कीदृशेन? 'मात्राः' अकारोकार-मकारार्द्धमात्राख्याश्चतस्रः, तासां प्रत्येकं तिस्रस्तिस्रो मात्रा घोषिण्याद्यो भूमिपत्यादिफलाः(१) द्वादश, तासां 'योगः' चिन्तनं यस्मिन् तेन, यदा द्वादशभिः प्रणवैः पूरणं, तदा अष्टचत्वारिंशद्भिः कुम्भनं, चतुर्विंशतिभिश्च रेचनम्; यदा तु षोडशभिः पूरणं, तदा चतुःषष्टिभिः कुम्भनं, द्वात्रिंशद्भीरेचनम्; अष्टभिर्यदा पूरणं, तदा द्वात्रिंशद्भिः(२) कुम्भनं, षोडशभीरेचनमिति विवेकः। सर्वमात्मानं नतु कतिपयाङ्गानि, रोधेनोपविशेत्, तथा सति वायुवैषम्यं स्यात्। 'सर्वद्वारान्' सर्वद्वाराणीत्यर्थः। उरो-मुख-कटि-ग्रीवमुन्नतं धारयेदिति शेषः।

तदुक्तं गीतासु,—

"समं काय-शिरो-ग्रीवं धारयन्नचलं स्थिरम्" ॥ इति ॥

हृदयं किञ्चिदुन्नतं धारयेत्(३), अनेन जालन्धरबन्धः सूचितः; स यथा,—

"कण्ठमाकुञ्च्य हृदये स्थापयेच्चिबुकं दृढम्।

बन्धो जालन्धराख्योऽयममृताक्षय-कारकः" ॥ इति।

---

(१) ख, भोगपत्यादिफलाः। (२) क, ख, त्रिंशद्भिः।
(३) क, धारयम्।

प्राणान् सञ्चारयेद्-योगी नासाभ्यन्तरचारिणः(१)
भूत्वा तत्र गतः प्राणः, शनैरथ समुत्सृजेत् ॥ ५ ॥

सञ्चारयेत् पूरकमात्राभिः, तस्मिन् हृदये*। नासेति। तेन मुखेन पूरक-रेचकौ निषिद्धौ।

भूत्वेति। प्राणः 'तत्र' सर्व्वशरीरे 'गतः' प्रविष्टः भूत्वा तिष्ठतीति शेषः। एतेन कुम्भक उक्तः, स च पूरक-मात्रापेक्षया चतुर्गुणाभिर्मात्राभिः कार्य्यः। अथ रेचकमाह, शनैरिति। समुत्सर्जनञ्च पूरणापेक्षया द्विगुणाभिर्मात्राभिः।

स्थिरमात्रा-दृढं कृत्वा अङ्गुष्ठे तु समाहितः।
द्वे तु गुल्फे तु कुर्व्वीत जङ्घे चैव त्रयस्त्रयः ॥ ६ ॥
द्वे जानुनि तथोरुभ्यां गुदे शिश्ने त्रयस्त्रयः।
वायोरायतनञ्चात्र नाभिदेशे समाश्रयेत् ॥ ७ ॥

स्थिरेति, 'स्थिराभिः' एकरूपाभिर्मात्राभिः 'दृढं' स्थिरं प्राणं कृत्वा, केवलकुम्भकः सिद्ध(२) इत्यर्थः। ततो धारणाभिः प्रत्याहारमभ्यसेदित्याह, अङ्गुष्ठ इत्यादिना। अङ्गुष्ठे इत्यादौ जातावेकवचनम्, अङ्गुष्ठयोः गुल्फयोः जङ्घयोः इत्यादि बोद्धव्यम्। अङ्गुष्ठयोर्धारणे कुर्व्वीतेत्यन्वयः, द्वे तु धारणे कुर्य्यादित्यर्थः। त्रयस्त्रय इति। आद्यन्त-मध्येषु निरोधाः कर्त्तव्याः

---

(१) क, नासाभ्यन्तरधारिणः। * 'तस्मिन् हृदये' इति लिखनदर्शनात् 'योगी' इत्यत्र 'तस्मिन्' इति पाठो दीपिकाकार-सम्मत इत्यनुमीयते।

(२) क, केवलकुम्भके सिद्ध।

इति शेषः। जानुनि आद्यन्तयोः ऊरुभ्यां साधनाभ्याम् उर्व्वोरपि तथा द्वे इत्यर्थः। नाभि देशे इति। अत्र नाभिदेशे वायोः 'आयतनं' मुख्यं स्थानमस्ति। तत्र धारणया(१) समाश्रये-दित्यर्थः।

तत्र नाड़ी सुषुम्णा तु नाड़ीभिर्बहुभिर्वृता।
अणुरक्ताश्च पीताश्च कृष्णास्ताम्र-विलोहिताः ॥८॥

तत्रेति। 'तत्र' नाभौ 'सुषुम्णा' मध्यनाड़ी 'बहुभिः' द्वासप्तति-सहस्रैः वृता; मूलन्तु तस्याः कन्दमध्ये। कन्दस्तु—

"गुद-ध्वजान्तरे कन्दमुत्सेधाद्द्व्यङ्गुलं(२) विदुः"। इति।

"गुद-मेढ्रान्तरे यद्वै वेणुकन्दं तदुच्यते" ॥ इति च।

'वेणुः' सुषुम्णा, सा च षट्चक्रवती मूलाधार-दण्डान्तर्विवरं गता मूर्द्धानं भित्त्वा ब्रह्मलोकान्तं निर्गता। तदुक्तं छान्दोग्ये, "शतञ्चैका च हृदयस्य नाड्यः, तासां मूर्धानमभिनिःसृतैका" इति। नाभेरूर्द्धन्तु चक्रानुक्रमेण धारणा मूर्द्धान्तं द्रष्टव्या, उक्तञ्च योगियाज्ञवल्क्येन,

"मर्मस्थानानि सिद्ध्यर्थं शरीरे योग-क्षेमयोः।
तानि सर्व्वाणि वक्ष्यामि यथावच्छृणु सुव्रते! ॥
पादाङ्गुष्ठौ च गुल्फौ च जङ्घामध्यौ तथैव च।
चित्योर्मूलञ्च जान्वोश्च मध्ये चोरूभयस्य च ॥
पायुमूलं ततः पश्चान्मध्यदेहश्च मेढ्रकम्।
नाभिश्च हृदयं गार्गि! कण्ठकूपस्तथैव च ॥

(१) क, तत्र साधारण। (२) क, कन्दमूले त्र्यधाङ्गुलम्।

तालुमूलञ्च नासाया मूलञ्चाक्ष्णोश्च मण्डले।
भ्रुवोर्मध्यं ललाटञ्च प्रोक्तानि मुनिसत्तमैः॥
मर्म्मस्थानानि चैतानि"-इति।

एतेषु च तत्रैव धारणोक्ता,—

"स्थानेष्वेतेषु मनसा वायुमारोप्य धारयेत्।
स्थानात् स्थानं समाकृष्य प्रत्याहारं प्रकुर्व्वतः।
सर्व्वे रोगाश्च नश्यन्ति योगाः सिध्यन्ति तस्य च"॥ इति।

अङ्गुष्ठादूर्द्ध्वमारोहे फलमिदमुक्तम्; मूर्द्ध्नोऽङ्गुष्ठपर्य्यन्तावरोहेऽपि धारणानां फलमुक्तम्,—

"स्थानात् स्थानं समाकृष्य यस्त्वेवं धारयेत् सुधीः।
सर्व्वपाप-विशुद्धात्मा जीवेदाचन्द्र-तारकम्"॥ इति।

अणुरक्ताश्चेति। अणुरक्ताश्चेत्यादि नाड़ीनां विशेषणम्, तदुक्तं छान्दोग्ये, "अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्य" इति। अणवश्च ता रक्ताश्चेति समासः।

**अतिसूक्ष्माञ्च तन्वीञ्च शुक्लां नाड़ीं समाश्रयेत्।**
**ततः सञ्चारयेत् प्राणानूर्णनाभीव तन्तुना॥ ९॥**

एवं केवल-कुम्भके सिद्धे प्राण-मनसोः स्थानविशेषेषु प्रत्याहारमभ्यस्य धारणा-सिद्धये सुषुम्णायां प्राण-मनसोः प्रवेशः कर्त्तव्यः; तत्रोपायः, मूलोड्डियाण-जालन्धर-बन्धैः शक्ति-चालनेनापानमूर्द्ध्वमाकुञ्च्य तेन देहमध्ये ऽग्निं प्रज्वाल्य तज्ज्वालया कुण्डलीं प्रताप्योद्बोध्य ब्रह्मनाडीद्वार-मध्यस्थ-तन्मुख-प्रसारणेन

तत्र वायु-मनो-वह्नीन् प्रवेशयेदित्याशयेनाह, अतिसूक्ष्मामिति।
तत्र जालन्धर-बन्ध उक्तः; उड्डियाणो यथा,—

"उदरे पश्चिमं तानं नाभेरूर्द्ध्वन्तु कारयेत्।
उड्डियाणो ह्ययं बन्धो मृत्यु-मातङ्ग-केशरी" ॥ इति।

मूलबन्धो यथा,—

"पार्ष्णिभागेन सम्पीड्य योनिमाकुञ्चयेद्गुदम्।
अपानमूर्द्ध्वमाकृष्य मूलबन्धो निगद्यते" ॥ इति।

शक्ति-चालनं यथा,—

"सव्यासनस्थस्य फणावती सा प्रातश्च सायं प्रहरार्द्धमात्रम्।
प्रपूर्य्य सूर्य्यात् परिधानयुक्ता प्रगृह्य नित्यं परिचालनीया" ॥
इति।

अतिस्वच्छां 'तन्वीं' बालाग्रशत-सहस्रान्त-भागोपमां 'नाड़ीं' सुषुम्णां 'समाश्रयेत्' अन्या नाड़ीरुत्सृज्य तत्रैव मनो बध्यादित्यर्थः। 'ततः' तयेत्यर्थः, तृतीयार्थे तसिः, तन्तुनेति प्रतियोगिनि तृतीया-श्रवणात्, सुषुम्णया प्राणान् 'सञ्चारयेत्' ऊर्द्ध्वं नयेत्। 'ऊर्णनाभी' लूताख्या कीटविशेषः तन्तुना यथा ऊर्द्ध्वं सञ्चरति, तथा सञ्चारयेदित्यर्थः।

**ततो रक्तोत्पलाभासं पुरुषायतनं महत्।**
**दहरं पुण्डरीकेति वेदान्तेषु निगद्यते ॥ १० ॥**

'ततः' सञ्चारणानन्तरं तत्रिस्थित्यशतनेनाम्बकः, 'तत्' पुण्डरीकं, कीदृशं? रक्तोत्पलवदाभासं रक्तवर्णं(१), नानावर्ण-नाड़ी-

(१) क, ख, रक्तोत्पलवत् रक्तवर्णं।

योगात् रक्तता "पुण्डरीकं सिताम्बुजे" इति कोषात् सितत्वे-ऽप्यौपाधिकी शोभा। 'पुरुषायतनं' जीवननीड़ः 'महत्' सर्व्वाव-भासकत्वात्, 'दहरं' दभ्रं सूक्ष्मस्वरूपेण हृत्पद्मं दहराख्य-माकाशं 'वेदान्तेषु' छान्दोग्यादिषु 'निगद्यते' पठ्यते; तद्यथा,— "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मि-न्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इति।

**तद्भित्त्वा कण्ठमायाति तां नाडीं पूरयन् यतः(१)।**
**मनसस्तु चुरं गृह्य सुतीक्ष्णं बुद्धि-निर्म्मलम्॥ ११॥**

'तत्' पुण्डरीकम् अनाहताख्यं कुण्डलिनी मंत्र-प्राणा-ग्निभिर्भित्त्वा 'कण्ठ' विशुद्धचक्र-स्थानम् अर्गलां भेत्तुमायाति जीवः, 'तां' सुषुम्णां 'पूरयन्' व्याप्नुवन् 'यतः' प्रयतः सावधानः, 'पूरयन् दिवि' इति पाठे, दिवि इति निमित्तसप्तमी, फलमपि च निमित्तं भवति, दिवः प्राप्त्यर्थम् ऊर्द्ध्वमारोहेदित्यर्थः। मनः-प्रकृतिकं चुरं शास्त्रनिशातं मन एवेत्यर्थः 'सुतीक्ष्णं' तर्केण घर्षणोपलेन निघृष्टं शानस्थानीयया बुद्ध्या निर्म्मलम्।

**पादस्योपरि मर्मृज्य तद्रूपं नाम क्तन्तयेत्।**
**मनोद्वारेण तीक्ष्णेन योगमाश्रित्य नित्यशः॥ १२॥**

---

(१) क, ग, घ चिह्नितमूलपुस्तकेषु 'पूरयेद्यतः' इति पाठः। ख चिह्नितमूलपुस्तके 'पूरयेत् शनैः' इति पाठः। किन्तु 'पूरयन् यतः' इति पाठो दीपिकाभिमतः; अतः स एव मूले निवेशितः।

पादस्येति। ब्रह्मणः 'पादस्य' श्रुत्यन्तरोक्तस्य पुम्पादस्थानीयस्य उपरि तदुपासनाय 'मर्ज्य' निर्म्मलीकृत्य, मृजेर्यङन्तात् ल्यप् छान्दसः। ब्रह्मणः पादा यथा,—

"तदेतच्चतुष्पाद् ब्रह्म, वाक् पादः, प्राणः पादः, चक्षुः पादः, श्रोत्रं पादः, इत्यध्यात्मम्, अथाधिदैवतम्, अग्निः पादः, वायुः पादः, आदित्यः पादः, दिशः पादः, इत्युभयमेव आदिष्टं भवति, अध्यात्मञ्चैवाधिदैवतञ्चेति"।

अथवा प्रणवस्य चत्वार्य्यक्षराण्येव जाग्रदादि-रूपाणि पादाः, "ओमित्येतदक्षरस्य पादाश्चत्वारः" इत्यथर्व्वशिखोक्तेः; 'तत्' प्रसिद्धं 'रूपं' भूतादिस्वरूपं 'नाम' तद्वाचकः शब्दः, तद्द्वयं ब्रह्मणो लोमस्थानीयं स्वरूपाद्-बाह्यं 'कृन्तयेत्' निवर्त्तयेत्, तद्विषयां वृत्तिं भूतशुद्धि-मार्गेण त्यजेदित्यर्थः। इदमेव तस्य निकृन्तनं यद्-विषयीकरणं मनोमयत्वात् संसारस्य मनसानुपरक्तस्य स्वरूपाभावात्, हटपक्षे उत्तरमार्ग-रोधकं सङ्ग्रन्थिनाड़ीचक्रं छिन्द्यात्, तदुक्तं,—

"नासादक्षिण-मार्गवाहि-पवनः प्राणातिदीर्घीकृत-
चन्द्राम्भः-परिपूरितामृततनुः प्राग्-घण्टिकायां तदा।
छिन्द्यात् काल-विशालवह्नि-वशतो भूरन्ध्रनाडीगणां-
स्तत् कार्य्यं कुरुते पुनर्नवतरं छिन्नद्रुमस्कन्धवत्"॥ इति।

किं कृत्वा निकृन्तयेत्? अत आह, मन इति। मनसा उपायेन 'नित्यशः' अभीक्ष्णं 'योगं' जीवात्म-परमात्मनोरैक्यं, पक्षान्तरे 'योगम्' उद्योगम् आश्रित्य।

इन्द्रवज्र इव(१) प्रोक्तो मर्म्म-जङ्घानुकीर्त्तनम्।
तद्ध्यान-बलयोगेन धारणाभिर्निकृन्तयेत्॥ १३॥

कीदृशं योगम्? इन्द्रवज्र इवेति। तथा प्रोक्तं यथा इन्द्रो वज्रेण भेद्यं(२) भिनत्ति, एवमयं योगः छेद्यं वासनाजालम्, 'इन्द्रवज्रः' विद्युत् तत्तुल्यया कुण्डलिन्या नाड़ीजालञ्च छिनत्ति। पुनः कीदृशं? मर्म्मणो जङ्घाया अनुकीर्त्तनं यस्मिन् स तं, जङ्घारूपं मर्म्मध्यानस्थानं यत्र कथितम्। जङ्घाग्रहणमङ्गुष्ठादेरप्युपलक्षणं तुल्यन्यायत्वात्, अङ्गुष्ठादि-मूर्द्धान्तानां मर्म्मणामनुकीर्त्तनात्। 'मर्म्मजङ्घानुकर्त्तनम्' इति पाठे, यथा नापितेन क्षुरस्य तैक्ष्ण्यानाय जङ्घा अनुकृत्यते मुण्ड्यते, तथा अङ्गुष्ठादिमर्म्मस्थानानि नाड़ीमलानुकृन्तनेन निर्म्मलौ क्रियन्ते इत्यर्थः। तदिति, तच्छब्देन योग्यता-वशात् मर्म्मजङ्घादि गुणीभूतमपि परामृश्यते, 'तत्' सनाड़ीकं मर्म्मादि धारणाभिश्छिन्द्यात्। अथवा व्यवहितमपि रूपं नाम तच्छब्देन परामृश्यते: स एवार्थः।

ऊरोर्मध्ये तु संस्थाप्य मर्म्म-प्राण-विमोचनम्।
चतुरभ्यास-योगेन छिन्देदनभिशङ्कितः(३)॥ १४॥

ऊरोरिति। ऊरुग्रहणमुत्तरोत्तर-स्थानोपलक्षणम्, ऊरोर्मध्ये समनस्कं प्राणं संस्थाप्य मर्म्मणः प्राणस्य च विमोचनं कर्त्तव्यम्। 'अस्मिन् मर्म्मण्यहं स्थितः' इत्यभिमानं त्यक्त्वा निरालम्ब-

(१) क, ख चिह्नित मूलपुस्तकद्वये 'इन्द्रवज्र इति' इति पाठो विद्यते।

(२) ख, भेद्यं। (३) क, ख, छिन्देदनभिशङ्कितः।

स्तिष्ठेदित्यर्थः। एवं स्थानान्तरेष्वप्यूह्यम्। अथवा सर्वता-वच्छेदेन व्यवधायकं नाड्यादि विदार्य्य स्थानात् स्थानान्तरे गमनञ्च।

चतुरिति। शरीरान्तरेषु 'चतुर्षु' गुद-शिश्न-नाभि-हृदय-स्थानेषु अभ्यासयोगेन नाम-रूप-मर्म्म-प्राणान् छिन्द्यात्। अथवा 'चतुर्व्वारं' चतुरावृत्त्या प्रातर्मध्याह्ने सायं निशीथे च सर्वेषु स्थानेष्वभ्यास-योगेन।

नन्वेवं छेदने देहाभिमान-त्यागेन देहपातः स्यादत आह, अनभिशङ्कित इति। अयं भावः, नह्यभिमान-त्यागेन देहपातो भवति सुषुम्णादिषु तथा दर्शनात्, ध्यानिनां चिरकालं देहावस्थानस्मृतेश्च, न वा चक्रादि-भेदेनापि(१) सा शङ्केति।

ततः कण्ठान्तरे योगी समूहन् नाड़ि-सञ्चयम्।
एकोत्तरं नाड़िशतं तासां मध्ये वराः स्मृताः॥ १५॥

तत इति। तदनन्तरं योगी 'कण्ठान्तरे' कण्ठमध्ये नाड़ी-सञ्चयं 'समूहन्' सञ्चयीकुर्वन् छिन्द्यादित्यनुषङ्गः। कियत्यो नाड्यः सन्ति? इत्यपेक्षायां मध्यमसङ्ख्यामाह, एकेति। 'वराः' उत्तमाः।

इड़ा रक्षतु वामेन पिङ्गला दक्षिणेन तु।
तयोर्मध्ये वरं स्थानं यस्तं वेद स वेदवित्॥ १६॥

इड़ा वामेन पिङ्गला दक्षिणेन इत्येवं वक्ष्यमाणं रक्षतुशब्दयोगः शिष्याणामाशिषि विद्यासम्प्रदायोच्छेदो माभूदिति। 'वरं स्थानं' सुषुम्णाख्यं 'तं' तदधिष्ठातारं पुंलिङ्गनिर्देशात्।

(१) क चक्रादिभेदनेऽपि।

सुषुम्णा तु परे लीना विरजा ब्रह्मरूपिणी।
द्वासप्तति-सहस्राणि प्रति नाड़ीषु तैतिलम्॥ १७॥

किं तत् स्थानं? कश्च तदधिष्ठाता? इत्यपेक्षायामाह, सुषुम्णेति। सुषुम्णा 'परे' परपुरुषे ब्रह्मणि लीना 'विरजाः' निर्म्मला 'ब्रह्मरूपिणी' ब्रह्मस्थानत्वात् सुषुम्णैव वरं स्थानं, पर एव तदधिष्ठातेत्यर्थः। कथम्भूता सुषुम्णा? नाड़ीषु मध्ये द्वासप्तति-सहस्राणि नाड़ीः प्रति 'तैतिलम्' उच्छीर्षं गण्डुकं, यथा गण्डुकाधारे उत्तमाङ्गं तिष्ठति, एवं सुषुम्णाधारे सर्व्वा नाड्यः स्थिता इत्यर्थः।

"तैतिलो गण्डुके प्रोक्तस्तैतिलं करणान्तरे"। इति विश्वः।

छिद्यते ध्यानयोगेन सुषुम्णैका न छिद्यते।
योग-निर्म्मलधारेण क्षुरेणानलवर्च्चसा॥ १८॥
छिन्देन्नाड़ीशतं धीरः प्रभावादिह जन्मनि।

न छिद्यते तस्याः परमसूक्ष्मत्वेन मनो-विषयत्वायोग्यत्वात्, मनोविषयस्यैव योगेन छेद्यत्वात्, ऋजुतया अप्रतिहन्तृत्वाच्च।

जातीपुष्प-समायोगैर्यथा वास्यन्ति तैतिलम्॥ १९॥
एवं शुभाशुभैर्भावैः सा नाड़ी, तां विभावयेत्।
तद्भाविताः प्रपद्यन्ते पुनर्जन्म-विवर्जिताः॥ २०॥

तैतिलेन सुषुम्णायाः सादृश्यान्तरमाह। जातीति। 'जाती'

वासन्तो, तस्याः पुष्पाणां 'समायोगैः' संयोगैः कृत्वा यथा प्रसाधकाः 'तैतिलं' गण्डूक 'वासयन्ति' वासेन परिमलेन युक्तं कुर्व्वन्ति, एवं सा नाड़ी शुभाशुभैर्भावैः वास्यते इति विपरिणामः । पुष्पादि-वासाश्रयो यथा गण्डुकं भवति, तथैयं नाड़ी वासनाश्रय इत्यर्थः । तर्हि किं कार्य्यम् ? अत आह, तामिति । चिन्तनफलमाह, तदिति । 'प्रपद्यन्ते' सम्पद्यन्ते ।

ततो विदित-चित्तस्तु निःशब्दं देशमास्थितः ।
निःसङ्गस्तत्त्व-योगज्ञो निरपेक्षः शनैः शनैः ॥ २१ ॥
पाशं छित्त्वा यथा हंसो निर्व्विशङ्कः खमुत्क्रमेत् ।
छिन्नपाशस्तथा जीवः संसारं तरते तदा ॥ २२ ॥
यथा निर्व्वाण-काले तु दीपो दग्ध्वा लयं व्रजेत् ।
तथा सर्व्वाणि कर्म्माणि योगी दग्ध्वा लयं व्रजेत् ॥ २३ ॥
प्राणायाम-सुतीक्ष्णेन मात्राधारेण योगवित् ।
वैराग्योपल-घृष्टेन छित्त्वा तन्तुं न बध्यते ॥ २४ ॥
अमृतत्वं समाप्नोति यदा कामान् स मुच्यते ।
सर्व्वेषणा-विनिर्मुक्तश्छित्त्वा तन्तुं न बध्यते ॥
छित्वा तन्तुं न बध्यते ॥ २५ ॥

इति क्षुरिकोपनिषत् समाप्ता ॥ १३ ॥

तत इति। विदितं चित्तं येन स विदितचित्तः। 'मात्राधारेण' मात्राः द्वादशादि-सङ्ख्याः प्रणवमात्राः, ता एव धारा(१) यस्य मनः-क्षुरस्य स तथा। 'तन्तु' वासनारूपम्। छिकत्तिर्निश्चयार्थः; समाप्त्यर्थ इतिशब्दः। अयमारोह-प्रकार उत्क्रान्तिसमये खेचरी-पटले उक्तः, यथा,—

"यदा तु योगिनो बुद्धिस्त्यक्तुं देहमिमं भवेत्।
तदा स्थिरासनो भूत्वा मूलाच्छक्तिं समुज्ज्वलाम्॥
सूर्य्यकोटि-प्रतीकाशां भावयेच्चिरमात्मनः।
आपादतल-पर्य्यन्तं प्रसृतं जीवमात्मनः॥
संहृत्य क्रमयोगेन मूलाधारपदं नयेत्।
तत्र कुण्डलिनीं शक्तिं संवर्त्तानल-सन्निभाम्॥
जीवं निजस्वेन्द्रियाणि ग्रसन्तीं चिन्तयेद्धिया।
सम्प्राप्य कुम्भकावस्थां तड़िज्ज्वलन-भासुराम्॥
मूलाधाराद्-यतिर्देवि! स्वाधिष्ठानपदं नयेत्।
तत्रस्थं जीवमखिलं ग्रसन्तीं चिन्तयेद्व्रती॥
तड़ित्-कोटि-प्रतीकाशां तस्मादुन्नीय सत्वरम्।
मणिपूरपदं प्राप्य तत्र पूर्ववदाचरेत्॥
तत्र स्थित्वा क्षणं देवि! पूर्ववद्योगमार्गवित्।
अनाहतं नयेद्-योगी तत्र पूर्ववदाचरेत्॥
उन्नीय तस्माद्-भ्रूमध्ये नीरक्षरं ग्रसेत् पुनः।
ग्रस्तं चीरं महाशक्त्या कोटिसूर्य्य-समप्रभा॥

(१) क. ख, धारणा।

मनसा सह वागीशा(१) भित्त्वा ब्रह्मार्गलं क्षणात्।
परामृत-महाम्भोधौ विश्रान्तिं तत्र कारयेत्॥
तत्र स्थं परमं देवं शिवं परम-कारणम्।
शक्त्या सह समायोज्य तयोरैक्यं विभावयेत्'' ॥

इति ज्ञातमुत्क्रान्ति-कालं वञ्चयित्वा यदि जीवितुमिच्छेत्, तदावरोहं कुर्य्यादित्यपि तत्रोक्तम्। तद्यथा,—

"यदि वञ्चितुमुद्युक्तः कालं कालविभागवित्।
कालस्तु यावद्-व्रजति तावत्तत्र सुखं वसेत्॥
ब्रह्मद्वारार्गलस्याधो देहं कालप्रयोजनम्।
तस्मादूर्द्ध्वपदं देयं न हि कालप्रयोजनम्॥
यदा देव्यात्मनः(२) कालमतिक्रान्तं प्रपश्यति।
तदा ब्रह्मार्गलं भित्त्वा शक्तिं मूलपदं नयेत्॥
शक्तिदेह-प्रसूतन्तु स्वजीवञ्चेन्द्रियैः सह।
तत्तत् कर्म्मणि संयोज्य स्वस्थदेहः सुखं व्रजेत्॥
अनेन देवि! योगेन वञ्चयेत् कालमागतम्" ॥ इति।

आरोहावरोहाभ्यां स एव सर्वयोग-शास्त्रेषु मुख्यो योग इति द्रष्टव्यम्। स च क्षुरिकायां प्रकाशितः।

नारायणेन रचिता श्रुतिमात्रावलम्बिना।
अस्पष्टपद-वाक्यानां दीपिका क्षुरिकाभिधे॥

इति क्षुरिकोपनिषदो दीपिका सम्पूर्णा॥ १३ ॥

---

(१) क, वागीशा। (२) क, देवात्मनः।

# चूलिकोपनिषत्।

ओम् अष्टपादं शुचिर्हंसं त्रिसूत्रं मणिमव्ययम्।
द्विवर्त्तमानं तेजसेद्धं सर्वः पश्यन् न पश्यति॥ १॥

ओं चूलिका चूलिका लोके स्तम्भाग्रं(१) तीक्ष्णमुच्यते।
तद्वद्देहात्म-भागोऽयं चतुःखण्डा हि पञ्चमी॥ १॥

योगफलमात्मदर्शनम्, स चात्मा अतिसन्निहितोऽपि कण्ठस्थ-हारवत् पराग्दृष्टिना(२) गुरुं विना न दृश्यते इति तद्बोधनार्थ-मुत्तरो ग्रन्थः। तत्र हाररूपकेणाह, अष्टपादमिति। 'अष्टौ' प्रकृतिरूपाः 'पादाः' अवयवा अस्य तम् अष्टपादम्, तदुक्तम्,—

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा"॥ इति।

अस्याः पादत्वं सर्वतः प्राथम्यसाम्यात्। 'शुचिः' उज्ज्वलं; शुचिः शब्दः सकारान्तो नपुंसकम्; शुचिमिति वा पाठः। हन्ति अज्ञानमिति 'हंसः' तं, त्रीणि 'सूत्राणि' धर्म्मार्थ-कामा यस्य, मोक्षस्य स्वरूपानतिरेकात्। त्रयो गुणा वा, त्रिसूत्रं तिस्रो नाड्यो वा। 'मणिं' प्रकाशकत्वात्, न विविधमेतीति 'अव्ययम्' एकरूपं,'द्वयोः' स्थूल-सूक्ष्म-देहयोः'वर्त्तमानं' तिष्ठन्तं द्विवर्त्तमानं,

(१) ख, चूलिका चूडिका लोके तं मार्गं। (२) पराग्दृष्टिना।

'तेजसा' प्रकाशेन 'इद्ध' दीप्तं तेजसैद्धं, कान्दसी वृद्धिः । एवंविधमात्मानं कण्ठस्थ-हारमिव 'सर्वः' लोकः पश्यन्नपि न पश्यति। हारोऽपि अष्टकः(१) कण्ठिकावयवः(२) उज्ज्वलः हंसलक्षणोपेतः त्रिवृत्सूत्रः मणिमयः दृढः 'द्वयोः' दक्षिणोत्तरभागयोर्वक्षमानः तेजसा दीप्तश्च भवति, सर्वो लोकः तं पश्यन्नप्यतिसान्निध्यान्न पश्यति ।

भूतसम्मोहने काले भिन्ने तमसि चैश्वरे ।

अन्तः पश्यति सत्त्वस्थं निर्गुणं गुणकोटरे(३) ॥ २ ॥

तर्हि तद्दर्शने क उपायः ? इत्यत आह, भूतेति। भूतमोहजनके 'काले' कृष्णवर्णे 'ऐश्वरे' ईश्वराधिष्ठिते 'तमसि' अज्ञाने 'भिन्ने' नष्टे सति 'अन्तरेव' सन्निहितं पश्यति 'सत्त्वस्थं' बुद्धिस्थं तत्साक्षिणं तत् प्रकाश्यं वा दृश्यते त्वग्र्यया बुद्ध्या इति श्रुतेः । स्वयं निर्गुणमपि 'गुणकोटरे' लिङ्गे भासमानं, मेघमण्डले इव सूर्यम् ।

अशक्यः सोऽन्यथा द्रष्टुं ध्येयमानः कुमारकः ।

विकार-जननीं मायामष्टरूपामजां ध्रुवाम् ॥ ३ ॥

ध्यायते ऽध्यासिता तेन तन्यते प्रेरिता पुनः ।

सूयते पुरुषार्थञ्च तेनैवाधिष्ठिता पुरा ॥ ४ ॥

अशक्य इति । सः 'कुमारकः' जरा-रहितः 'अन्यथा'

(१) क, अष्टक। (२) ख. कन्दकावयव। (३) ख. गुणगह्वरे।

दिव्यदृष्टिं विना प्रकारान्तरेण द्रष्टुं न शक्यः, सः 'ध्येयमानः' वाह्यदृष्ट्या चिन्त्यमानोऽपि, छान्दस एकारः। अथवा अद्यापि 'ध्येयं' चिन्तनीयं विचार्य्यं 'मानं' प्रमाणमस्य दुर्विज्ञेयत्वात्, मायां 'ध्यायते' चिन्तयति जगत्-सृष्ट्यर्थं सम्भावयति, नारी-मिवर्त्तुः, सा तां(१) तदुक्तम्,—

"मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवः सर्व्वभूतानां ततो भवति भारत!" ॥ इति।

तेन 'अध्यासिता' आक्रान्ता आरूढ़ा प्रेरिता च सती 'तन्यते' स्वयमेव कार्य्यरूपेण तता भवति, कर्म्मकर्त्तरि कर्म्मवत् प्रत्ययः। तेनैवाधिष्ठिता सती पुरा 'पुरुषार्थं' भोग्यं सूयते प्रसूतवती(२) कर्म्म-कर्त्तरि पुरि लुङ्चास्म इति भूतेऽनद्यतने लट्।

गौरनादवती सा तु जनित्री भूतभाविनी।
असिता सित-रक्ता च सर्व्वकामदुघा विभोः ॥५॥

भोग्यवस्तु-जनकत्वेन मायां ध्यात्वा रूपयति, गौरिति। इयं 'गौः' दोग्ध्री। दोग्ध्री चेत् हम्भारवं(३) करोति न इत्याह, 'अनादवती' नादरहिता अचेतनत्वादुक्तमसमर्था ईश्वराधीने-त्यर्थः। यद्वा 'गौरी' शुक्ला सत्त्वप्रधाना सती नादवती वेद-प्रवर्त्तिका, पुंवद्भावः पूर्व्वस्य। "गौरः शुक्लेऽरुणेऽपि च" इति विश्वः। 'असिता' तामसी, सिता चासौ रक्ता च 'सितरक्ता'

(१) क, नारीमिवर्त्तुः सा तां। (२) ख, सूयते प्रसूतवती।
(३) क, हम्भारं, ख, हम्भारं।

सात्त्विकी राजसी चेत्यर्थः। 'विभोः' ईश्वरस्य 'सर्वकामदुघा' सर्वान् कामान् दोग्धि यथेष्ट-कार्य्यकरी। महानारायणीये श्वेताश्वतरे च अस्याश्छागीसाम्यमुक्तम्,—

"अजामेकां लोहित-शुक्ल-कृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" ॥

इति ।

पिबन्ति नाम-विषयमसङ्ख्याताः कुमारकाः।
एकस्तु पिबते देवं(१) स्वच्छन्देन वशानुगः ॥ ६ ॥

जीवानां बहुत्वं, भोक्तृत्वमीश्वरस्यैकत्वञ्चाह, पिबन्तीति। 'नाम' शब्दः 'विषयः' अर्थः, तयोः समाहारः नाम-विषयं 'पिबन्ति' भुञ्जते 'कुमारकाः' जीवाः, 'एकः' ईश्वरः 'पिबते' पाययतीत्यर्थः, तद्विधम्। "प्रयोजक-व्यापारः कर्त्रभिप्रायः क्रियाफलम्" इति कयटः। छान्दसत्वादकर्त्रभिप्रायेऽपि क्रियाफले आत्मनेपदम्। 'वशाः' स्वविधेयाः 'अनुगाः' परिवारा यस्य स वशानुगः।

ध्यान-क्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रथमं प्रभुः।
सर्वसाधारणीं दोग्ध्रीमिज्यमानां सुयज्वभिः ॥ ७॥

तर्हि किमस्य सर्वथा अभोक्तृत्वं? नेत्याह, ध्यान-क्रियाभ्यामिति। प्रथमं ध्यायति भगवानिदमिति, ततः पश्यति, सैव क्रिया,

(१) क, नित्यं। ख, देवः।

ताभ्यां स प्रथमं भुङ्क्ते तदुच्छिष्टमन्यो भुङ्क्ते, ध्यानावलोकनमेव तस्य भोजनं "न वै देवा अश्नन्ति, न पिबन्ति, एतदेवामृतं दृष्ट्वा तृप्यन्ति" इति श्रुतेः।

भुङ्क्ते इत्युक्तम्; कां भुङ्क्ते? तत्राह, सर्वेति। सर्वेषां 'साधारणीं' समभोग्याम् अव्याकृतरूपामित्यर्थः। "एकमस्य साधारणम्" इति श्रुतेः। दोग्ध्री तु स्वभक्षण-मपेक्षते, अन्यथा दोहासम्भवादत आह, इज्यमानामिति। 'सुयज्वभिः' साधुयाज्ञिकैः 'इज्यमानां' हव्य-कव्येन पूज्यमानाम्।

**पश्यन्त्यस्यां महात्मानं सुपर्णं पिप्पलाशनम्।**
**उदासीनं ध्रुवं(१) हंसं स्नातकाध्वर्य्यवो हवेत्(२) ॥ ८॥**

पश्यन्तीति। वृक्षस्थानीयमेकं देहं त्यक्त्वा देहान्तरं गच्छतीति सुपर्णोपमम्; सुपर्णं 'पिप्पलं' कर्म्मफलमश्नाति, तं पिप्पलाशनं, वस्तुवृत्त्या उदसीनं, स्नातकाध्वर्य्यवः 'हवेत्' होमात्(३) पश्यन्तीत्यन्वयः। वहेदिति पाठे, तानियं 'वहेत्' निर्व्वहेत् योग-क्षेमादिनेति व्याख्येयम्। हवे इति पाठे, हवन-कर्म्मणि। हयेदिति पाठे, तानियं वर्द्धयेत्। हये इति पाठे, 'हयः' अश्वः तदुपलक्षिते अश्वमेध-कर्म्मणि।

**शंसन्तमनुशंसन्ति बह्वृचाः शास्त्र-(४) कोविदाः।**
**रथन्तरे बृहत् साम्नि सप्तैवैते च गीयते ॥ ९ ॥**

---

(१) ख, भुवं। (२) ख, हयम्। (३) ख, हविर्वहोमात्। पुस्तकान्तरे हवेहोमात्। (४) क, शास्त्र।

आध्वर्य्यव-फलमुक्त्वा हौत्रफलमाह शंसन्तमिति । 'शस्त्र-कोविदाः' सपादबन्धो मन्त्रः ऋक्, तया केवलया स्तुतिः शस्त्रं,(१) गीयमानया तया स्तुतिः स्तोत्रम्, "ऋग्भिः शंसन्ति, यजुर्भिः शंसन्ति, सामभिः शंसन्ति" इति यास्कवचनात् । शस्त्रे 'कोविदाः' कुशलाः, फलं पूर्वोक्तमेवानुसन्धेयम् ।

सर्व्वत्र सामगानां व्यापारमाह, रथन्तरे इति । रथन्तरे गीयते बृहत्साम्नि गीयते सामगैर्दोग्ध्रीति शेषः । किं बहुना, सप्तैवैते च सामभेदा गीयन्ते इति विपरिणामः । रथन्तरं, बृहत्साम, वैरूप्यं, वैराजं, महानाम्नी, रेवती, वामदेव्यम्, इति सप्त सामानि । दोग्ध्री फलं पूर्वोक्तं ददातीति ज्ञेयम् ।

**मन्त्रोपनिषदं ब्रह्म पदक्रम-समन्वितम् ।**
**पठन्ते भार्गवा ह्येतदथर्व्वाणो भृगूत्तमाः ॥ १० ॥**

अथर्व्वणां व्यापारमाह, मन्त्रेति । मन्त्राश्च उपनिषदश्च मन्त्रोपनिषदम्, उपनिषदशब्दो ऽकारान्तो नपुंसकमस्ति । 'ब्रह्म' ब्राह्मणम्(२) ।

**ब्रह्मचारी च व्रात्यश्च स्कम्भोऽप्यपलितस्तथा ।**
**अनड्वान् रोहितोच्छिष्टः पठ्यते भृगुविस्तरे ॥ ११ ॥**
**कालः प्राणश्च भगवानात्मा पुरुष एव च ।**
**शिवो भवश्च रुद्रश्च ईश्वरः पुरुषस्तथा(३) ॥ १२ ॥**

(१) क. शास्त्रं । (२) ख, ब्राह्मणा ।
(३) ग. शर्व्वो भवश्च रुद्रश्च स्थाणश्च पुरुषस्तथा ॥ १२ ॥

प्रजापतिर्विराट् चैव पार्थिवः सलिलमेव च(१)।
स्तूयते मन्त्रसंयुक्तैरथर्व्व-विहितैर्विभुः ॥ १३ ॥
तं षड्विंशकमित्येके सप्तविंशमथापरे।
पुरुषं निर्गुणं साङ्ख्यमथर्व्वाणः शिरो विदुः ॥१४॥

भार्गव-ग्रन्थानां विषयमाह, ब्रह्मचारीत्यादि-सार्द्धद्वाभ्याम्। तद्दैवतनिरूपणेन भगवतो निरूपणमित्याशङ्क्याह, स्तूयते इति। 'अथर्व्वविहितैः' अथर्व्वप्रतिपाद्यैरर्थैः। 'विभुः' ईश्वरः परमात्मा, षड्विंशकं पौराणिकाः, सप्तविंशं तद्भेदा एव.

"मात्रा भूतानीन्द्रियाणि मनो बुद्धिरहङ्कृतिः।
महान् प्रधानं तत्त्वानि षड्विंशः परमेश्वरः" ॥ इति।

चित्तेन(२) साहित्ये सप्तविंश इति सङ्ख्यायते। अथेति। 'सङ्ख्या' ज्ञानं, तत्सम्बन्धी साङ्ख्यः, तं ज्ञानगम्यमित्यर्थः।

चतुर्विंशति-सङ्ख्याकमव्यक्तं व्यक्त-दर्शनम्।
अद्वैतं द्वैतमित्येतत्त्रिधा तं पञ्चधा तथा ॥ १५ ॥

चतुर्विंशति-सङ्ख्याकमिति। कपिलाः चतुर्विंशति-सङ्ख्याकमस्तुवन्, तदुपरितनं पञ्चविंशकमित्यर्थः। तदुक्तम्,—

"मूल-प्रकृतिरविकृतिर्महदाद्याः प्रकृति-विकृतयः सप्त।
षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" ॥ इति।

स्वयम् 'अव्यक्तम्' अप्रत्यक्षं 'व्यक्तदर्शनं' व्यक्तस्य जगतो

(१) क. सलिल एव च। (२) ख. चितेन।

भासकम्, अद्वैतं वेदान्तिनः, द्वैतं काणादयः, त्रिधा गुणभेदेन, पञ्चधा तु भूतभेदेन, "स एकधा भवति, त्रिधा भवति, पञ्चधा भवति, सप्तधा, नवधा, पुनश्चैकादश(१) इति श्रुत्यन्तरात्।

ब्रह्माद्यं स्थावरान्तञ्च पश्यन्तो ज्ञानचक्षुषः।
तमेकमेव पश्यन्ति परिशुद्धं विभुं द्विजाः॥ १६॥
यस्मिन् सर्व्वमिदं प्रोतं ब्रह्म स्थावर-जङ्गमम्।
तस्मिन्नेव लयं यान्ति बुद्बुदाः सागरे यथा॥ १७॥
यस्मिन् भावाः प्रलीयन्ते लीनाश्चा व्यक्ततां ययुः।
नश्यन्ते व्यक्ततां भूयो जायन्ते बुद्बुदा इव॥ १८॥

'द्विजाः' त्रैवर्णिका वेदविदः। ब्रह्मेति ब्रह्मकार्य्यं स्थावरादि तस्मिन् प्रोतं तमेकं ब्रह्मैव पश्यन्तीत्यन्वयः। लयं यान्ति सर्व्वे भावाः 'लीनास्याः' लीनम् आस्यं मुखं द्वारमविद्यालक्षणं येषां ते तथोक्ताः। यस्मिन् प्रोताः सन्तो व्यक्ततां(२) 'ययुः' गताः पुनर्नश्यन्ते नश्यन्ति(३) भूयश्च व्यक्ततां 'जायन्ते' जनयन्ति अन्तर्भावितण्यन्तत्वात् सकर्म्मकः, गच्छन्ति वा। द्विः कथनं सृष्टि-प्रलययोरभ्यास-ज्ञापनार्थम्।

क्षेत्रज्ञाधिष्ठितञ्चैव कारणैर्व्यञ्जयेद्बुधः।
एवं सहस्रशो देवं पर्य्यस्यन्तं पुनः पुनः॥ १९॥

---

(१) ख, पुनश्चैकादश स्मृतः। (२) क, सन्तो ऽव्यक्ततताम्। (३) ख, पुनर्न पश्यन्ते न पश्यन्ति।

य एवं श्रावयेच्छ्राद्धे ब्राह्मणो नियतव्रतः।

अक्षय्यमन्नपानञ्च पितृणाञ्चोपतिष्ठते ॥ २० ॥

क्षेत्रज्ञेन अधिष्ठितं शरीरं, 'कारणैः' अनुमिति-कारणैः हेतुभिः विमतत्वेनाधिष्ठितं(१) क्रियावत्त्वाद्रथादिवदित्यादिभिः 'व्यञ्जयेत्' लक्षयेत्, 'बुधः' पण्डितः। एवं सहस्रशः पर्य्यस्यन्तं तं 'देवं' पुनः पुनर्जन्म-मरणादि-प्रबन्धमापद्यमानं जीवम् उक्त-योगेन उद्धरेदिति शेषः। वैराग्यार्थमिदमभिहितं लक्षयेत् चेष्टादिना सर्व्वशरीरेष्वनुमायादित्यर्थः।

ब्रह्म ब्रह्मविधानन्तु ये विदुर्ब्राह्मणादयः।

ते लयं यान्ति तत्रैव लीनास्या(२) ब्रह्मशायिने।

लीनास्या ब्रह्मशायिने ॥ २१ ॥

इत्यथर्ववेदे चूलिकोपनिषत् समाप्ता ॥ १४ ॥

'ब्रह्म' कूटस्थं 'ब्रह्मविधानं' तज्ज्ञानोपायम्; लीनम् 'आस्यम्' मुखं प्रवृत्तिद्वारं रागादि येषां ते तथोक्ताः। किमर्थं

---

(१) क, विमतत्त्वेन नाधिष्ठितं।

(२) लीनास्याः इत्यत्र लीना स्यात् इति पाठः सर्व्वत्र। किन्तु दीपिकाकारेण लीनास्या इति पाठो व्याख्यातः, अर्थसङ्गतश्च; अतः स एव मूले निवेशितः।

नीलास्याः ? 'ब्रह्मध्यायिने' ब्रह्मणि ध्येति तच्छीलो ब्रह्मध्यायी, भावप्रधानो निर्देशः, ब्रह्मध्यायिन्, ब्रह्मणि ध्ययनं कर्त्तुम् एकीभवितुमित्यर्थः । द्विरुक्तिः समाप्त्यर्था ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद-वाक्यानां दीपिका चूलिकाभिधे ॥

इति चूलिकोपनिषदो दीपिका सम्पूर्णा ॥ १४ ॥

---

# अथर्व्वशिखोपनिषत् ।



**ओँ पिप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्व्वाणं भगवन्तं पप्रच्छ ।**

एषाथर्वशिखा नाम शिर ऊर्द्धं शिखोचिता ।
द्विखण्डा सप्तमी मुण्डात् प्रणवार्थ-निरूपिणी ॥ १ ॥

सर्व्वार्थसिद्धिदं शिवमाराध्य विधूत-विघ्नव्रातो भगवन्महेश्वर-पूजनेन विधूताखिल-कल्मषो(१) देशिकः सुरिकोक्त-मार्गेण साधित-यमादि-प्रत्याहारान्तं योगाङ्गधारणा-पूर्वकं ध्यानपथमारुरुक्षुः सवीजयोगे मन्त्रस्याङ्गत्वात् सर्वमन्त्र-शिरोमणिं प्रणवमवयवशः स्वरूपतश्च निर्णीय(२) ध्याने विनियोक्तुं पुनः प्रकृतं तमेवानुसन्धत्ते, पिप्पलाद इति । अत्र प्रष्टॄणां त्रित्वम् एभ्य इत्यग्रेऽनुवादादवसीयते । आख्यायिका तु विद्या स्तुत्यर्था ।

**किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं? किं तद्ध्यानं? को वा ध्याता,? कश्चिद्ध्येयः? इति ।**

प्रश्नानाह, किमादावित्यादि । 'आदौ' सर्वमन्त्रादौ सर्ववेदादौ मुख्यत्वेन च प्रयुक्तं, ध्यायते यत्तदिति व्युत्पत्त्या 'ध्यानं'

(१) ख, किल्बिषो । (२) ख, निश्चाय ।

ध्येयं 'ध्यायितव्यं' ध्यानाईञ्च किमित्यर्थः। अत्र छान्दस-चिद्वत्(१) इट्। प्रथमप्रयुक्तो ध्येयस्य मन्त्रः क इति प्रथम-प्रश्नार्थः। किं तद्ध्यानमिति। 'तस्य' ध्यातव्यस्य मन्त्रस्य किं ध्यानमिति द्वितीयः प्रश्नः। को वा 'ध्याता' अधिकारी इति तृतीयः। कश्च 'ध्येयः ईशः इति चतुर्थः। 'चित्' इति वितर्के, को देवो ध्येयः? इति विचार्य्य वक्तव्यमित्यर्थः। इति शब्दः प्रश्नसमाप्तौ।

**अथैभ्यो(२)ऽथर्व्वा प्रत्युवाच, ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यम्।**

आद्यस्योत्तरमाह, ओमित्येतदक्षरमिति। सर्वस्य वक्तव्यस्य मन्त्र-ब्राह्मणादेर्देवता-ध्यानस्य च 'आदौ' प्रथमं प्रयुक्तम् 'आदौ' ईश्वरे वाचकत्वेन(२) प्रतिनिधित्वेन वा प्रयुक्तमित्यर्थः।

**ओमित्येतदक्षरस्य पादाश्चत्वारो देवाश्चत्वारो वेदा-श्चत्वारः।**

द्वितीयस्योत्तरमोमित्येतदक्षरस्येति। पाद-देव-वेदाश्चतुः-सङ्ख्यकाः, यथासङ्ख्यकं ध्येया इत्यर्थः। 'देवाः' उभयेऽपि अधि-ष्ठातारो गणदेवताश्च देव-शब्देन गृहीताः, पृथिव्यादयो लोकाः, गायत्र्यादीनि छन्दांसि च रूपाणि त्रिष्वेव सन्ति, न चतुर्थ इति

(१) ख, छान्दसमपि तवत्। (२) ग, अथैतेभ्यो।

(२) क, बाधकत्वेन। ख, अथावाचकत्वेन।

पादादि पङ्क्तौ(१) नोक्तानि ; अन्यथात्रोक्ताः(२), 'पादाश्चत्वारः' अकारादयः।

**चतुष्पादेतदक्षरं परं ब्रह्म, पूर्वास्य मात्रा पृथिव्यकारः, स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः। द्वितीयान्तरिक्षमुकारः, स यजुर्भिर्यजुर्वेदो विष्णू रुद्रा-(३) स्त्रिष्टुप् दक्षिणाग्निः। तृतीया द्यौर्मकारः स सामभिः सामवेदो विष्णुरादित्या जगत्याऽवनीयः। यावसानेऽस्य चतुर्थ्यर्द्धमात्रा, सा लुप्तमकारः, सोऽथर्वणैर्मन्त्रै-रथर्ववेदः संवर्त्तकोऽग्निर्मरुतो विराडेकऋषिः।**

पादादीन् वक्तुं पुनश्चतुष्पात्त्व प्रतिजानीते, चतुष्पादेतदक्षरं परं ब्रह्मेति। ऋग्भिरुपलक्षितत्वादृग्वेदः। ब्रह्मादयोऽधिष्ठातारः, वस्वादयो गणदेवताः, लुप्तमकारः मकारस्य त्रिरतत्वात्। सः अथर्वणैर्मन्त्रैरुपलक्षितो ऽथर्ववेदः, 'संवर्त्तकोऽग्निः' ब्रह्मादि-स्थानीयोऽधिष्ठाता, 'मरुतः' एकोनपञ्चाशत्सङ्ख्यका गणदेवताः। अत्र विराडित्ययं पाठः। चतुष्कपाठेऽपठितत्वात्, अन्यथा पादाश्चत्वार इत्यत्र छन्दांसि चत्वारीति च पठेत्, वर्णावसानत्वा-च्चार्द्धमात्रा तुर्य्या, अत्र वर्ण-धर्म्म-च्छन्दसोऽसम्भवात्। नारसिंहे तु विराडित्यपि पठितं, तत्र औपचारिकं छन्दस्त्वं बोध्यम्। एकऋषिर्नामाग्निः।

---

(१) ख, पादादि पञ्चपङ्क्तौ। (२) ख, चाग्रयः शिरश्चात्रोक्ताः।

(३) ख, ग, रुद्रः रुद्रा। घ, विष्णुरुद्रा।

रुचिरा भास्वती स्वभा,

मूर्ध्न्यवस्थितायास्तु मात्राया ध्यानमाह, रुचिरेति। 'रुचिरा' रम्या 'भास्वती' दीप्तिमती 'स्वभा' अन्यनिरपेक्ष-प्रकाशा।

**प्रथमा रक्ता ब्राह्मी ब्रह्मदेवत्या। द्वितीया शुभा रौद्री रुद्रदेवत्या। तृतीया कृष्णा विष्णुमती विष्णुदेवत्या। चतुर्थी विद्युन्मती सर्ववर्णा पुरुषदेवत्या। स एष ह्योङ्कार-श्चतुष्पादश्चतुःशिराः।**

इदानीं मात्राणां वर्णानाह, प्रथमेति। रक्ता वर्णेन सृष्टि-हेतुत्वेन राजसत्वात्, 'ब्राह्मी' ब्रह्मवती, अग्रे विष्णुमतीत्युक्त-त्वात्। ब्रह्मा देवतापि तटस्थो भविष्यति, न सम्बद्ध इति शङ्कानिरासाय ब्राह्मीत्युक्तम्। 'शुभा' शुक्ला चन्द्रसन्निभा 'रौद्री' नित्य-सन्निहितरुद्रा, 'पुरुषः' ईश्वरः।

यद्यपि ब्रह्मविद्योपनिषदि अकारादीनां क्रमेण ब्रह्म-विष्णु-रुद्रा देवता उक्ताः, तथा तृतीया मात्रा "मकारश्चाग्नि-सङ्काशो विधूमो विद्युतोपमः" इत्युक्तम्; अत्र तु ब्रह्म-रुद्र-विष्णवो देवता उक्ताः, तथा तृतीया मात्रा च कृष्णा उक्ता इति विरोधः। तथा अथर्वशिरसि "या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन" इति देवता-वर्णविपर्यास उक्तः, तथापि वस्तुतो ब्रह्मा-दीनां त्रयाणामेकरूपत्वादुपासनाङ्गत्वेन फलभेदाय तत्तद्रूपोपा-दानम्। एतेन वर्णभेदोऽपि परिहृतः, ध्यानभेदेन फलभेदात्; अतएव कालाग्निरुद्रोपनिषदि महेश्वर-सदाशिव-शिवाः शिवं

प्रति प्रणव-वर्णत्रये देवा उक्ताः; आगमेषु क्वचित् सात्त्विकादि-भेदेन एकस्या एव देवतायास्त्रिधा ध्यानमुक्तम् वास्तव-स्थितिन्त्वग्रेैव वक्ष्यति,—

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च।

पञ्चधा पञ्चदैवत्यः प्रणवः परिपठ्यते" इति।

कल्पभेदेन वा ब्रह्मादीनामुत्पत्तिक्रमे भेदः। चत्वारः 'पादाः' अकारोकार-मकारार्द्धमात्राः विश्व-तैजस-प्राज्ञ-तुरीयलक्षणाः यस्य, स चतुष्पादः, चत्वारि 'शिरांसि' उत्तमाङ्गानि मुखस्थानी-यानि अग्नयो यस्य, स चतुःशिराः। अकारादीनां पादत्वं प्राथम्यात्, सर्वधर्माश्रयत्वाच्च; अग्नीनां(१) मुखत्वं "मुखादग्नि-रजायत" इति श्रुतेः अग्नेः सर्वदेव-मुखत्वादन्यनिर्द्दिष्टत्वाच्च द्रष्टव्यम्।

**चतुर्थार्द्धमात्रा स्थूल-ह्रस्व-दीर्घ-प्लुतः(२)॥**

स्थूलं रूपं त्रिधा विभक्तं, सूक्ष्मं पृथक् करोति, चतुर्थीति। 'चतुर्थार्द्धमात्रा' नादसञ्ज्ञा लुप्तमकारः। स्थूले विभागमाह, स्थूलेति। यः 'स्थूलः' वर्णकूटरूपः प्रणवः, स ह्रस्व-दीर्घ-प्लुतः, उद्देश्य-विधेययोरपि विशेषण-विशेष्यत्वमात्र-विवक्षया समासः।

**ओमोमोमिति त्रिरुक्तश्चतुर्थः शान्तात्मा प्लुतप्रयोगे नसममित्यात्मज्योतिः सकृदावर्त्तव्यः।**

---

(१) क, अग्न्यादीनां। (२) क, ख, प्लुता।

ऋस्वादीनां स्वरूपमभिनीय दर्शयति, ओमोमोमिति। प्रथमः एकमात्रः, द्वितीयो द्विमात्रः, तृतीयस्त्रिमात्र इत्यर्थः ।

नन्वेवं ऋस्वो नास्तीति कथं ऋस्व ओङ्कारः? नैष दोषः, पार्श्वदश्रुतिरियम्, यथा तत्रभवतां नारायणीयानां सुजात एव अश्व सूनृत अध्वर्यो ओम् अद्भिः सुतमिति व्याकरणात् सिद्धे प्रयोगे तस्य ऋस्वत्वं नास्तीत्यर्थः(१) इति विरक्त इत्यभिनीय तस्योपसंहारः ।

चतुर्थः पादः क्व वर्त्तते? अत आह, प्लुतप्रयोगे इति। वर्त्तते इति शेषः, तत्रैवाभिव्यक्तत्वात्; 'नसमम्' अनुपमं रूपम्, 'इति' हेतोः आत्मज्योतिस्तत्। विरम्यमाण-घण्टानादाद्युपमापि न भवति, ततोऽप्यतिसूक्ष्मत्वात्। 'सकृदावर्त्तव्यः' सकृदावर्त्तयितव्यः अनाहत-शब्दरूप इत्यर्थः। यदा सकृद्विभागः(२) तदापि कुतो भवतीति चेत्? श्रूयतां, निर्विशेषत्वात् पूर्वापरविभागे भेदकाभावात्, तथा निर्विशेषत्वात् पूर्वापरावृत्तौ भेदकाभावात् सकृदावर्त्तव्यः शब्दब्रह्मसञ्ज्ञः ।

**स एष सर्व्वान् प्राणान् सकृदुच्चारितमात्रः, स एष ह्यूर्द्ध्व-मुत्क्रामयतीत्योङ्कारः । १ ॥**

स एष इति। वर्णित-प्रणवस्योपसंहारः। ओङ्कार-शब्दस्य प्रवृत्ति-निमित्तमाह, सर्व्वान् प्राणानिति। 'प्राणाः' दशवायवः;

(१) ख, सुजात एव अश्व सूनृत अर्धो वो वों अद्भिः सुतमिति व्याकरणसिद्धे प्रयोगे ऋस्वो नास्तीति तस्यार्थः ।

(२) क, सकृद्विभातः ।

तान् समनस्कान् साग्नीन्(१) षट्‌चक्र-भेदनेन सुषुम्णाद्वारेण मूर्द्धानमानयतीत्यर्थः। पुनः स एष इत्यनुवाद आदरार्थः। अनेकार्थत्वान्निपातानाम्। ओमित्यूर्द्धभावे ऊर्द्धान् प्राणान् कारयति उच्चारयितुरित्योङ्कार इति योगिभिरवश्यं ध्येय इति भावः।

**प्रणवः सर्व्वान् प्राणान् प्रणामयति नामयति वै; तस्मात् प्रणवश्चतुर्द्धावस्थितः(२) इति वेद-देवयोनिः, धेयाश्चेति सन्धर्त्ता सर्व्वेभ्यो दुःख-भयेभ्यः सन्तारयति।**

तस्य नामान्तरमाह, प्रणव इति। प्रणवशब्द-निमित्तमाह, सर्व्वानिति। 'प्रणामः' नम्रतापादनं, नामनं न्यग्भावापादनम्। चतुर्धा यतोऽवस्थितः, ततश्चतुर्णां वेदानां देवानाञ्च योनिः; अनेन क्रमेण पूर्वत्रापि वेदाश्चत्वारो देवाश्चत्वार इति पाठेन भवितव्यम्। साम्प्रदायिकैर्निश्चयो विधेयः।

किं तद्ध्यानमिति यत् पृष्टं, तदुत्तरं निगमयति, धेयाश्चेति। धा धातो रूपं, धातव्याः धारणीयाः पादादयो बुद्ध्या न त्यक्तव्याः ध्यातव्या इत्यर्थः। धारणस्य फलमाह, सन्धर्त्तेति। 'सन्धर्त्ता' एष हि पादादीनां धारयिता तारयति आश्रितान्, स्वस्य किं वक्तव्यम्।

**तारणात्तानि सर्व्वाणीति विष्णुः सर्व्वान् जयति, ब्रह्माबृहत् सर्व्वकारणानि सम्प्रतिष्ठाप्य ध्यानात्।**

(१) ख, तत्समनमस्कारसाग्नीन्। (२) घ, चतुर्थावस्थितः।

को ध्याता? इति प्रश्नं ध्यातृ-ब्रह्म-विष्णु-निर्द्देशेनोत्तरयति, तारणात्तानीति। 'तारणेन' आश्रितानां दुःखभयापनयनेन 'घस्तानि', अद्भक्षणे निष्ठा, छान्दसो जग्धरभावः, ग्रस्तानि अभिभूतानि दुःखभयानि सर्व्वाणि 'इति' हेतोः विष्णुः सर्व्वान् 'जयति' अभिभवति दैत्यादीन्। अथवा 'तारणात्' तारकत्वाद्धेतोः 'तानि' पादादीनि सर्व्वाणीति पूर्व्वोक्तप्रकारेण विष्णुर्ध्यातवानिति शेषः।

ध्यानफलमाह, सर्व्वान् जयतीति। अथ ब्रह्मापि 'अबृहत्' बृहत्त्वं गतवान्, कस्मात्? 'सर्व्वकारणानि' सर्व्वेन्द्रियाणि 'सम्प्रतिष्ठाप्य' स्थिरीकृत्य ध्यानात्, विष्णु-ब्रह्मणोर्ध्यानकथनेन तत्फलार्थी ध्यातेत्युक्तं भवति।

**विष्णुर्मनसि नादान्ते परमात्मनि स्थाप्य ध्येयमीशानं प्रध्यायन्तीशा वा सर्व्वमिदं प्रयुक्तम्।**

कश्चिद्ध्येयः? इति चतुर्थमुत्तरयति, विष्णुर्मनसीति। नादान्ते अक्तिद्वारा शान्ते(१) ब्रह्मणि, प्रणवो हि पञ्चकूटात्मकः अकारोकार-मकार-विन्दु-नादात्मकः, तत्र नादान्ते परमात्मस्थाने 'स्थाप्य' आरोप्य 'ध्येयं' ध्यानोचितम् ईशानं मनसि विष्णुः 'प्रध्यायन्ति' प्रध्यायतीत्यर्थः। वचन-व्यत्ययोऽन्येषामपि ईशस्य ध्येयत्वसूचनार्थः।

ननु अन्यान् देवानपहाय ईशान एव किमिति ध्येयः? अत आह, ईशा वेति। वा शब्द एवार्थः, ईशैव सर्व्वमिदं प्रयुक्तं नान्येन।

(१) ख, शान्तौ।

**ब्रह्म-विष्णु-रुद्रेन्द्राः सम्प्रसूयन्ते, सर्वाणि चेन्द्रियाणि सहभूतानि, कारणं सर्वमैश्वर्यं सम्पन्नं शिवमाकाशं मध्ये ध्रुवस्थम् ।**

ननु भवतु सर्वं प्रयुक्तं, ननु ब्रह्मादय इत्यत आह, ब्रह्मेति । 'इन्द्रः' मघवा, एते चत्वारः ईशा 'सम्प्रसूयन्ते' जन्यन्ते, 'सह-भूतानि' भूतसहितानि इन्द्रियाणि ईशा सम्प्रसूयन्ते ।

पुनः किं किमीशा प्रयुक्तम्? अत आह, कारणमिति । 'कारणं' साधकतमम् उपायभूतं, साधकतमं सर्वमेव ईशा प्रयुक्त-मित्यर्थः, स हि प्रथममुपायबोधकः, 'ऐश्वर्य्यं' प्रभुशक्तिः सम्पन्नम् । कार्य्यमात्र-निदर्शनाय सर्वकार्य्य-मूर्द्धन्यमाकाशमाह, शिवमिति । 'शिवं' निर्म्मलं 'मध्ये' सर्वस्यान्तः 'ध्रुवम्' एकरूपेण तिष्ठति । मध्ये ध्रुवस्थम् आकाशम् ईशा प्रयुक्तं, तच्च वाय्वादीनामुप-लक्षणं यद्वा सम्पन्नादि(१) चतुष्टयं शिवस्य विशेषणं जन्यत्व-शङ्कानिवृत्तये ।

**ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च ।**
**पञ्चधा पञ्चदैवत्यः प्रणवः परिपद्यते ॥**

नादान्त-ग्रहणेन सूचितां प्रणवस्य पञ्चकूटतामाह, ब्रह्मेति । 'पञ्चधा' अकारादिरूपेण ।

**तत्राधिकं क्षणमेकमास्थाय क्रतुशतस्यापि फल-**

(१) ख, पञ्चक्ति सम्पन्नादि ।

मवाप्नोति, कृत्स्नमोङ्कारगतञ्च सर्वज्ञान-(१) योग-ध्यानानां शिव एक एव ध्येयः, शिव ओङ्कारः,(२) सर्वमन्यत् परित्यज्य एतामधीत्य(३) द्विजो गर्भवासान्मुच्यते, गर्भवासान्मुच्यते। २ ॥

इत्यथर्वशिखोपनिषत् समाप्ता। १५ ॥

पञ्चात्मकस्य ज्ञाने फलमाह, तत्रेति। मत्राधिक्ये(४) फलाधिक्यमिति न्यायात्। कृत्स्नमोङ्कारगतञ्चेति। 'कृत्स्नम्' ओङ्कार-पादादि कर्म्म ओङ्कारगतञ्च ध्यात्वा क्रतुशतस्यापि फलमवाप्नोतीत्यनुषज्यते।

परमोपदेशमाह, सर्वमन्यत् परित्यज्येति। प्राक्तनेन सम्बध्यते। ईश एव परमो ध्येय इति चतुर्थमुत्तरमुपसंहरन् तदध्ययनफलमाह(५) एतामिति। 'एताम्' उपनिषदम् अथर्वशिखा-सञ्ज्ञाम्। द्विज इति शूद्रनिरासः। द्विरुक्तिः समाप्त्यर्था, इति शब्दश्च।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानां दीपिकाथर्व-शिखिके ॥

इत्यथर्वशिखोपनिषदो दीपिका सम्पूर्णा ॥ १५ ॥

---

(१) क, घ, सर्व्वज्ञानेन। (२) ख, ग, शिवङ्करः।
(३) क, ख, ङ, अधिकृत्य। (४) क, फलाधिक्ये। ख, यत्राधिक्ये।
(५) ख, मुपसंहृतम्, अध्ययन फलमाह,।

# ब्रह्मोपनिषत्।

ओं शौनको ह वै महाशालोऽङ्गिरसं भगवन्तं पिप्पलादं पप्रच्छ।

ब्रह्मोपनिषदारभ्या ब्रह्मज्ञान-प्रदायिनी।
चतुःखण्डा तु दशमी शमिनां हृदयङ्गमा ॥ १ ॥

इदानीं चतुरवस्थस्य चतुःस्थानस्य दस्यात्मनो(?) निर्गुण-ध्यानसिद्धये स्वस्वरूपं सर्वं वक्तव्यमिति ब्रह्मोपनिषदारभ्यते, ओं शौनक इति। "ओम् अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति, नाभि हृदयं कण्ठं मूर्द्धेति"। तत्र चतुष्पादं(१) ब्रह्म विभातीति ग्रन्थो द्वितीयखण्डादौ पठितः, प्रथमखण्डादावपि केचित् पठन्ति, स पाठो नातिप्रयोजनः, अर्थसम्बन्धाभावात्। महाशालः' महत्यः शाला गृहा यस्य स तथा, 'अङ्गिरस' गोत्रतः अपत्यापत्यम् अवान्तरभेदोपचारात्, पिप्पलादं नामतः 'पप्रच्छ' पृष्टवान्।

दिव्ये ब्रह्मपुरे रम्ये सम्प्रतिष्ठिता-(२) भवन्ति कथं?

---

(१) क, चतुष्पादं। (२) क, सम्प्रतिष्ठा-।

सृजन्ति ? कस्यैष महिमा बभूव ? यो ह्येष महिमा बभूव, क एषः ? ।

प्रश्नानाह, दिव्य इति । 'दिव्ये' वागादिदेव-निवासार्हे ब्रह्मोपलब्धिस्थाने 'ब्रह्मपुरे' शरीरे सम्प्रतिष्ठिता भवन्ति वागादयः कथम् ? इति शेषः । किमाधारा वागादयः शरीरे प्रतिष्ठिताः ? इति प्रथमः प्रश्नः । सृजन्तीत्यत्रापि कथमिति सम्बध्यते, किं बलेन स्वस्वविषयेषु व्याप्रियन्ते ? इत्यर्थः; एष द्वितीयः प्रश्नः । कस्यैष महिमा ? बृहदादि-विस्तारो जात इति तृतीयः । यो हि एक एष प्रत्यक्षो महिमा बभूव, क एष किन्तत्त्वकः ? महिम-तत्त्व-प्रश्नद्वारा महत एव तत्त्वं पृष्टं वेदितव्यमिति चतुर्थः ।

तस्मै स होवाच ब्रह्म-विद्यां वरिष्ठां, प्राणो ह्येष आत्मा, आत्मनो महिमा बभूव ।

उत्तरमाह, तस्मै इति । 'सः' पिप्पलादः 'ह' प्रसिद्धौ 'उवाच' परितो विचार्य्य बभाषे ब्रह्म-विद्यां, सर्वैरपि प्रश्नैर्ब्रह्मण एव पृष्टत्वात् ब्रह्मविद्येयम्, 'वरिष्ठाम्' अतिशयवतीं; प्राणो-ह्येष इति । किं भौतिकः ? नेत्याह, आत्मेति । यस्मिन् देवाः प्रतिष्ठिताः, यद्बलेन च सृजन्ति, यस्यैष महिमा, यच्च महिम्नस्तत्त्वं, स एष आत्मेत्यर्थः; सामान्येनेदं चतुर्णामप्युत्तरम्, आत्मनः प्राणत्वं प्राणाश्रयत्वात्, अतएव तथा प्राण इति भगवत् सूत्रम् । विशेषेण तृतीयस्योत्तरमाह, आत्मन इति ।

**देवानामायुः, स देवानां निधनमनिधनम्।**

प्रथमस्य विशेषत उत्तरमाह, देवानामिति। 'देवानां' वागादीनाम् 'आयुः' जीवितम्, आत्मा को ह्येवान्यत् कः प्राण्यद्येष आत्मा आनन्दो न स्यात्' इति श्रुतेः।

आत्मसत्तयैव तेषां सत्तालाभात्, तदेव विवृन्वन्नाह, स इति। 'निधनं' मरणम्, 'अनिधनं' जीवनम्।

**दिव्ये ब्रह्मपुरे, विरजं निष्कलं शुभ्रमक्षरं यद्ब्रह्म विभाति, स नियच्छति।**

स क्वास्तीत्याशङ्क्याह, दिव्ये ब्रह्मपुरे इति। चतुर्थमुत्तरयति, विरजमित्यादि। यत् 'ब्रह्म' परमात्मा 'विभाति' प्रकाशते तत् 'विरजं' निरवद्य तत्त्वं, 'निष्कलं' कलाविद्याकार्य्यं प्राणादि, तद्रहितम्। निषेधमुखेनोक्त्वा विधिमुखेनाप्याह, शुभ्रमिति, 'शुभ्रम्' उज्ज्वलं प्रकाशात्मकम् 'अक्षरम्' अश्नुते व्याप्नोति, अश्नोतेर्वासरोऽक्षरमिति स्मृतेः।

कथं सृजन्तीत्यस्य द्वितीयस्योत्तरं, स इति। 'नियच्छति' नियमनं करोति। नियमनं बृहदारण्यके अन्तर्य्यामिब्राह्मणे, "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः,(१) यः पृथिवीं यमयति, यं पृथिवी न वेद, एष त आत्मा अन्तर्य्याम्यमृत" इत्यादि चतुर्विंशतिभिः पर्य्यायैर्व्याख्यातम्।

**मधुकर-राजानं माक्षीकवत्। यथा माक्षीकैकेन तन्तुना**

(१) क, पृथिव्यामन्तरः।

**जालं विक्षिपति, तेनापकर्षति। तथैवैष प्राणः यदा याति संहृष्टमाकृष्य।**

तत्र प्रत्येकं पृथिव्यादीनां नियन्तृत्वमुक्तं; अत्र तु एकधा इत्याह, मधुकर-राजानमिति। 'मधुकराः' इन्द्रियाणि तेषां 'राजानं' तदभिमानिनं जीवं नियच्छति तेन सर्वाणि नियतानि इत्युक्तं भवति। समासान्तविधेरनित्यत्वादच् न कृतः। एकस्य सङ्घनियन्तृत्वे दृष्टान्तमाह, माचीकवदिति। मक्षिकाभिर्जीवति 'माचीकः' ऊर्णनाभो लूताख्य-कीटविशेषः, तद्वत्। तद्विवृणोति, 'यथेति। यथा माचीका, छान्दसमीकारस्य दीर्घत्वं, टाप् च; लूता एकेन 'तन्तुना' लालारूपेण द्वारेण 'जालं' स्वकुलायं 'विक्षिपति' स्वशरीरात् वहिः करोति, 'तेनैव' एकेन तन्तुना 'अपकर्षति' तत्स्थानादन्तर्नयति। वक्ष्यति,—

"ऊर्णनाभिर्यथा तन्तून् सृजते संहरत्यपि।
जाग्रत् स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः"॥ इति।

लूतास्थानीय आत्मा, तन्तुस्थानीयः प्राणः, जालस्थानीयं वागादि। यथायं दृष्टान्तः, तथैवैष प्राणो यदा 'याति' गच्छति, तदा संसृष्टमाकृष्य गच्छति, वागादि-सङ्घातं गृहीत्वैव याति; यथोक्तम्,-"यथा सुहयः पड्वीश शङ्कून् सङ्खिदेत्, एवमितरान् प्राणान् समखिददिति"।

**प्राणदेवतास्ताः सर्वा नाड्यः सुस्वपे श्येनाकाशवत्, यथा खं श्येनमाश्रित्य याति स्वमालयमेवं सुषुप्तः।**

ननु वागाद्याकर्षणे प्राणस्य तैः कः सम्बन्धः? इति प्रश्ने, नाड़ीद्वारक इत्युत्तरिते, नाड़ीभिः प्राणस्य कः सम्बन्धः? इति शङ्का स्यात्, तामपनेतुमाह, प्राणेति। प्राणो देवता यासां ताः प्राणदेवताः 'ताः' पूर्वोक्ताः सर्वाः 'नाड्यः' सुषुम्णादयः। यातीत्युक्तम्, तत् कदा? इत्यपेक्षायामाह, सुस्वपे इति। सुतरां स्वपनं 'सुस्वपः' सुषुप्तिः, तत्र सुषुप्तिकाले यातीत्यर्थः। एतत् मरण-मूर्च्छादेरप्युपलक्षणम्। क्व यातीति प्रश्ने स्वालयं याती-त्युत्तरम्; तत्र दृष्टान्तः, श्येनाकाशवदिति। विवरणं यथेति। श्येनो यथा 'खम्' आकाशमाश्रित्य स्वालयं याति, तथा सुषुप्तः 'स्वालयं' ब्रह्म याति।

**ब्रूते, यथैवैष देवदत्तो यष्ट्यादिना ताड्यमानो न यति, एवमिष्टापूर्त्तैः(१) शुभाशुभैर्न लिप्यते।**

कथं ज्ञायते स्वालयं ब्रह्म याति, न यत्र कुत्रचित्? इति पृष्टे उत्तरमाह, ब्रूते इति। उत्थितः सन् सुखमहमस्वाप्समिति लोकान् वदति; तेन आनन्दं स्वालयं गतः, आनन्दाच्चागत इति ज्ञायते, आनन्दश्च ब्रह्म।

ननु शुभाशुभेषु कर्मसु सत्सु कथमानन्दानुभवः सुषुप्तेऽपि स्यात्? इत्याशङ्क्य शुभाशुभाभावं प्रतिपादयितुं दृष्टान्तमाह, यथै-वैष इति। यथैव एष देवदत्तः 'यष्ट्यादिना' काष्ठेनापि ताड्य-मानो 'न यति' न याति, छान्दसो ह्रस्वः, न गच्छति न पलायते,

---

(१) क, मिष्टापूर्त्तैः।

सुषुप्ते तत् कस्य हेतोः? इतरानुभवाभावादित्येव तदपि, कुतः? कारणाधर्म्माभावादेव(१)। एवमनेन निदर्शनेन 'इष्टापूर्त्तैः' इष्टापूर्त्तयोः कर्त्ता तत्फलैर्न लिप्यते।

**यथा कुमारो निष्काम आनन्दमुपयाति, तथैवैष देव-दत्तः स्वप्ने आनन्दमभियाति।**

ननु यथा सुषुप्ते दुःखहेतुरधर्म्मो नास्ति, तथा सुखहेतु-धर्म्मोऽपि नास्ति; तत् कुत आनन्दानुभवः? इत्याशङ्क्य, यद्यपि धर्म्म-हेतुक आनन्दो नास्ति, तथापि नित्यानन्दो वर्त्तते, सोऽनु-भूयते इत्युत्तरिते, किं तत्र प्रमाणम्? इति पृष्टे अनुभवं प्रमाण-यति, यथेति। ननु तथापि क्रीड़नकादि-निमित्त आनन्दो भविष्यतीत्यत आह, निष्काम इति। तदुक्तम्,—

"द्वावेव चिन्तयामुक्तौ परमानन्द-सम्प्लुतौ।
यो विमुग्धो जड़ो बालो यो गुणेभ्यः परङ्गतः" ॥ इति।

'स्वप्ने' सुषुप्ते।

**वेद एव परं ज्योतिर्ज्योतिष्कामो ज्योतिरानन्दयते।**

नन्वानन्दः सुखं, तत् सुषुप्तौ ज्ञानाभावेन कथं भासते? अत आह वेद एवेति। वेत्तीति 'वेदः' जानात्येवेत्यर्थः, यतः 'परं ज्योतिः' परं साधन-निरपेक्षम् आत्मज्योतिः, नहि द्रष्टु-र्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वादिति श्रुतेः।

ननु यद्यपि वेदस्तथापि निष्कामः कथमानन्दं पश्येदत आह,

(१) क, कारणाभावादेव।

ज्योतिष्काम इति। आत्मनस्तु कामाय सर्वं प्रियं भवति इति श्रुतेरात्मनो नित्यकामत्वात् ज्योतिष्कामः सन् आत्मरूपं ज्योतिः 'आनन्दयते' आनन्दरूपमनुभवति(१) सुषुप्तावन्यकामाभावे परिशेषसिद्धमात्मकामत्वं विमलतः सकामः पुरुषत्वाज्जाग्रत् पुरुषवत्, न च परमात्मनि व्यभिचारः पक्षतुल्यत्वात्, आप्तकाम आत्मकाम इति श्रुतेः यथास्यात्मनः सकामत्वम्(२)।

**भूयस्तेनैव स्वप्नाय गच्छति जलौकावत्। यथा जलौका अग्रमग्रं नयत्यात्मानं नयति परं सन्धय यत्परं नापरं त्यजति,(३) स जाग्रदभिधीयते।**

इदानीं स्वप्नावस्थामाह, भूय इति। 'तेनैव' येन यथा सुषुप्तिं गतः तेनैव यथाहृत्य(४) 'स्वप्नाय' स्वप्नं प्राप्तुं गच्छति।

जलौकावदिति। 'जलौका' तृणस्थ-कीटविशेषः। दृष्टान्तं विवृणोति, यथेति। सा यथा 'अग्र' पादाग्रम् 'अग्र' तृणं पादाग्रदेशं 'नयति' प्रापयति पादाभ्यां गृह्णाति, गृहीत्वा तत्र 'आत्मानं' देहं नयति, स्वयं गच्छति तत्रेत्यर्थः। किं कृत्वा?

---

(१) ख, आनन्दरूपमनुभवति। (२) ख, आप्तकाम इति श्रुतेः। तस्यात्मना सकामत्वात्। (३) परं सन्धयेत्यत्र बहुषु पुस्तकेषु बहुविधः पाठो विद्यते; स यथा। क, ग चिह्नित पुस्तकद्वये परं सन्धयत्यपरं नापरं त्यजति। ख, घ चिह्नित पुस्तकद्वये परं सन्धय परं नापरं त्यजति। ङ चिह्नितपुस्तके च परं सन्धूयत्यपरं त्यजति। दीपिकाद्वये तु परं सन्धय यत्परं नापरं त्यजति इति। अत्र पाठानां बहुत्वात् दीपिकाभिमत एव पाठो मूले निवेशितः।

(४) ख, तत् प्रवृत्त।

'परं सन्धय' परम् अग्रे वर्त्तमानं तृणादिकं सन्धाय अभिप्रेत्ये-त्यर्थः(१), छान्दसं धातोर्ह्रस्वत्वम्। अयमर्थः, सा यथा उत्तरं गृहीत्वैव पूर्वं त्यजति, एवमयं स्वप्नदेहाद्यालम्ब्यैव पूर्वावस्थां सुषुप्त्यादिरूपां त्यजति, जाग्रदाद्यालम्ब्यैव स्वप्नादि त्यजति, एवं मरणे देहान्तरमालम्ब्यैव पूर्वं देहं त्यजति। तदुक्तम्,—

"यथा तृण-जलौकैवं देही कर्म्मानुगो वशः" इति। तथा, "यथा तृणजलायुका तृणस्यान्तं गत्वा" इत्यादि श्रुतिश्च।

इदानीं जाग्रत् स्थानमाह, यत्परमिति। यत् 'परम्' उत्तरम् 'अपरं' पूर्वं न त्यजति, अवस्थात्रितयानुगतं यत्र पश्यति, स जाग्रदभिधीयते। जाग्रति हि स्वप्न-सुषुप्तयोरप्यनुसन्धानं भवति। यद्वा, 'यत्' यत्र 'परं' धर्म्मम् 'अपरम्' अधर्म्मं न त्यजति, शुभा-शुभाधिकारी भवति, स जाग्रत्। स्वप्ने तु कृतं शुभाशुभं न फलति।

**यथैवैष कपालाष्टकं सन्नयति, तमेव स्तन इव लम्बते, वेद-देवयोनिः।**

नन्वेकस्यानेकावस्थाश्रयत्वं कथम्? इत्याशङ्क्य दृष्टान्तमाह, यथैवैष इति। 'एषः' देवदत्तादिः यथा अष्टौ कपालानि 'सन्न-यति' समकालं वहति, तथा एकोऽप्यात्मा अनेकावस्था वहती-त्यर्थः।

ननु सङ्कोच-विकाशात्मकमवस्थात्रयं कथमेकरूपे आत्मनि?

---

(१) क, सन्धाय अभिप्रेत्याभिप्रेत्येत्यर्थः। ख, सन्धाय सन्धाय अभिप्रेत्येत्यर्थः।

इत्याशङ्क्य दृष्टान्तेन साधयति, तमेवेति। 'तमेव' आत्मानम् आविर्भाव-तिरोभाव-स्वभावमप्यवस्थाश्रयं 'लम्बते' श्रयति, स्तन इव सङ्कोच-विकाशात्मकः एकरूपां स्त्रियम्, स जाग्रदेव 'वेद-देव-योनिः' वेदयोनिः देवयोनिश्च।

**यत्र जाग्रति शुभाशुभं निरुक्तम् अस्य देवस्य, सम्प्र-सारोऽन्तर्यामी, खगः कर्कटकः पुष्करः पुरुषः प्राणो हिंसा परापरं ब्रह्मात्मा देवता वेदयति।**

कथं ज्ञायते जाग्रदेव वेद-देव-योनिः, न स्वप्नादिरिति, तत्राह, यत्रेति। यत्र जाग्रति पदस्थाने[1] अस्य देवस्य शुभा-शुभं 'निरुक्तं' नितरामुक्तं शुभाशुभफलञ्च वेद-देवाधीनं; तेन ते जाग्रदुत्पन्ना इति भावः। नितरामुक्तमित्युक्तत्वात् स्वप्नेऽपि क्रियानपि फलसम्बन्धो भवतीति लक्ष्यते; अतएव स्वप्ननिमित्त-रेतस्खलनादौ प्रायश्चित्त-स्मरणं शास्त्रे। स देवः 'सम्प्रसारः' सम्यक् प्रसारोऽस्मात् लोकस्येति। 'अन्तर्य्यामी' अन्तस्थितो नियच्छति वागादीन्। अयं संयच्छतीत्यस्य उपसंहारः। खगो देशा-न्तरस्थ-वस्तुग्राहित्वात्; 'कर्कटः' जलचरप्राणिभेदः, स एव कामि-तया वक्रगतिमत्त्वात् कर्कटकः; 'पुष्करः' पुष्टिकरः; यद्वा 'पुष्करं' गगनं तद्वत् स्वच्छः; 'पुरुषः' पुरि देहे वसति; 'प्राणः' प्राण-कर्त्ता,[2] तेन प्राण इत्युच्यते; 'हिंसा' हिंसको हिंस्रः 'परापरं' परं कारणम्, अपरं कार्यं, सगुण-निर्गुण-भेदेन वा स एव ब्रह्मा।

---

(१) ख, जाग्रदेति स्थाने। (२) ख, प्राणान् कर्त्ता।

तर्हि किं देहिनो भिन्नं? नेत्याह, आत्मेति। 'आत्मा' प्रत्यक्, तेन ब्रह्मात्मनोरभेद इत्यर्थः। सा देवता वेदयति सर्वचेतनत्वात् नान्योऽतोऽस्ति द्रष्टेति श्रुतेः।

**य एवं वेद, स परं ब्रह्मधाम क्षेत्रज्ञमुपैति, स परं ब्रह्मधाम क्षेत्रज्ञमुपैति। १॥**

फलमाह, य एवमिति। 'धाम' सर्वाधारं प्रकाशात्मकं वा, 'क्षेत्रज्ञं' साक्षिणम् 'उपैति' स्वात्मतया प्रतिपद्यते।

**अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति, नाभि, हृदयं, कण्ठं, मूर्द्धेति।**

'पुरुषस्य' उक्तलक्षणस्य स्थानानि, तत्र ध्याने सति शीघ्रमभिव्यक्तिः। 'नाभि' मणिपूरचक्रं, 'हृदयम्' अनाहतं, 'कण्ठं' कण्ठः विशुद्धिचक्रं, 'मूर्द्धा' आज्ञाचक्रम्। आधाराद्यनेकध्यानस्थानसत्त्वेऽपि प्राशस्त्यर्थं चतुर्णां ग्रहणम्, यदुक्तम्,—

"आधारे प्रथमे चक्रे द्रुतकाञ्चन-सन्निभे।
नासाग्रदृष्टिरात्मानं ध्यात्वा योगी सुखीभवेत्॥
स्वाधिष्ठाने शुभे चक्रे, सन्माणिक्य-शिखोपमे।
नासाग्रदृष्टिरात्मानं ध्यात्वा योगी सुखीभवेत्"॥ इत्यादि।

**तत्र चतुष्पादं ब्रह्म विभाति,**

ननु किमेतावन्त्येव स्थानानि निर्द्दिश्यन्ते नाधारादीनि?

इत्यत आह, तत्रेति। 'तत्र' तेषु स्थानेषु 'विभाति' विशेषेण भाति, अल्पध्यानेन(१) प्रकाशते।

जागरितं, स्वप्नं सुषुप्तं, तुरीयमिति। जागरिते ब्रह्मा, स्वप्ने विष्णुः, सुषुप्ते रुद्रः, तुरीये परमक्षरम्, स आदित्यश्च विष्णुश्चेश्वरश्च, स पुरुषः स प्राणः स जीवः सोऽग्निः सेश्वरश्च जाग्रत्; तेषां मध्ये यत् परं ब्रह्म विभाति।

के पादाः? इत्यत आह, जागरितमिति। एषां पादत्वं पर्य्याय-व्याप्तत्वात्, आरोपितत्वेनानुत्तमाङ्गत्वात्, प्रवृत्तेस्तदधीनत्वाच्च। 'सः' चतुरवस्थः आत्मा आदित्यादिः, सेश्वरश्चेति स ईश्वरश्च। 'जाग्रत्' इति ब्रह्मणो विशेषणं देदीप्यमानमित्यर्थः। 'तेषां' जाग्रदादीनाम्।

स्वयममनस्कमश्रोत्रमपाणिपादं ज्योतिर्वर्जितम्; न तत्र लोका न लोकाः, देवा न देवाः, वेदा न वेदाः, यज्ञा न यज्ञाः, माता न माता, पिता न पिता, स्नुषा न स्नुषा, चाण्डालो न चाण्डालः, पौक्कसो न पौक्कसः,(२) श्रमणो न श्रमणः, पशवो न पशवः, तापसो न तापसः, इत्येकमेव परं ब्रह्म विभाति।

---

(१) ख, अल्पायासेन। (२) क, पौल्कसो न पौल्कसः। ख, पौल्कषो न पौल्कषः।

तस्य स्वरूपमाह, स्वयमिति। ज्योतिर्वर्जितं, किन्तु इन्द्रियादि-रहितमपि ज्योतीरूपमेव; 'स्नुषा' पुत्रवधूः, शूद्राद्ब्राह्मण्यां जातश्चाण्डालः। पौल्कस इति, निषादाच्छूद्रायां जातः 'पुक्कसः' भिल्लः, स एव पौल्कसः। श्रमण इति, सोऽपि-नीचजातिभेदः,

"श्रमणो जातिभेदे च श्रमणी निम्नजीविनि"। इति विश्वः।

**हृद्याकाशे तद्विज्ञानमाकाशं, तत् सुषिरमाकाशं तद्वेद्यं हृद्याकाशं, तस्मिन्निदञ्च विचरति, यस्मिन्निदं सर्वमोतं प्रोतम्।**

क्व भाति? किंरूपञ्च ब्रह्म? इत्यत आह, हृदीति। 'विज्ञानं' चिद्रूपम्, आकाशं स्वस्थं 'तत्' ब्रह्म। उभयोराकाशयोरविशेषमाशङ्क्य क्रमेण द्वयोर्लक्षणे आह, तत् सुषिरमिति।

मन्त्रेऽप्युक्तं—

"हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्"। इति।

**स्वं विभोः प्रजाः संविज्ञायेरन्।**

एतज्ज्ञानस्य फलं सर्वज्ञतामाह, स्वं विभोरिति। विभोः प्रजाः सम्यक् ज्ञायेरन्, यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीत्यर्थः; यच्छान्दोग्ये, "स यदि पितृलोक-कामो भवति, सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति, तेन पितृलोकेन सम्पन्नो महीयते" इत्यादि।

न तत्र देवा लोका ऋषयः पितर ईशते, प्रतिबुद्धः(१) सर्वविदिति।

फलान्तरमाह, न तत्रेति। 'तत्र' ज्ञानिनि देवा ऋषयः पितरश्च न ईशते, ऋणत्रयातीतो भवतीत्यर्थः। प्रतिबुद्धो यः, सः 'सर्ववित्' सर्वमात्मत्वेन बुद्धवान्। नह्यात्मन एव भयं भवतीति हेतोः।

हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः।
हृदि प्राणश्च ज्योतिश्च त्रिवृत् सूत्रञ्च यन्महत्॥

विदित-वेदितव्यस्य सन्न्यासं विवक्षुर्बाह्यदेव-पूजादित्यागः साहसमित्याशङ्क्यान्तरेव सर्वमस्तीति प्रतिपादयति मन्त्रः, हृदिस्था इति। 'देवताः' ब्रह्मादयः, इन्द्रियाधिष्ठातारश्च, 'प्राणाः' वागादयः, 'प्राणः' मुख्यप्राणः, 'ज्योतिः' विषयप्रकाशः।

शुद्धं ब्रह्म च सर्वमूलभूतमव्यक्तमपि हृद्येवास्तीत्याह, त्रिवृदिति। सत्त्व-रजस्तमसां परस्परसङ्करेण नवगुणमव्यक्तं 'त्रिवृत्' सर्वकर्म्माङ्गं वाह्यं नवतन्तुकञ्च सूत्रं, प्रकृतिश्च तन्तवः, 'महत' अव्याकृतं निष्पन्नमुपवीतम्।

हृदि चैतन्ये तिष्ठति।

हृदि प्राणश्चेति मन्त्रस्थं हृदीति पदं व्याचष्टे, हृदि चैतन्ये तिष्ठतीति।

---

(१) क, ख, प्रतिबुधः।

**यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्।**
**आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥**

स्थूलोपवीतस्य वाचकं परिधानमन्त्रमाह,(१) यज्ञेति।* यत् हृदि चैतन्ये तिष्ठति यज्ञोपवीतं, तत् प्रतिमुञ्चेति योज्यम्। यस्मादेवं हृदि चैतन्ये तिष्ठति यज्ञोपवीतं, तस्मात् हृदयस्योपरि वहिर्विधावमाणं त्रैवर्णिकैरिदं यज्ञोपवीतं यज्ञोपवीतस्थानत्वात् त्रिवृत् कायमादिसूत्रवत्त्वं वीर्य्यवत् कर्म्मकारणम्, 'अस्तु' भूयात्, 'तेजः' ब्रह्म-वर्च्चसादि, उभयं भूयादिति पुरोधे। 'यज्ञस्य' विष्णोः परमात्मानं 'उप' सामीप्येन 'वीतं' विविधभागं तं जीवस्वरूपं 'परम्' उत्कृष्टं 'पवित्रं' सर्वपवित्रभूतं 'प्रजापतेः' प्रजानां पालयितुः 'यत्' सिद्धं सर्वव्यवहार-कारणं 'सहजं' स्वभाव-

---

(१) ख, वाचकं परिधानं पवित्रमाह।

* दीपिकाकृता कृता तु यज्ञोपवीतमित्यस्य व्याख्या कचित्क्षितदीपिकापुस्तके न दृश्यते। लिपिकरस्य भ्रमात् प्रमादाद्वासौ पतितेत्यनुमीयते। क्वचित्क्षितदीपिकापुस्तके विद्यमानाप्यसावन्तरान्तरा अतीवाशुद्धा। मया कृते तु तस्याः परिशोधने स्वकपोल-कल्पितेयमिति मनसिकृत्य सामाजिकानामनादरणीया स्यादित्याशङ्क्य यथादृष्टमसौ निवेश्यते। दीपिकापुस्तकान्तरं समीक्ष्य विद्वद्भिः परिशोधनीया।

अस्य च वचनस्य व्याख्या हलायुधेन सङ्क्षेपतः कृता। सापि ब्राह्मण-सर्वस्वादुद्धृत्य सर्वजनपरिदर्शनायात्र विन्यस्यते। यथा---

हे माणवक! यज्ञोपवीतं 'प्रतिमुञ्च' धारय। प्रतिपूर्वो मुञ्चतिर्धारणे वर्त्तते। किम्भूतं यज्ञोपवीतम्? 'आयुष्यम्' आयुर्वृद्धिहेतुम्, 'अग्र्यं' श्रेष्ठं 'शुभ्रं' निर्मलं परम पवित्रम्। पुनः किम्भूतं? 'पुरस्तात्' पूर्वं बृहस्पतेः सहजं, पूर्वं बृहस्पतिना सह एकसमये जातमित्यर्थः। किमर्थमस्य धारणम्? इत्याकाङ्क्षायामाह, बलमिति। 'बलं' सामर्थ्यमस्तु, तेजोऽस्तु; हे माणवक! आयुर्बल-तेजसां लाभाय यज्ञोपवीतं धारयेति वाक्यार्थः। एतन्मते प्रजापतेरित्यत्र बृहस्पतेरिति पाठः।

भूतम्, अथवा देहेन्द्रियादिभिः साह्नोत्पन्नं 'पुरस्तात्' पूर्व्वम् आयुष्करम् 'अग्र्यं' श्रेष्ठं 'प्रतिमुञ्च' सर्व्वतोऽविद्याविमोचणं कुरु, 'शुभ्रम्' उज्ज्वलं कृत्वा दिविमुक्तमित्यर्थः, 'प्रतिमुञ्च' परिधेहि शिष्यबलप्रदं 'तेजः' तेजःप्रदञ्च अस्तु तव इति मन्त्रार्थः। अयं मन्त्रोऽपि हृदि चैतन्ये तिष्ठतीत्यन्वयः।

सशिखं वपनं कृत्वा वहिःसूत्रं त्यजेद्बुधः।
यदक्षरं परं ब्रह्म तत् सूत्रमिति धारयेत(१)॥
सूचनात् सूत्रमित्याहुः सूत्रं नाम परं पदम्।
तत्सूत्रं विदितं येन स विप्रो वेदपारगः॥
तेन सर्व्वमिदं प्रोतं सूत्रे मणिगणा इव।
तत् सूत्रं धारयेद्-योगी योगवित्तत्त्व-दर्शिवान्॥
वहिःसूत्रं त्यजेद्विद्वान् योगमुत्तममास्थितः।
ब्रह्मभावमयं सूत्रं धारयेद्यः स चेतनः॥
धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत्(२)।
सूत्रमन्तर्गतं(३) येषां ज्ञानयज्ञोपवीतिनाम्।
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः॥
ज्ञान-शिखिनो ज्ञाननिष्ठा ज्ञान-यज्ञोपवीतिनः।

---

(१) ख, धारयन्। (२) क, नोच्छिष्टेनाशुचिर्भवेत्।

(३) ख, सूत्रमन्तर्गतं।

ज्ञानमेव परं तेषां पवित्रं ज्ञानमुत्तमम् ॥

अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।

स शिखीत्युच्यते विद्वानितरे केशधारिणः ॥

कर्म्माङ्गभूत-तदुपवीतत्यागेन सन्न्यासयोगमाह, सशिख-मिति । 'वहिःसूत्रं' वाह्योपवीतं 'बुधः' विप्रः तस्यैवाधिकारात् । सूचनादिति, 'सूच्यते' वेदान्तैर्निरूप्यते तत् सूत्रम् । नोच्छिष्ट इति एतन्मूलनात्र दोषेण मस्करीति(१) स्मृतिः ।

कर्म्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।

तैः सन्धार्य्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥

ध्यानाभ्यासं विधातुं वीतरागाणां कर्म्मण्यनधिकारात्(२) सरागाणामेव तदित्याह, कर्म्मणीति । ये 'ब्राह्मणादयः' त्रयः कर्म्मण्यधिकृताः, ते सरागाः, तैरेव वहिःसूत्रं सम्यक् धार्य्यं न निवृत्तैः । 'हि' यस्मात् तत् कर्म्माङ्गं स्मृतम्, अङ्गि-निवृत्तौ अङ्गस्याप्रयोजनत्वात् ।

शिखा ज्ञानमयी यस्य उपवीतञ्च तन्मयम् ।

ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥

निवृत्तस्य शिखा-सूत्रादित्यागे प्रत्यवायाभावं वक्तुं तयोरूपकमाह, शिखेति । 'ब्रह्मविदः' वेदविदः ।

---

(१) ख, एतन्मूलनात्रदोषेण कर्मरीति । (२) ख, विगतरागिणां कर्मण्यधिकारात् ।

इदं यज्ञोपवीतन्तु परमं यत्-परायणम्।
स विद्वान् यज्ञोपवीती स्यात् स यज्ञः स च यज्ञवित्॥

वाह्योपवीतिभ्यो ज्ञानोपवीतिनो विशेषमाह, इदमिति। 'इदं' ज्ञानाख्यं यज्ञोपवीतं 'यज्ञः' विष्णुः आत्मा, तस्य 'उपवीतं' वेष्टकं तदाकारमिति यावत्, तत् पवित्रं वाह्यापेक्षया, तच्च 'यत् परायणं' यस्य परमयनं सः विद्वान् 'स यज्ञः' स विष्णुः।

एको देवः सर्व्वभूतेषु गूढः सर्व्वव्यापी सर्व-भूतान्तरात्मा।
कर्म्माध्यक्षः सर्व-भूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥१॥

यल्लाभेन विविधबन्धो निवृत्तः, यत्प्रसादाद्दिव्यं चक्षुरासम्, मृत्युमुखाच्च निष्क्रान्तिः, तं श्रेष्ठतमं मन्त्राभ्यां स्तौति, एक इति। एकस्य सतो नानाभूतेषु स्थितिरलौकिको धर्म्मः। न च सत्त्वादौ दृष्टत्वात् लौकिक इति वाच्यम्, तत्स्वरूपातिरिक्तस्य सत्त्वादे रनभ्युपगमात्। 'सर्व्वव्यापी' एकस्य सतः सर्व्वव्याप्तिरित्यद्भुतम्, 'सर्व्वभूतान्तरात्मा' एकस्य सर्व्वभूतान्तरत्वे दृष्टान्तो नास्ति, 'कर्म्माध्यक्षः' तत्फलदाता, 'सर्व्वभूताधिवासः' सर्व्वावस्थास्वाश्रयत्वाव्यभिचारात्, 'साक्षी' साक्षादीक्षते, नत्विन्द्रियादि-व्यवधानेन। चेता इति, चितेरणिच्, चेतयितेत्यर्थः। अथवा, पृथिव्यादि-सञ्चयनकर्त्ता, 'केवलः' सजातीय-भेदशून्यः, 'निर्गुणः' अद्वितीयत्वात्॥१॥

एको मनीषी निष्क्रियाणां बहूनामेकं सततं बहुधा यः करोति ।
तमात्मस्थं येऽनु पश्यन्ति(१) धीरास्तेषां शान्तिः श्वाश्वती नेतरेषाम् ॥ २ ॥

'एको मनीषी' असाधारणः पण्डितः, अनेन ज्ञानशक्तिरुक्ता । निष्क्रियाणां बहूनां मध्ये 'एकः' क्रियावान्; निर्धारणस्य स्वजातीयापेक्षत्वात् । अनेन क्रियाशक्तिरुक्ता । 'एकम्' आत्मानं सततं यो बहुधा करोति मायित्वात्, 'आत्मस्थं' बुद्धिस्थं, 'धीराः' धीमन्तः 'शाश्वती शान्तिः' मोक्षः, न 'इतरेषाम्' उक्तसाधन-रहितानाम् ॥ २ ॥

आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् ।
ध्यान-निर्म्मथनाभ्यासाद्देवं(२) पश्येन्निगूढवत् ॥

आत्मानं बुद्धिं, निगूढवत् जलूकानिक्षिप्तेन तुल्यं स्थितं देवं 'पश्येत्' साक्षात् कुर्य्यात् ।

तिलेषु तैलं दधनीव सर्पिरापः स्रोतःस्वरणीषु चाग्निः(३) ।
एवमात्मात्मनि गृह्यते ऽसौ सत्येनैनं तपसा येऽनुपश्यन्ति धीराः ॥

---

(१) क, ग, ये तु पश्यन्ति ।  (२) ख, ध्याननिर्मथनाभ्यासादेवं ।
(३) क, मषितिलेषुतैलं दधनौ मपिण्यः स्रोतः स्वरणीषु चाग्निः ।

'आत्मा' ईशः 'आत्मनि' बुद्धौ 'सत्येन' वागनियमेन 'तपसा' शरीरनियमेन।

**ऊर्णनाभिर्यथा तन्तून् सृजते संहरत्यपि।**

**जाग्रत् स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः॥**

'जाग्रत्' जीवः यथा स्वप्नदशां गच्छति, तथा पुनः स्वप्नादागच्छते जाग्रद्दशां गच्छति।

**पद्मकोश-प्रतीकाशं शुषिरञ्चाप्यधोमुखम्।**

**हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्॥**

हृदये ध्येयत्वात् हृदयलक्षणमाह, पद्मेति। मुखे(१) 'शुषिः' विलम् अस्यास्ति तत् 'अधोमुखं' कदलीकोषवत् 'हृदयं' मांसमयं पद्मं तज्ज्ञेयं(२) तदेव 'विश्वस्यायतनं' सर्वस्य स्थानम्। ननु कथं सूक्ष्मे विश्वं मातीत्यत आह, महदिति।

ननु विरोधः, अतएव केचित् शून्यं तत्त्वं प्रतिपन्नाः, अपरे ज्ञानस्यैवान्तरत्वात् साकारं ज्ञानम्, अनिर्व्वचनीयं विश्वमित्याचार्य्याः, वटवीजन्यायमपरे, वस्तुतत्त्वन्त्वेको देव एव ज्ञातुमर्हतीति, अनुभवस्तु हृद्येव वस्तुमात्रस्यास्ति वहिःस्थमप्यन्तरेव भाति, अन्तः शून्यानां न किञ्चिद्भाति; अतोऽनुभवादृढ़हीतया श्रुत्या हृदयस्य महत्त्वं सिद्धम्।

**नेत्रस्थं जाग्रतं विद्यात् कण्ठे स्वप्नं विनिर्द्दिशेत्।**

**सुषुप्तं हृदयस्थन्तु तुरीयं मूर्द्ध्नि संस्थितम्॥**

(१) क, मुषे। (२) ख, तदज्ञेयं।

अवस्थाविशेषे पुंसः स्थानभेदमाह, नेत्रस्थमिति। हृदयस्थमिति(१)। पुरीतति स्थितं तुरीयमिति। यदुक्तम्,—

"मनसा सह वागीशा(२) भित्त्वा ब्रह्मार्गलं क्षणात्।
परामृत-महाम्भोधौ विश्रान्तिं तत्र कारयेत्" ॥ इति।

यदात्मा प्रज्ञयात्मानं सन्धत्ते परमात्मनि।
तेन सन्ध्याध्यानमेव, तस्मात् सन्ध्याभिवन्दनम् ॥
निरोदका ध्यानसन्ध्या वाक्-काय-क्लेशवर्जिता।
सन्धिनी सर्वभूतानां सा सन्ध्या ह्येकदण्डिनाम् ॥

तद्ध्यानमेव सन्ध्येत्याह, यदेति। 'निरोदका' निर्गतमासमन्तादुदकं यस्याः सा, तथा 'सन्धिनी' एकत्वबोधिका,

यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह।
आनन्दमेतज्जीवस्य यं ज्ञात्वा मुच्यते बुधः ॥
सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम्।
आत्मविद्या-तपोमूलं तद्ब्रह्मोपनिषत् परम् ॥
सर्वात्मैकत्व-सारेण तद्ब्रह्मोपनिषत् परम्।
तद्ब्रह्मोपनिषत् परम् ॥

तृतीयः खण्डः ॥ ३ ॥

इत्यथर्ववेदे ब्रह्मोपनिषत्(३) समाप्ता ॥ १६ ॥

---

(१) ख, सुखप्रवत् हृदयस्थमिति। (२) ख, वागीशा।
(३) ख, ग, क, इति ब्रह्मोपनिषत्।

'आनन्दम्' आनन्दः 'एतत्' एषः ; 'यम्' आनन्दं ज्ञात्वा मुच्यते । यमित्यस्य विशेषणद्वयं सर्वेति ।

इदानीमेतद्ग्रन्थस्य नाम निर्वक्ति, आत्मेति । ब्रह्म आत्मा यस्य उपनिषत् विद्या, सैव तपः, "यस्य ज्ञानमयं तपः" इति श्रुतेः, तस्य 'मूलं' परं कारणम्, अयं ग्रन्थ इत्युपचारात् ग्रन्थोऽपि ब्रह्मोपनिषदित्यर्थः । तद्ब्रह्माभिव्यक्त्यन्तरमाह, सर्वेति । सर्वं ब्रह्मेत्युपनिषद्रहस्य-ज्ञानं यस्याः सा ब्रह्मोपनिषदित्यर्थः । द्विरुक्तिः समाप्त्यर्था, इति शब्दश्च तद्द्योतकः ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद-वाक्यानां ब्रह्मोपनिषद्दीपिका ॥

इति ब्रह्मोपनिषदो दीपिका सम्पूर्णा ॥ १६ ॥

---

# प्राणाग्निहोत्रोपनिषत्।



ओम् अथातः सर्वोपनिषत्सारं संसारज्ञानमधीतमन्नसूत्रं शारीरयज्ञं व्याख्यास्यामः।

प्राणाग्निहोत्रोपनिषत् चतुःखण्ड-विराजिता।
एकादशी शौनकीये सारभूता हि सर्वतः॥ १॥

ननु विरक्तस्यापि देहस्थितये अन्नादनमावश्यकं, तच्च मुक्तावनुपयुक्तत्वादनर्थकं स्यादित्याशङ्क्य उपासनया सार्थकत्वाय अग्निहोत्रोपनिषदारभ्यते, अथात इति। 'संसारज्ञानं' संसारो हेयतया ज्ञायते ऽनेनेति, अधीतं वेदेषु, अन्नमेव 'सूत्रं' साधनं यस्मिन्, 'शारीरयज्ञं' शरीरे भवं यज्ञम्।

अस्मिन्नेव पुरुषशरीरे विनाप्यग्निहोत्रेण, विनापि साङ्ख्ययोगेन संसार-विमुक्तिर्भवतीति स्वेन विधिना अन्नं भूमौ निक्षिप्य, या ओषधयः सोमराज्ञीरिति तिसृभिः, अन्नपत इति द्वाभ्यामनुमन्त्रयते।

प्ररोचनार्थमादौ फलमाह, अस्मिन्निति। 'स्वेन' स्वगृह्योक्तेन, अन्नं भूमाविति नत्वन्तरिक्षे, यद्वादाववपात्रमारोप्यमित्यर्थः। यद्वा व्याहृतिभिर्बलित्रयं भूमौ दत्त्वेत्यर्थः।

या ओषधयः सोमराज्ञीर्बह्वीः शतविलक्षणाः(१)।
बृहस्पति-प्रसूतास्ता नो मुञ्चन्त्वंहसः॥
याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः(२)।
बृहस्पति-प्रसूतास्ता नो मुञ्चन्त्वंहसः॥

सोमराज्ञीरिति। सोमो राजा यासां ताः सोमराज्य इत्यर्थः, ताः 'नः' अस्मान् 'अंहसः' पापात् मुञ्चन्तु इत्यन्वयः। 'शतम्' अनेकजातीयाः, 'विलक्षणाः' रोगाद्यपनयनाः(३)। तयोः कर्म्मधारयः(४)। बृहस्पतिना 'प्रसूताः' दर्शितवीर्य्याः।

जीवलां नघारिषां मा ते बध्नाम्योषधे(५)।
यातयापुरुपचरादप रक्षांसि चातयात्(६)॥

'जीवलां' जीवं लाति आदत्ते सा विषौषधिरित्यर्थः, तां 'नघारिषां' हर्षाजननीम् उद्वेग-कारिणीं, यथा लाङ्गली गृहोपरि निक्षिप्ता कलहं करोति कुटुम्बिनां, तादृशीं; हे 'ओषधे'! हे वनभवे! 'ते' तव त्वत्सम्बन्धिनीं त्वत्स्वामिकां तां 'मा बध्नामि' न स्वीयां करोमि। 'उपहरात्' उपहरेत्, रक्षांसि च अप 'आतयात्' आयात् आगतानि कुर्य्यात्, तां मा बध्नामीत्यन्वयः।

(१) क, घ, विचक्षणाः। (२) घ, अकोशा याश्च कोशिनीः॥

(३) क, रोगाद्यनयनाः। ख, रोगाद्यनयन। (४) क, ख, यद्वा तयोः कर्म्मधारयः।

(५) क, नघारिषामाते बध्नाम्योषधिम्। ग, नघारिषां मातेबध्नाम्योषधिम्।

(६) क, यातया पुरुपहरा दपरक्षांसि चातया। ग, यातयापुरुपहरादप रक्षांसि-यातया। ङ, अपातयादुपहरादपरक्षांसि चायात्।

अन्नपतेऽन्नस्य नो(१) धेह्यनमीवस्य(२) शुष्मिणः।
प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे॥

'अनमीवस्य' न अमीवं पापं यस्य, 'शुष्मिणः' तेजस्विनः। "शुष्म तेजो ऽर्कयोरुक्तम्" इति विश्वः। 'प्रप्रदातारं' "प्रसमुपोदः पादपूरणे"(३)इति प्रशब्दस्य द्विर्भावः। 'तारिषः' तारय ऊर्द्ध्वलोकं नय, 'ऊर्जम्' अन्नं बलं वा 'नः' अस्मभ्यं 'धेहि' देहि "डुधाञ्‌ल धारणे पुष्टौ दाने" इति वोपदेवः। 'द्विपदे' मनुष्याय।

ओं यदन्नमग्निर्बहुधा विराद्धि(४) रुद्रैः प्रजग्धं यदि वा पिशाचैः।
सर्व्वं तदीशानो अभयं कृणोतु शिवमीशानाय स्वाहा॥

'विराद्धि' सिद्धिविरोधि विराद्धेरवाद्य(५), रुद्रैरिति। रुद्र-पिशाचादिभ्यो यजमानेनार्पितमित्यर्थः, सर्व्वं 'तत्' अन्नम् 'ईशानः' परमात्मा 'अभयं' भयाजनकं 'कृणोतु' करोतु, तदर्थम् ईशानाय स्वाहा, आहुतिं ददामीत्यर्थः।

अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः।
त्वं यज्ञस्त्वं ब्रह्मा त्वं रुद्रस्त्वं विष्णुस्त्वं वषट्कारः॥

जठराग्नेः प्रार्थना, अन्तरिति।

---

(१) क, अन्नपते चस्य। (२) ख, धेह्यन्नमीवस्य।
(३) क, प्रसमुपोदपात् पादपूरणे। ख, प्रसभमुपोदः पापादसरणे इति।
(४) क, ख, ग, 'विराजं। (५) क, विराद्धिः सिद्धिविरोधः, विराद्धिमेवाद्य,।

आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरों नमः।

अपां प्रार्थना, आपोज्योतिरित्यादि। हे आपः! यूयं 'ज्योतिः' आदिरूपाः स्थ, ताभ्यः ओं नम इत्यन्वयः।

आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम्॥
यदुच्छिष्टमभोज्यञ्च(१) यद्वा दुश्चरितं मम।
सर्वं पुनन्तु मामापो असताञ्च प्रतिग्रहम्(२)॥

आपः पुनन्त्विति तासामेवापरो मन्त्रः। पूता सती मां पुनातु। 'ब्रह्मणस्पतिः' ब्रह्मणस्पतयः पृथिवीं पुनन्तु, 'ब्रह्मपूता' ब्रह्मभिः ब्राह्मणैः पवित्रिता पृथिवी मां पुनातु। मम उच्छिष्टादि सर्व्वं तदापः(३) 'पुनन्तु' शोधयन्तु इत्यन्वयः।

आपोऽमृतमस्यमृतोपस्तरणमस्यमृतञ्च प्राणे जुहोमि, अमा शिष्यान्तोऽसि प्राणाय प्रधानाय स्वाहा, अपानाय स्वाहा, व्यानाय स्वाहा, समानाय स्वाहा, उदानाय स्वाहा इति कनिष्ठयाङ्गुल्या(४) अङ्गुष्ठेन च प्राणे जुहोमि, अनामिकया अपाने, मध्यमया(५) व्याने, प्रदेशिन्या समाने, सर्वाभिरुदाने, तूष्णीमेकामेकऋषौ

(१) घ, ङ, मभोज्यं वा। (२) क, ङ, प्रतिग्रहं स्वम्। घ, प्रतिग्रहं त्वम्।
(३) क, ङ, तमापः। (४) ग, कनिष्ठिकयाङ्गुल्या। (५) क, ग, मध्यमिकया।

जुहोति । द्वे आहवनीये एकां दक्षिणाग्नावेकां गार्हपत्ये एकां सर्वप्रायश्चित्तीये ।

## प्रथमः खण्डः ॥ १ ॥

आपोऽमृतमसीति, हे आपः ! अप्रीतिरसम्, विधेय-वचनानुरोधेन वा असीत्येकवचनम् । अमा सह हे शिष्य प्राण ! 'अन्तोऽसि' अमितोऽसि भोजितोऽसि । अम्गतौ भोजने शब्दे । अनामिकया इत्यादौ अङ्गुष्ठः सर्वत्रान्वेति । 'एकऋषौ' अग्नौ तत्राग्नि सूर्य्ये, 'आहवनीये' दर्शनाग्नौ मुखस्थे, 'दक्षिणाग्नौ' शरीराग्नौ हृदयस्थे, 'गार्हपत्ये' कोष्ठाग्नौ नाभिस्थे, सर्वप्रायश्चित्तीये नाभेरधःस्थिते ।

अथापिधानमस्यमृतत्वाय(१) उपदधामीत्युपस्पृश्य पुनरादाय पुनरुपस्पृशेत् । स ते प्राणा वापो(२) गृहीत्वा हृदयमन्वालभ्य जपेत् ।

'अपिधानम्' आच्छादनम् । अनेन मन्त्रेण द्विराचम्य ततो वामेन उदकं गृहीत्वा दक्षिणेन हृदयम् 'आलभ्य' स्पृष्ट्वा अमृतोऽसीत्यमन्त्रं जपेत् ।

प्राणो अग्निः परमात्मा पञ्चवायुभिरावृतः ।
अभयं सर्वभूतेभ्यो न भवेऽहं कदाचन ॥ इति ।

(१) क, ख, मृताय । (२) क, प्राणानायो, ग, प्राणावायो । ङ, सव्योपानावापो ।

अभयमिति। सर्वभूतेभ्योऽभयं भवेत्। अहं 'कदाचन' कदाचिदपि न भवे अपि तु भवेयमेवेत्यन्वयः।

विश्वोऽसि वैश्वानरो विश्वरूपो विश्वं त्वया धार्य्यते जायमानम्।

विश्वन्तु त्वाऽऽहुतयः सर्वा यत्र ब्रह्मा विश्वामृतोऽसि॥ इति।

महानवोऽयं पुरुषो योऽङ्गुष्ठाग्रे प्रतिष्ठितः।

तमद्भिः परिषिञ्चामि सोऽस्यान्ते अमृताय योनौ(१)। इति।

इमे द्वे प्रार्थने। विश्वन्त्विति। विश्वमिव 'त्वा' तव सर्व्वा आहुतयः। 'यत्र' विश्वस्मिन् ब्रह्मा वर्त्तते, ब्रह्मादिस्तम्बपर्य्यन्तं जगत् तव आहुतय इत्यर्थः। तर्हि त्वमपि कस्यचिदाहुतिः स्याः? अत आह, विश्वामृत इति। 'विश्वामृतोऽसि' विश्वेषु नित्योऽसि।

महानिति। 'अवः' अन्नं तर्पक इत्यर्थः; 'अमृताय योनौ' निषेकस्थाने अमृतभावाय; अनेन दक्षिणाङ्गुष्ठाग्रं सिञ्चेत्।

एष एवात्मा ध्यायेताग्निहोत्रं जुहोमीति। सर्वेषामेव सूनुर्भवति।

'एषः' भोक्ता अङ्गुष्ठाग्रे स्थितः, स एवात्मा ज्ञेयः। अत्राग्निहोत्र-बुद्धिः कर्त्तव्येत्याह, ध्यायेतेति। 'सूनुः' जनकः सोता,

(१) घ, ङ, सोऽस्यान्तेऽमृतायामृतंयोनौ।

सूते इतिव्युत्पत्त्या, नतु रूढ़्या, "सूनुः पुत्रे ऽनुजे रवौ" इति विश्वोक्तेः। यद्वा 'सूनुः' पुत्रः यथा पितुस्तर्पकः, एवं सर्व्वेषां तर्पको भवतीत्यर्थः।

**अथ यज्ञपरिवृतयाहुतीर्होमयति स्वे शरीरे यज्ञं परिवर्त्तयामीति,(१) चत्वारोऽग्नयः; ते किं नामधेयाः?। तत्र सूर्य्योऽग्निर्नाम सूर्य्यमण्डलाकृतिः सहस्ररश्मिभिः परिवृत एकऋषिर्भूत्वा मूर्धनि तिष्ठति। यस्मादुक्तो दर्शनाग्निर्नाम चतुराकृतिराहवनीयो भूत्वा मुखे तिष्ठति।**

यज्ञपरिवृते इति। यज्ञपरिवर्त्तनाय, सम्पदादित्वात् क्विप्। 'अथ' अग्निहोत्रबुद्ध्यनन्तरम्, अधिकारप्राप्तौ आहुतयो यास्ता यज्ञबुद्ध्या 'होमयति' मुखे क्षिपति यज्ञं परिवर्त्तयामीति बुद्ध्या। चत्वार इति। पञ्चमस्य प्रायश्चित्तीयस्यासार्व्वत्रिकत्वात्।

उपासनार्थं नामानि पृच्छति, ते इति। यस्मादुक्त इति पूर्वेण सम्बध्यते, यस्मात् सूर्य्यः सहस्रदलाधिष्ठातेति वेदेषूक्तः। तदधस्तनमग्निमाह, दर्शनाग्निरिति। 'चतुराकृतिः' चतुरस्राकृतिः। मुखे इति। तदुक्तम्,—

"जिह्वामूले स्थितो देवि! सर्व्वतेजोमयो ऽनलः।
तदग्रे भास्करश्चन्द्रस्तालुमूले प्रतिष्ठितः"॥ इति।

---

(१) ख, परिवर्ज्जयामीति।

शारीराग्निर्नाम जराप्रणुदा हविरविस्कन्दति। अर्द्ध-चन्द्राकृतिर्दक्षिणाग्निर्भूत्वा हृदये तिष्ठति।

तृतीयाग्निमाह, शारीरेति। 'शारीराग्निः' जठराग्निः ज्ञानाग्निः शुभाशुभभोक्ता, 'जराप्रणुदा' जरां प्रणुदति, कनित् प्रत्ययः। अजरो न जीवोम्रियत इति श्रुतेः। हृदये इति। तदुक्तम्,-"हृत्सरोरुहमध्ये ऽस्मिन्" इत्युपक्रम्य,

"विश्वार्चिषं महावह्निं ज्वलन्तं विश्वतो मुखम्" इत्यादि।

'हविः' भुक्तम् 'अविस्कन्दति' अवस्कन्दति शोषयति तद्रसं गृह्णातीत्यर्थः।

तत्र कोष्ठाग्निरिति,(१) कोष्ठाग्निर्नामाशित-पीत-लीढ़-खादितानि सम्यक् श्रपयित्वा गार्हपत्यो भूत्वा नाभ्यां तिष्ठति। प्रायश्चित्तीयस्त्वधस्तात् स्त्रियस्तिस्रो हिमांशु-प्रभाभिः प्रजननकर्म्मा।

## द्वितीय. खण्डः। २॥

तत्र कोष्ठाग्निरिति य उक्तः, स निरूप्यते इति शेषः। प्रतिज्ञातमर्थं दर्शयति, कोष्ठाग्निर्नामेति। 'अशितं' चोष्यं 'लीढ़' लेह्यम्। नाभ्यामिति। तदुक्तम्,—

(१) घ, तत्र कोष्ठाग्निर्भूत्वा हृदये तिष्ठति। तत्र कोष्ठाग्निर्नामा।

"नाभिमध्ये भवत्येष भास्करो देहनायकः" । इति ।

प्रायश्चित्तीयस्तु अधस्ताद्वर्त्तते सर्व्वेषामिति शेषः । तदुक्तम्,—

"त्रिकोणञ्च पुरं वह्नेरधो मेढ्रादवस्थितम्" इति ।

स्त्रियस्तिस्रो यस्य वर्त्तन्ते इति शेषः । नाड़ीनां बाहुल्येऽपि मुख्या नाड्यस्तिस्र एव, इडा-पिङ्गला-सुषुम्णाः ; ताभिः किं करोति ? इत्यत आह, हिमांश्विति । 'हिमांशोः' ललाटस्थ-चन्द्र-मण्डलात् नाड़ीद्वारा च्युताभिः 'प्रभाभिः' शुक्ररूपाभिः 'प्रजननं' प्रजोत्पत्तिः कर्म्म यस्य सः, तथा पुंलिङ्गमूलं ह्यग्नि-कुण्ड-मध्येऽस्ति ; तेनाग्निकुण्डे पतितं शुक्रं प्राणेनाकृष्टं लिङ्गाग्रेण गर्भाशयं प्रविश्य प्रजा भवति ; तेनाग्नी-षोमात्मकं शरीर-मुच्यते ।

अस्य शरीरयज्ञस्य यूप-रशना-शोभितस्य को यजमानः ? का पत्नी ? के ऋत्विजः ? कोऽध्वर्य्युः ? को होता ? को ब्राह्मणाच्छंसी(१) ? कः प्रतिप्रस्थाता ? कः प्रस्तोता ? को मैत्रावरुणः ? क उद्‌गाता ? के सदस्याः ? कानि यज्ञपात्राणि ? कानि हवींषि ? का वेदिः ? का उत्तर-वेदिः ? केडा ? को द्रोणकलशः ? को रथः ? कः पशुः ? का धारापोता ? के दर्भाः ? कः स्रुवः ? का आज्यस्थाली ?

---

(१) घ, ब्राह्मणाच्छन्दसी ।

कावाघारौ? कावाज्यभागौ? के प्रयाजाः? के अनुयाजाः? कः सूक्तवाकः? कः शंयोर्वाकः? का अहिंसा? के पत्नीसंयाजाः? को यूपः? का रशना? का इष्टयः? का दक्षिणा किमवभृथमिति।

तृतीयः खण्डः। ३॥

शरीरयज्ञस्य यूपेनोङ्कारेण रशनयाशया शोभितस्य उपकरणानि पृच्छ्यन्ते, पृष्ट्वा चोत्तरार्थं(१)क्वचित् क्रमेण, क्वचिद्व्युत्क्रमेणानास्थया दृष्टिसम्पादन एव तात्पर्य्यात्। 'केडा' का इडा,।

अस्य शरीरयज्ञस्य यूप-रशना-शोभितस्य आत्मा यजमानः, बुद्धिः पत्नी, वेदा महर्त्विजः, प्राणो ब्राह्मणाच्छंसी,(२) अपानः प्रतिप्रस्थाता, व्यानः प्रस्तोता, समानो मैत्रावरुणः, उदान उद्गाता, अहङ्कारोऽध्वर्युः, होता चित्तं, शरीरं वेदिः, नासिकोत्तरवेदिः, मूर्द्धा द्रोणकलशः, दक्षिणहस्तः स्रुवः, सव्यहस्त आज्यस्थाली, श्रोत्रे आघारौ, चक्षुषी आज्यभागौ, ग्रीवा धारापोता, तन्मात्राणि सदस्याः, महाभूतानि प्रयाजाः, भूतान्यनुयाजाः,

(१) क. श्रुत्वा चोत्तरार्थं । (२) क. ब्राह्मणाच्छन्दसी।

जिह्वेडा, दन्तोष्ठौ स्रुक्स्रुवाकः, तालुः संयोर्वाकः, स्मृतिर्दया क्षान्तिरहिंसा पत्नीसंयाजाः, ओङ्कारो यूपः, आशा रशना, मनो रथः, कामः पशुः, केशा दर्भाः, बुद्धीन्द्रियाणि यज्ञपात्राणि, कर्मेन्द्रियाणि हवींषि, अहिंसा इष्टयः, त्यागो दक्षिणा, अवभृथं मरणात् ।

वेदाः 'महर्त्विजः' ऋत्विजामपि ऋत्विजः सर्वेषामुपदेष्टृत्वात् । सामान्य-प्रश्नस्य विशेष-पर्य्यवसायित्वात् विशेषेणोत्तरं प्राण इत्यादिना । आत्मादीनां यजमानादिसाम्यं स्वातन्त्र्यादिना यथासम्भवमूहनीयम्,'ग्रीवा' कन्धरा 'धारापोता' धाराभिरुपलक्षितः पोता पावमानाध्येता, 'जिह्वेडा' जिह्वा इडा पात्रविशेषः; स्मृतिः, दया, क्षान्तिः, अहिंसा, चत्वारः पत्नीसंयाजाः, 'मनो रथः' मन एव रथः, 'मरणात्' देहाख्य-मलापनयनात्, 'अवभृथः' यजमानस्य यज्ञान्तस्नानम् ।

सर्वा ह्यस्मिन् देवताः शरीरेऽधिसमाहिताः ।
वाराणस्यां मृतो वापि इदं वा ब्रह्म यः पठेत् ।
एकेन जन्मना जन्तुर्मोक्षञ्च प्राप्नुयादिति ।
मोक्षञ्च प्राप्नुयादिति ।

चतुर्थः खण्डः । ४ ॥

इत्यथर्ववेदे प्राणाग्निहोत्रोपनिषत् समाप्ता । १७ ॥

ननु भवन्तु यज्ञोपकरणानि, तथापि देवताऽभावे कथं यज्ञः स्यात्? इत्यत आह, सर्वा हीति। यावदधिदैवतं तावदध्यात्मं वर्त्तते, चक्षुरादीनां सूर्य्याद्यधिष्ठितत्वादितिभावः। ननु ज्ञानाभावे कथं मोक्षः? इत्याशङ्क्य वाराणसी-मरणं दृष्टान्तः,। द्विरुक्तिः समाप्त्यर्था।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानामग्निहोत्रस्य दीपिका॥

इति प्राणाग्नि-होत्रोपनिषदो दीपिका सम्पूर्णा॥ १७॥

---

# नीलरुद्रोपनिषत् ।



ओम् अपश्यं त्वावरोहन्तं दिवितः पृथिवीमवः ।
अपश्यमस्यन्तं रुद्रं नीलग्रीवं शिखण्डिनम् ॥ १ ॥

ओं नीलरुद्रोपनिषदि षोडश्यां खण्डकत्रयम् ।
श्रुतिरूपेण तं देवं स्तौत्यपश्यमिति क्रमात् ॥ १ ॥

असंप्रज्ञयोगमुक्त्वा तत्सम्प्रदाय-प्रवर्त्तकं परमगुरुं योगसिद्धिप्रदं नीलरुद्रं स्तौति, अपश्यमिति । 'दिवितः' दिवः 'पृथिवीं' भूमिम् 'अवः' अधस्तात् अवरोहन्तं 'त्वा' त्वाम् अहमपश्यमिति मन्त्रद्रष्टुर्वचः । 'अस्यन्तम्' असुक्षेपणे, क्षिपन्तं दुष्टान्, 'शिखण्डिनं' "शिखण्डो बर्ह-चूडयोः" इतिविश्वः । तयोरन्यतरदस्यास्ति शिखण्डी, तम् ।

दिव उग्रो अवारुक्षत् प्रत्यष्ठाद्भूम्यामधि ।
जनासः पश्यते मह्यं नीलग्रीवं विलोहितम् ॥ २ ॥

एष एत्यवीरहा रुद्रो जलास-भेषजाः(१) ।
यत्ते(२)ऽक्षेममनीनशद्-वातीकारोऽप्येतु ते ॥ ३ ॥

---

(१) ख, ग, भेषजीः ङ, भेषजी । (२) ख, ग, विते । ङ, विमं ।

दिवः सकाशात् 'उग्रः' रुद्रः 'अवारुक्षत्' अवतीर्णवान्, 'प्रत्यस्थात्' प्रतिष्ठां स्थितिं कृतवान्, 'भूम्यामधि' अधिरीश्वरे इति, अधिः कर्म्मप्रवचनीयः, यस्मादधिकं यस्य चेश्वर-वचनमिति(१) तत्र सप्तमी, भूमेरीश्वर इत्यर्थः।

'जनासः' आज्जसेरसुक्, सम्बोधने चेति प्रथमा। 'एति' आगच्छति, न वीरहा 'अवीरहा' सौम्यः ; यद्वा 'अवीराणि' पापानि हन्तीत्यवीरहा, जले 'आसः' क्षेपो यासां ताः जलासाः, ताश्च ता भेषजाश्च, ता एतीत्यन्वयः, जलक्षिप्तानामोषधीनामक्षेम—निर्णेजकत्वं(२) रुद्रसन्निधानादेव। यत् 'ते' तव अक्षेममनीनशत्; अनेन क्षेमकारित्वमुक्तम्।

अलब्धलाभो योगः, तत्कारित्वमप्याह, वार्तीकार इति। 'वार्तिः' प्राप्तिः, अप्राप्तं प्राप्तं करोतीति वार्तीकारः, सोऽपि ते तव अपूर्वलाभकरः(३) 'एतु' आगच्छतु, योग-क्षेमकरोऽभिषेकजले सन्निहितो भवत्वित्यर्थः। मन्त्र-लिङ्गादभिषेके विनियोगः।

**नमस्ते भवभावाय नमस्ते भाममन्यवे(४)।**

**नमस्ते अस्तु बाहुभ्यामुतो त इषवे नमः॥ ४॥**

'भामः' क्रोधः, 'मन्युः' तत्पूर्वावस्था, 'उतः' उ ते 'इषवे' बाणरूपाय।

---

(१) ख, भूम्याम् अधि अधिरीश्वर इत्यधिः कर्म्मप्रवचनीयः स्यादधिकं यस्य चेश्वर-वचनमिति।

(२) ख, निर्णोदकत्वं। (३) क, अपूर्वलाभं करोतु। (४) ख, ग, ङ, भवमन्यवे।

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।

शिवां गिरित्र ! तां कृणु मा हिंसीत् पुरुषान्मम ॥ ५ ॥

'अस्तवे' असुक्षेपणे तवेत्प्रत्ययस्तुमर्थे, अस्तुं क्षेप्तुमित्यर्थः । कं क्षेप्तुं? 'गिरिशन्त' शन्ति शन्, गिरेः शन् गिरिशन्, सम्बन्ध-सामान्ये षष्ठीसमासः । तं गिरिशन्त, छान्दसो य-लोपः । हे 'गिरित्र !' गिरिरक्षक ! तां 'शिवां' कल्याणीं 'कृणु' कुरु ।

शिवेन वचसा त्वा गिरिशाच्छावदामसि ।

यथा नः सर्वमिज्जगदयक्ष्मं(१) सुमना असत् ॥ ६ ॥

'अच्छावदामसि' 'अच्छ' निर्मलं वदाम, अच्छशब्दस्य निपातस्येति दीर्घः । इदन्तो मसि इदमर्थको(२) निपातश्च । 'अयक्ष्मं' नीरोगं 'सुमनाः' सुमनस्कम् 'असत्' भवेत् लिङर्थ लेट् तिप्, इतश्च लोपः परस्मैपदेषु लेटोऽडाटावित्यट् ।

या ते इषुः शिवतमा शिवं बभूव ते धनुः ।

शिवा शरव्या या तव तया नो मृड जीवसे ॥ ७ ॥

'शरव्या' शरसन्धायिनी ज्या, "शरो दध्यग्र-वाणयोः" इति विश्वः । शरमर्हति यत्, "अव शरस्य" इति अवादेशः । यद्वा शरुःव्रताद्वा(३) सिद्धं. "शरुरायुध-कोपयोः" इति विश्वः । उगवादिभ्यो यत् । 'जीवसे' जीवितुं 'मृड़' मोदय ; यद्वा हे मृड़ ! 'तया' तस्मात् 'नः' अस्मान् जीवयसि ।

(१) ब, सर्वमिदं जगदयक्ष्मं । (२) ख, इदमनर्थको । (३) ख, शरव्रताद्वा ।

या ते रुद्र! शिवा तनूरघोरा पापकाशिनी।

तया नस्तन्वा शन्तमया गिरिशं त्वाभिचाकशत्॥८॥

'शन्तमया' अतिशयेन शं शन्तमा तया, 'अभिचाकशत्' काशेर्यङ्लुगन्ताल्लोट तिप्, अट्, अतिशयेन प्रकाशयत्विति प्रार्थना।

असौ यस्ताम्रो अरुण उत बभ्रुर्विलोहितः।

ये चेमे अभितो रुद्रा दिक्षु श्रिताः सहस्रशो

वैषां हेड ईमहे॥ ९ ॥

प्रथमः खण्डः॥ १ ॥

'बभ्रुः' पिङ्गलः, वा एषां ह 'ईडे' स्तुतये 'ईमहे' कामयामहे॥

अदृशन् त्वावरोहन्तं नीलग्रीवं विलोहितम्।

उत त्वा गोपा अदृशनुन्त त्वोदहार्य्यः।

उत त्वा विश्वा भूतानि तस्मै दृष्टाय ते नमः॥ १० ॥

नमोऽस्तु नीलशिखण्डाय सहस्राक्षाय वाजिने।

अथो ये अस्य सत्वानस्तेभ्योऽहमकरं नमः॥ ११ ॥

'गोपा' गोपालाः 'अदृशन्' अपश्यन् 'उदहार्य्यः' पानीयहारिण्यः। 'विश्वाः' विश्वानि भूतानि अदृशन्, योगिनामप्य-

इत्थं त्वां कृपया आविर्भवन्तम् आदित्यवत् प्रकाशमानं पामरा अपि ददृशुरित्यर्थः । 'वाजिने' नेत्रवते बाणरूपाय वा, सीदन्तीति 'सत्वानः' गणाः ।

नमांसि त आयुधायानातताय धृष्णवे ।(१)

उभाभ्यामकरं नमो(२) बाहुभ्यां तव धन्वने ॥ १२॥

'नमांसि' नमस्काराः, न 'आतताय' अनातताय, 'धृष्णवे' प्रगल्भाय, बाहुभ्यां कृत्वा धन्वने नमो ऽकरवमित्यर्थः ।

प्रमुञ्च धन्वनस्त्वमुभयो रार्त्न्योर्ज्याम् ।(३)

याश्च ते हस्त इषवः परस्ता भगवो वप(४) ॥ १३ ॥

'उभयोः' अरि-प्रत्यरि-भूतयोः रार्त्न्योर्धन्वनो ज्यां 'प्रमुञ्च' अनाततां कुरु, रार्त्न्योर्विग्रहे लोकानां क्लेशो भवति ; ततस्तं शमय इति भावः । हे भगवः यास्ते हस्ते 'इषवः' बाणाः, ताः 'परावप' पराङ्मुखं मुञ्च,(५) त्वमपि कोपं लोकेषु माकृथा इति भावः ।

अवतत्य धनुस्त्वं सहस्राक्ष ! शतेषुधे ! ।

निशीर्य्य शल्यानां मुखा शिवो नः शम्भुराभरः(६)॥१४॥

---

(१) ख, क, नमांसि आयधायानाम्तताय धृष्णवे । (२) क, उभाभ्यामुत नमो ।
(३) ख, ग, रार्त्न्योर्याम् । (४) ख, वयं । ग, वय । (५) ख, पराङ्मुखान्मञ्च ।
(६) क, शतेषु ते । निशार्य्य शल्यानां मुख शिवो नः सुमना भव ।

इन्द्ररूपेण जगद्रक्षा इति प्रार्थयते। अवतत्येति। धनुः त्वमधिज्य(१) कृत्वा 'सहस्राक्ष!' शक्ररूप! शतं 'इषुधयः' तूणा यस्यरूपा यस्य तत्सम्बोधनं, 'निशीर्य' तीक्ष्णीकृत्य 'मुखा' मुखानि 'नः' अस्मान्, 'शिवः' कल्याणरूपः 'शम्भुः' सुखहेतुः सन् 'आभर' धारय पोषय वा।

विज्यं धनुः शिखण्डिनो विशल्यो बाणवाँ उत।
अनेशन्नस्येषवः शिवो अस्य निषङ्गतिः॥ १५॥

'बाणवान्' तूणोरः विशल्योऽस्तु तोमररहितो(२) भवतु, वैरिषु हतेषु तत्-प्रयोजनाभावात्। 'अनेशन्' अदृश्या अभवन्, नशिमसुमी वलिख्येत्वमिति वार्त्तिकेन लुङि पुषादयङि एत्वम्, 'निषङ्गतिः' निषङ्गः।

परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः।
अथो य इषुधिस्तवारे !(३) अस्मिन्निधेहि तम्॥१६॥

'विश्वतः' सर्वतः, अस्मान् 'परिवृणक्तु' परिरक्षतु, अरे सम्बोधने, 'अथो' पश्चात् रक्षणानन्तरं(४) यः तव इषुधिः, अस्मिन् 'तं' हेतिं बाणं निधेहि स्थापय।

या ते हेतिर्मीढुष्टम! हस्ते बभूव ते धनुः।
तया त्व विश्वतो अस्मानपक्ष्मया परिभुज(५)॥१७॥

---

(१) क, सधिज्यं। (२) क, मलरहितो। (३) ख, अथो य इषुभिस्ते वारे।
(४) क, ख, ई रक्षणानन्तरं। (५) ख, परिभुज।

हे मीढ़ुष्टम! सेवकतमं 'अपस्मया' असज्जया 'तया' हेत्या 'परिभुज' परिपालय ।

नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः(१) ॥ १८॥
ये चामी रोचने दिवि ये च सूर्य्यस्य रश्मिषु ।
येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ॥ १९ ॥
या इषवो यातुधानानां ये वा वनस्पतीनाम् ।
ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ २० ॥

द्वितीयः खण्ड ॥ २ ॥

'सदस्कृतं' गृहं 'यातुधानानां' रक्षसां, वनस्पतीनां ये सर्पाः, ते हि जनान् दंशन्ति । 'अवटेषु' गर्त्तेषु ।

यः स्वजनान्नीलग्रीवो यः स्वजनान् हरिस्त ।
कल्माष-पुच्छमोषधे! जम्भयाश्वरुन्धति ॥ २१ ॥

केदाराधीशं महिषरूपं स्तौति, य इति । 'यः' शिवः 'स्वजनान्' भक्तान् प्रति नीलग्रीवः, यश्च स्वजनान् भक्तान् प्रति 'हरिः' हरितवर्णो भक्तवात्सल्येन भवति । महिषस्य हि तादृशरूपं सम्भवति । हे ओषधे! 'अरुन्धति' रोधरहिते तं 'कल्माषपुच्छं' कृष्णपाण्डरपुच्छम् 'आशु' शीघ्रं 'जम्भय' स्ववीर्य्येण वीर्य्यवन्तं कुरु, ओषधीनां पशुभ्यो बलप्रदत्वात् ।

(१) घ, सर्वभ्यो नमः । एवं सर्वत्र ।

"कल्माषो राक्षसे कृष्णे कल्माषः कृष्ण-पाण्डुरे" इति विश्वः ।

केदारेश्वरस्य महिषरूपत्वात् पुच्छवत्ता सम्भवति ।

**बभ्रुश्च बभ्रुकर्णश्च नीलगलमालः शिवः पश्य ।**

**शर्व्वेण नीलशिखण्डेन भवेन मरुतां पिता ॥ २२ ॥**

'बभ्रुः' कचिदवयवे पिङ्गलवर्णः ; अतः पिङ्गलवर्णकर्णः, नीला गले माला यस्य सः, शिव इत्यत्र नीलग्रीवश्च यः शिव इति पाठो युक्तः । पितेति तृतीयार्थे प्रथमा, पित्रा इत्यर्थः ।

**विरूपाक्षेण बभ्रूणां वाचं वदिष्यतो हतः ।**

**सर्व्वनील-शिखण्डेन वीर ! कर्म्मणि कर्म्मणि ॥ २३ ॥**

अथ वाचं वदिष्यतः पिता देहमात्रस्य जनको ब्रह्मा येन ईश्वरेण हतः, तं त्वं पश्येत्यन्वयः । हे वीर ! 'कर्म्मणि कर्म्मणि' विहित-प्रतिषिद्धरूपे ।

**इमामस्य प्राशं जहि येनेदं विभजामहे ।**

**नमो भवाय नमः सर्व्वाय नमः कुमाराय शत्रवे ॥ २४॥**

इमाम् 'अस्य' जनस्य 'प्राशं' पृच्छतीति प्राट्, तां प्राशं पृच्छिकां वाचं 'जहि' वेद-विहित-प्रतिषिद्ध-कर्म्मविषयं संशयं निराकुरु इत्यर्थः । 'येन' कर्म्मणा 'इदं' जगत् 'विभजामहे' कर्म्मभूमि-भोगभूमि-रूपेण विभक्तं कुर्म्महे । 'कुमाराय' कालानभिभूताय, 'शत्रवे' संहर्त्रे ।

नमो नीलशिखण्डाय नमः सभाप्रपादिने ।

यस्य हरी(१) अश्वतरौ गर्द्दभावभितः सरौ ॥ २५ ॥

तस्मै नीलशिखण्डाय नमः सभाप्रपादिने ।

नमः सभाप्रपादिने ॥ २६ ॥

तृतीयः खण्डः ॥ ३ ॥

इति नीलरुद्रोपनिषत् समाप्ता ॥ १८ ॥

'सभाप्रपादिने' सभां प्रपद्यते तच्छीलः सभाप्रपादी तस्मै सभ्याय इत्यर्थः । 'अश्वतरौ' ईषदूनमश्वत्वं ययोः तौ अश्वतरौ, गर्द्दभादश्वायां जातौ हिसरौ, अभितः सरत इति अभितः सरौ गर्द्दभौ वर्त्तते । हिरुक्तिः समाप्त्यर्था ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।

अस्पष्टपद-वाक्यानां नीलरुद्रस्य दीपिका ॥

इति नीलरुद्रोपनिषदो दीपिका सम्पूर्णा ॥ १८ ॥

---

(१) क, यस्य हरि ।

# कण्ठश्रुत्युपनिषत् ।

ओं योऽनुक्रमेण सन्न्यसति, स सन्न्यस्तो भवति । कोऽयं सन्न्यास उच्यते ? कथं सन्न्यस्तो भवति ? ।

यजुर्वेदे तु चरका द्वादशैषा कण्ठाश्रयः ।
सन्न्यासोपनिषत्तुल्या चतुःखण्डा कृतश्रुतिः ॥ १ ॥

य आश्रमानुक्रमेण सन्न्यासः, स एव मुक्त्युपयोगी, न तु सति रागे आश्रमव्युत्क्रमेण, इत्याह, योऽनुक्रमेणेति । ब्रह्मणो देवान् प्रत्युक्तिरूपा(१) आख्यायिका विद्या सम्प्रदाय-प्रदर्शनार्था । 'अनुक्रमः' "ब्रह्मचारी वेदमधीत्य" इत्यादिवक्ष्यमाणः । कोऽयमिति सन्न्यास-स्वरूपप्रश्नः । कथमिति प्रकारप्रश्नः ।

य आत्मानं क्रियाभिः सुगुप्तं करोति, मातरं पितरं भार्य्यां पुत्रान् सुहृदो बन्धूननुमोदयित्वा, ये चास्यर्त्विजस्तान् सर्वांश्च पूर्ववद्वृणीत्वा वैश्वानरीमिष्टिं कुर्य्यात्, सर्वस्वं दद्यात्, यजमानस्याङ्गान् ऋत्विजः सर्वैः पात्रैः समारोप्य,

(१) ख, देवान् प्रत्युक्ति-प्रत्युक्तिरूपा ।

'क्रियाभिः' ब्रह्मचर्य्यादारभ्य नित्य-नैमित्तिकाभिः 'सुगुप्तं' रक्षितं पापास्पृष्टम्। 'पूर्ववत्' यथा अग्निष्टोमादौ वृतवान्, तथा वृणीत्वा सन्न्यासकालेऽपि 'वैश्वानरीं' विश्वानर-देवत्यां, 'सर्वस्वं' यथायोग्यं मातादिभ्यः। यद्वा ऋत्विगभ्यः सर्वस्वं दक्षिणां दद्यात्, ऋत्विजः वृत्वेत् पूत्विक् वृणीत्वा कारणात्(१),(२)'अङ्गान्' अङ्गानि हस्त-मुख-नासिकादीनि, ऋत्विजः प्रयोज्यकर्तॄन्(१)सर्व्वैः 'पात्रैः' स्थाल्यादिभिः अधिकरणभूतैः करणैः, यथा स्थाल्या पचतीति,(३) 'समारोप्य' समारोपं कारयित्वा, अग्निषु प्राणान् समारोपयेत् इत्यन्वयः(४)। अयमर्थः। प्रेते यजमाने चितायां यस्मिन्नङ्गे यत् पात्रं स्थाप्यते, तस्याङ्गस्य तस्मिन् पात्रे ऋत्विग्भिः समारोपः कारयितव्यः। यथा स्थाल्यां दक्षिणहस्तस्य, स्रुवयोर्नासिकायाः, इत्येवं तत्तत्पात्रेषु तत्तदङ्गानां समारोपः।

**यदाहवनीये गार्हपत्ये अन्नाहार्य्य-पचने सभ्यावसथ्ययोश्च प्राणापान-व्यानोदान-समानान्, सर्वान् सर्वेषु समारोपयेत्, सर्वान् सर्वेषु समारोपयेत्।**

**प्रथमः खण्डः ॥ १ ॥**

एवं कस्मिन्नग्नौ कस्य प्राणादेः समारोपः? इत्यत आह, यदाहवनीये इति। 'आहवनीये' पूर्वदिग्भागस्थे प्राणं, 'गार्ह-

(१) ख, वत्वेत् पूत्विक् प्रकरणात्। (२) ख, प्रयोज्यकं दानसर्पैः।
(३) ख, यथा स्थाल्यां पचतीति। (४) क, समारोपय इत्यन्वय।

पत्ये' पश्चिम-दिग्भागस्थे अपानम्, 'अन्वाहार्य्य-पचने' दक्षिण-दिग्भागस्थे व्यानं, 'सभ्यावसथ्ययोश्च उत्तरदिग्भागस्थयोः क्रमेण उदान-समानौ समारोपयेत्, 'सर्वान्' प्राणान् 'सर्वेषु' अग्निषु वा। अयमङ्गानां प्राणानाञ्च समारोपो यतीनां विदेहत्व-सिद्धये, अङ्गादिषु हि पात्रादिषु समारोपितेषु शुद्धोऽव तिष्ठते ॥ १ ॥

सशिखान् केशान् निष्कृत्य, विसृज्य यज्ञोपवीतं, निष्क्रम्य, पुत्रं दृष्ट्वा, त्वं ब्रह्मा त्वं यज्ञस्त्वं सर्वमित्यनुमन्त्रयेत्। यद्यपुत्रो भवति, आत्मानमेवं ध्यात्वाऽनपेक्षमाणं प्राचीमुदीचीं वा दिशं प्रव्रजेत्, चतुर्षु वर्णेषु भैक्षचर्य्यं चरेत्, पाणिपात्रेणाशनं कुर्य्यात्, औषधवत् प्राश्नीयात्, यथालाभमश्नीयात् प्राणसन्धारणार्थं, यथा मेदोवृद्धिर्न जायते।

सशिखान् न तु शिखावर्ज्जं 'निष्कृत्य' मुण्डयित्वा, विसृज्य अप्सु, 'निष्क्रम्य' पुरत उत्तरतो वा गन्तुमारभ्य अनुमन्त्रयेत् पुत्रम्। 'एवम्' एवं ध्यात्वा अहं ब्रह्मा अहं यज्ञः अहं सर्व्वमिति। 'भैक्षचर्य्यं' भिक्षैव भैक्षं, प्रज्ञादिभ्यो णः, भिक्षायाः समूहो वा भैक्षं, भिक्षादिभ्योऽण् इत्यण्। तस्य चर्य्यं चरणं, गद-चर-यम-श्चानुपसर्गे इति यत्। 'चरेत्' आचरेत्।

कृशीभूत्वा ग्रामे एकरात्रं, नगरे पञ्चरात्रं, चतुरो मासान् वार्षिकान् ग्रामे वा नगरे वापि वसेत्, विशीर्णं

वस्त्रं वल्कलं वा प्रतिगृह्णमाणो नान्यत् प्रतिगृह्णीयात्। यद्यशक्तो भवति, यो न क्लेशः, स तप्यते तप इति।

'कृशीभूत्वा' कृशीभूयः कामादि-विकार-निरासार्थम्। 'विशीर्ण' जीर्ण, यतीनां वृहद्वस्त्र-स्वीकाराचारस्तु श्रुतिविरुद्धः। 'अन्यत्' नूतनम् अधिकं वा।

यद्यशक्तो भवति, तर्हि गृह्णीयादित्यनुषङ्गः। 'यो न क्लेशः' तपसि शीतोष्ण-क्षुधादि-सहने(१) नक्लेशः क्लेशरहितः समर्थः, स तप्यते तपः, तत् सहेतैवेत्यर्थः।

यो वा एवं क्रमेण सन्न्यसति, यो वा व्युत्तिष्ठति, किमस्य यज्ञोपवीतं? का वास्य शिखा? कथं वास्योपस्पर्शनमिति।

'एवं' मातरं पितरमित्यादि-प्रकारेण 'क्रमेण' ब्रह्मचर्य्याद्यनुक्रमेण। 'वा' अथवा यः 'व्युत्तिष्ठति' व्युत्क्रमेण सन्न्यस्यति, यदि चेतरथेत्याद्युक्तत्वात् यदहरेव विरजेदित्येवकारेणाविलम्बोक्तेश्च। किमस्येति। यज्ञोपवीताद्यभावे कथं ब्राह्मण्यम्? इति प्रश्नः। कथं वेति। परमहंसस्य पात्राभावात् 'उपस्पर्शनम्' आचमनादि।

तान् होवाच, इदमेवास्य तद्यज्ञोपवीतं(२) यदात्मध्यानं, विद्या सा शिखा, नीरैः सर्वत्रावस्थितैः कार्य्यं

---

(१) क, सहनेन। (२) क. इदमेवास्य तद्यज्ञोपवीतं।

निर्वर्त्तयन्नुदपात्रे(१) जलतीरे निकेतनं हि ब्रह्मवादिनो वदन्ति ।

'विद्या' ज्ञानम् । कथं वेत्यस्योत्तरं नीरैरिति । 'उदपात्रे' परकीये ।

अस्तमित आदित्ये कथं वास्योपस्पर्शनमिति । तान् होवाच, यथाहनि तथा रात्रौ नास्य नक्तं नवा दिवा । तदप्येतदृषिणोक्तं(२) सकृद्दिवाहैवास्मै भवति । य एवं विद्वान् नैतेनात्मानं सन्धत्ते, सन्धत्ते ।

द्वितीयः खण्डः । २ ॥

अस्तमिते इति । अत एव लिङ्गाद्रात्रौ तडाकाद्युदकं न स्प्रष्टव्यमिति गम्यते । यथाहनीति, सरागविषयः प्रतिषेध इति भावः । 'ऋषिणा' वेदेन, 'सकृद्दिवा' एकं दिनमेव नित्यं ब्रह्मदर्शितत्वात् । 'एतेन' सन्यासोपायेन, इयं शाखान्तर-छान्दोग्यश्रुतिः(३),

"नहि सन्यसनादेव सिद्धिं समधिगच्छति"-इति स्मृतेः ।

देवा ह वै समेत्य प्रजापतिमब्रुवन्, न विद्मो न विद्म इति(४) । सोऽब्रवीत् ब्रह्मिष्ठेभ्यो, मे तद्वदतो ज्ञास्यथेति ।

सन्यासेनाकृतार्थतां मन्वानास्त्वरमाणा ऊचुः, देवा ह वा इति । 'देवाः' पण्डिताः 'प्रजापतिं' गुरुम् । अब्रवीत् 'ब्रह्मिष्ठेभ्यः'

(१) ख, विवर्त्तयन्नुदपात्रेण । (२) ख, तदर्थे तदृषिणोक्तं ।

(३) क, छान्दोग्य संस्मृतिः । (४) क, विद्मो न विद्म इति ।

ब्रह्मविद्वः, तमतिशयेन ब्रुवन्तो ये ते ब्रह्मिष्ठाः, वेदनिष्ठान् देवान् प्रत्युचिवानित्यर्थः। ईप्सिततमस्यापि क्रिययाभिप्रेय-माणत्वविवक्षया सम्प्रदानत्वम्। वेदत एव ज्ञानप्राप्तिर्नान्यथेति दर्शयितुं देवानां ब्रह्मिष्ठत्व-विशेषणम्।

किमुक्तवान्? इत्याह, मे तद्विति। 'मे' मम 'वदतः' ब्रुवतः सम्बन्धेन 'तत्' ब्रह्म 'ज्ञास्यथेति' ज्ञानं प्राप्स्यथेति सोऽब्रवीत्।

**ततो वै ते ब्रह्मिष्ठा न वदन्तो न वदन्त इत्येतत् सर्वम्।**

'ततः' अनन्तरं गुरुप्रसादेन ज्ञानप्राप्त्यनन्तरं 'वै' निश्चितं 'ते' देवा ब्रह्मिष्ठा वेदवित्तमाः(१) 'न वदन्तो न वदन्तः' प्रत्येकं मौनिनः स्थिताः, यैर्यैर्ज्ञानं प्राप्तं, ते ते नोचुः कृतार्थत्वादित्यर्थः। वाक्य-ब्रवीच्छान्दसि। 'इति' उपदेशसमाप्तौ। उक्तं सन्न्यास-पूर्वकृत्य-मुपसंहरति(२) एतत् सर्वमिति। तत् 'एतत् सर्वं' परमहंस-सन्न्यास-ज्ञानं कथितमित्यर्थः।

**देवानां सार्ष्टितां सालोक्यतां सायुज्यतां गच्छति(३)। य एवं वेद, सशिखान् केशान् निष्कृत्य, विसृज्य यज्ञोप-वीतं, निष्क्रम्य, पुत्रं दृष्ट्वा, त्वं ब्रह्मा त्वं यज्ञस्त्वं वषट्-कारस्त्वमोङ्कारस्त्वं स्वाहा त्वं स्वधा त्वं धाता त्वं वि-धाता त्वं त्वष्टा त्वं प्रतिष्ठासीति। अथ पुत्रो वदति, अहं ब्रह्माऽहं यज्ञोऽहं वषट्कारोऽहमोङ्कारोऽहं स्वाहा**

(१) क, ख, वेदसत्तमाः। (२) ख, पूर्वकृत्यानमुपसंहरति। (३) ख, गच्छन्ति।

**अहं स्वधाऽहं धाताऽहं विधाताऽहं त्वष्टाऽहं प्रतिष्ठास्मीति। तान्येतानि।**

ज्ञानस्य फलमाह, देवानामिति। 'साष्टितां' समानर्द्धितां 'सालोक्यतां' सलोकतां 'सायुज्यतां' संयुक्तताम् ऐक्यं, स्वार्थस्य जन्ताभ्यां(१) भावे तल्।

परमहंसविधिः सङ्क्षेपत उक्तः, विस्तरेणाह, सशिखानिति। 'धाता' धारयिता, 'विधाता' कर्त्ता। प्रतिवचनेऽपि अहं स्वाहा अहं स्वधेति द्रष्टव्यम्। 'तान्येतानि' प्रतिवचनानीति शेषः।

**अनुव्रजन्नाश्रुमापातयेत्। यदश्रुमापातयेत्, प्रजां विद्यां छिन्द्यात्, प्रदक्षिणमावृत्य एतच्चैतच्चानवेक्षमाणाः प्रत्यायन्ति, स स्वर्ग्यो भवति, स स्वर्ग्यो भवति।**

तृतीयः खण्डः। ३॥

पितरि व्रजति नातिदूरमनुव्रजनं कर्त्तव्यं, शोकश्च न कर्त्तव्य इत्याह, अनुव्रजन्नाश्रुमिति। अश्रुपाते दोषमाह, यदिति। 'यत्' यदि, तत उदकान्तं चैत्यवृक्षपर्य्यन्तं वा गत्वा निवर्त्तमानाः 'प्रदक्षिणमावृत्य' पितरं प्रदक्षिणीकृत्य पुत्रादयः 'एतच्चैतच्च' इति वृक्षाराम-तडाकादि 'अनवेक्षमाणाः' अनवलोकयन्तः 'प्रत्यायन्ति' प्रत्यागच्छन्ति, यमुद्दिश्य न शोचन्ति, स पुमान् पित्रादिः,(२) 'स्वर्गः' नित्यसुखं मोक्षः तमनुभवति। ३॥

---

(१) ख, स्वार्थस्यजन्ताभ्यां। (२) ख, पुत्रादिः।

ब्रह्मचारी वेदमधीत्य वेदौ वेदान् वा चरित-ब्रह्मचर्य्यो दारानाहृत्य पुत्रानुत्पाद्यताननुरूपाभिर्वृत्तिभिर्वितत्येष्ट्वा च शक्तितो यज्ञैस्तस्य सन्न्यासो गुरुभिरनुज्ञातस्य बान्धवैश्च सोऽरण्यं परेत्य द्वादशरात्रं पयसाग्निहोत्रं जुहुयात्, द्वादशरात्रं पयो भक्षःस्यात्, द्वादशरात्रस्यान्तेऽग्नये वैश्वानराय प्रजापतये च प्राजापत्यं चरुं वैष्णवं त्रिकपालम्, अग्निसंस्थितानि पूर्वाणि दारुपात्राण्यग्नौ जुहुयात्, मृण्मयान्यप्सु जुहुयात्, तैजसानि गुरवे दद्यात्।

क्रमसन्न्यास-प्रकारमाह, ब्रह्मचारीति। ब्रह्मचारी सन् वेदं वेदौ वेदान् वा अधीत्येति शक्त्यपेक्षो विकल्पः। चरितं 'ब्रह्मचर्य्यं' ब्रह्मचर्य्य-व्रतानि येन, विद्या-व्रत-स्नातो न्यायागताभिः(१) 'वृत्तिभिः' जीविकाभिः 'वितत्य' विस्तृतधनाः कर्त्तव्याः इत्युक्तत्वात्, यज्ञैः शक्तित इष्ट्वा च यः स्थितः, तस्य सन्न्यासो नान्यस्य, तदुक्तं याज्ञवल्क्येन,—

"अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान्।

शक्त्या तु यज्ञकृन्मोक्षे मनः कुर्य्यात्तु नान्यथा"॥ इति।

तत्रापि विशेषो गुरुभिरिति। 'बान्धवैः' पत्न्यादिभिश्चानुज्ञातः "आश्रमादाश्रमं गच्छेत्" इति वचनात् वानप्रस्थाश्रम-

(१) ख, विद्यास्नातो व्रतस्नातो याभिः ताभिः।

पूर्वकः सन्न्यास इति, तमाद्दावाह, सोऽरण्यमिति। 'परेत्य' गत्वा। एकं द्वादशरात्रं होम-भोजने पयसा कार्य्ये इत्याह, द्वादशेति। "यदन्नः पुरुषो लोके तदन्नस्तस्य देवता" इति स्मृतेः पयसा भोजनवद्धोमोऽपि युक्तः।

सन्न्यासविधिमाह, द्वादशरात्रस्येति। अग्नये आग्नेयं, वैश्वानराय वैश्वानरं, प्रजापतये प्राजापत्यं चरुं जुहुयादित्यन्वयः। 'त्रिकपालं' त्रिषु कपालेषु संस्कृतं पुरोडाशं विष्णुदेवताकं जुहुयात्, 'अग्निसंस्थितानि' अग्न्यर्थं स्थापितानि अरण्यादीनि "यज्ञाद्-यज्ञं गच्छ" इति मन्त्रेणाग्नौ 'जुहुयात्' प्रक्षिपेत्। 'गुरवे' आचार्य्याय ऋत्विजे।

**मा त्वं मामवहाय परागाः, नाहं त्वामवहाय परागामित्येवं गार्हपत्यमेवं दक्षिणाग्निमेवमाहवनीयमरणिदेशाद्भस्ममुष्टिं पिबेदित्येके।**

अग्निप्रार्थनमाह, मात्वमिति। माम् 'अवहाय' हित्वा त्वं मा 'परागाः' परागच्छ। अहमपि त्वां हित्वा 'न परागां' न परागच्छेयमिति त्रीनग्नीन् प्रार्थयते। अरणिदेशादिति। यत्र अरणिर्दग्धा, ततो देशात् 'उद्धृत्य' गृहीत्वा मुष्टिमात्रं भस्म पिबेदित्येके।

**सशिखान् केशान् निष्कृत्य, विसृज्य यज्ञोपवीतं, भूः स्वाहेत्यप्सु जुहुयात्। अत ऊर्द्ध्वमनशनमपां प्रवेशमग्निप्रवेशं वीराध्वानं महाप्रस्थानं वृद्धाश्रमं वा गच्छेत्।**

'निष्कृत्य' समूलान् निष्काश्य स्थानाद्वहिःकृत्य, कृञ् करणे ; यद्वा कृतीच्छेदने, 'निष्कृत्य' निःशेषं छित्त्वा 'सशिखान्' शिखासहितान्, शिखापि न रक्षणीयेत्यर्थः । 'विसृज्य' कण्ठादुत्तार्य्य । अत ऊर्द्ध्वमिति । एतावत् स्वयं कृत्वा अनन्तरमनशनादि कुर्य्यात्, इच्छाविकल्पोऽयम् । 'वीराध्वानं' हि(१) युद्धे सम्मुखतयाऽकातर्य्येण मरणम् । तदुक्तम्—

"द्वाविव पुरुषौ लोके सूर्य्यमण्डल-भेदिनौ ।
परिव्राड्-योग-युक्तात्मा रणे वाभिमुखो हतः" ॥ इति ।

यद्वा वीराध्वान-नामकं तीर्थं ; तदुक्तं वायुपुराणे उत्तरखण्डे तीर्थावलिवर्णने,—

"शाङ्करं मानसञ्चैव देवखातमथापरम् ।
वीराध्वानं महापीठं पश्चिमोत्तर-दक्षिणे" ॥ इति ।

'महाप्रस्थानं' यावन्मरणमुत्तराशा-गमनम्, 'वृद्धाः' ज्ञानिनः, तेषामाश्रमं स्थानं निवासं वा गच्छेत् । अस्मिन् पक्षे वृद्धेभ्यो दीक्षामुपेयात्, दीक्षोपादाने महावाक्योपदेशो योग-यज्ञदानञ्च(२) ।

**स यः सायं प्राश्नीयत्, सोऽस्याः सायं होमः, यत् प्रातः सोऽयं प्रातः, यद्दर्शे तद्दर्शे, यत् पौर्णमास्ये तत् पौर्णमास्ये,**

---

(१) क, वीराध्वाहि । ख, वीराध्वानञ्च । (२) ख, योगदानञ्च ।

यद्वसन्ते(१) केश-श्मश्रु-लोम-नखानि वापयत्, सोऽस्याग्नि-ष्टोमः, सोऽस्याग्निष्टोमः।

चतुर्थः खण्डः। ४॥

कर्म्म-परित्याग-प्रयुक्त-प्रत्यवाय-शङ्कां निरस्यति, स य इति। अनेन हिरण्यनमनुज्ञायते, कादाचित्काभिप्रायश्चेदं, यद्दर्शं प्राप्नुयात् तद्दर्शं कर्त्तव्यं, दर्शं दृष्टि-लक्षितं(२) कर्म्म करोतीत्यर्थः। केशेति, कक्षोपस्थवर्जम्। अस्मादेव लिङ्गाद्वसन्ते क्षौरमिति(३) गम्यते। द्विरुक्तिः खण्डसमाप्त्यर्था॥ ४॥

सन्न्यस्याग्नीन् न पुनरावर्त्तयेत्, यन्मन्युर्जायामावहे-दिति। अथाध्यात्म-मन्त्रान् जपेत्, स्वस्ति सर्वजीवेभ्य इत्युक्त्वा दीक्षामुपेयात्, काषायवासः, कक्षोपस्थलोमान् वर्जयेत्; लघुमुण्डोऽसूत्रोदरपात्रं कस्मादित्यध्यात्ममस्य ध्यायत ऊर्ध्वगो वाङ्गः।

सन्न्यस्येत्यादि सन्न्यासोपनिषदि व्याख्यातम्। शाखाभेदात् क्वचित् पाठभेदः। 'इत्युक्त्वा' अभयं दत्त्वेत्यर्थः। 'दीक्षां' सन्न्यास-दीक्षाम् एतावन्तं कालं चैतन्यमेव स्थितः। कक्षोपस्थं श्रितानि 'लोमान्' लोमानि वर्जयेत्; अतएव 'लघुमुण्डः' न गुरुमुण्डन-क्रियः, लघुमुण्डं शिरो यस्य इति च। 'असूत्रः' अयज्ञोपवीतसूत्रः, छान्दसः सन्धिः। उदरपात्रं कस्मादिति प्रश्नस्त्रयविषयः, अस्यो-दरमेव पात्रम्, असूत्रत्वं, मुण्डशिरस्त्वञ्च कस्मादित्यर्थः। अध्यात्म-

(१) ख, यद्दर्शं यत्पौर्णमास्ये यद्वसन्ते। (२) क, दर्शं दृष्टिलक्षणं। (३) क, ख, क्षौमिति।

मस्य ध्यायत इति भवेदित्यन्तम्(१) उत्तरम् । 'अस्य' यतेः अध्यात्मं ध्यायतः सतः ऊर्द्धगो बाहुः 'भवेत्' वर्त्तते, प्रसिद्धोऽयमध्यात्मनिष्ठ इति किं बाह्योपवीतादिना इत्यर्थः । ऊर्द्धगोपायुरिति पाठे ऊर्द्धलोकस्यायं 'गोपायुः' रक्षकः, नास्येह लोके प्रयोजनमस्तीत्यर्थः । ऊर्द्धा 'गोपायुः' दण्डो यस्य इति वा ।

**विमुक्तमार्गो भवेदनिकेतश्चरेत्, भिक्षाशी न दद्यात् लवैकं धारयेज्जन्तु-संरक्षणार्थं वर्षावर्जमिति ।**

ननु शिखादिकं परलोकोपयोग्यपि भवत्येव इत्यत आह, विमुक्तमार्ग इति । अनेन, दक्षिणोत्तरमार्गौ विमुक्ताविहैव समवनीयत इति श्रुतेरितिभावः । भिक्षामश्नातीति भिक्षाशी, 'न दद्यात् लवैकम्' अन्नमध्ये एकं लवमपि न दद्यात् अधिकाराभावात्, 'धारयेत्' एकत्र तिष्ठेत् । किमर्थम्? जन्तुसंरक्षणार्थम्, कदा? 'वर्षावर्जं' विरोधिलक्षणया वर्षास्वित्यर्थः ।

अथवा, अनिकेतः सन् 'चरेत्' अटेदेव, वर्षावर्जं वर्षासु नाटेत् । तत् कुतः? जन्तु-संरक्षणार्थमित्यन्वयः ; वर्षास्वटने हि जन्तवो म्रियन्ते । न दद्यात् भिक्षान्नं भिक्षुकान्तराय, लवैकं धारयेदित्यत्र न इत्येव, भिक्षान्न-लवस्य सङ्ग्रहं न कुर्य्यादित्यर्थः । इति शब्दो ब्राह्मण-समाप्तौ ।

**तदपि श्लोकः**

**कुण्डिकां चमसं शिक्यं त्रिविष्टपमुपानहौ ।**
**शीतोपघातिनीं कन्थां कौपीनाच्छादनन्तथा ॥ १ ॥**

(१) ख, गो भवेदित्यन्तम् ।

पवित्रं स्नानशाटीञ्च उत्तरासङ्गमेव च ।
यज्ञोपवीतं वेदांश्च सर्व्वं तद्वर्जयेद्यतिः ॥ २ ॥
स्नानं दानं तथा शौचमद्भिः पूताभिराचरेत् ।
नदी-पुलिन-शायी स्याद्देवागारेषु वा स्वपेत् ॥ ३ ॥
नात्यर्थं सुख-दुःखाभ्यां शरीरमुपतापयेत् ।
स्तूयमानो न तुष्येत निन्दितो न शपेत् परान् ॥ ४ ॥
एतां वृत्तिमुपासन्ते घातयन्तीन्द्रियाणि च(१) ॥

पञ्चमः खण्डः ॥ ५ ॥ *

इति कण्ठश्रुतिरुपनिषत् समाप्ता ॥ १९ ॥

कुण्डिकादिकं त्रिदण्डिनः प्राप्तं परमहंसस्य निषिध्यते, कुण्डिकामित्यादिना । 'यतिः' परमहंसः । ननु स्नान-शौचादिकं पात्राद्यभावे कथं स्यात् ? अत आह, स्नानमिति । 'दानं' जलदानं प्रणवतर्पणम्; ध्यानमिति पाठे 'ध्यानं' समर्पणम् ।

---

(१) ख, तापयन्तीन्द्रियाणि यत् ।

* दीपिकाकृता स्वरचित-प्रथम-श्लोके एषा 'चतुः खण्डा' इति यदुक्तं, तद्भ्रम-विलसितम्, सर्वेषु मूलपुस्तकेषु खण्ड-पञ्चकदर्शनात्, मूलमध्ये चतुर्षु स्थानेषु द्विरुक्ति-सद्भावात्, 'द्विरुक्तिः खण्डसमाप्त्यर्था' इति, 'अन्ते द्विरुक्तिर्द्रष्टव्या' इति च, दीपिका-कारलिखनाच्च; अतः 'चतुःखण्डा' इत्यत्र पञ्चखण्डा इति भवितव्यमिति सुधीभि-र्विवेच्यम् ।

'पूताभिः' शुद्धनद्यादि-निष्ठाभिः। जनाकुले देशे शयनं निषेधति, नदीति। 'स्वपेत्' सुप्यात्। न मिष्टान्नरुचिर्नापि कृच्छ्रादिपरः स्यादित्याह, नात्यर्थमिति। गमनादि-समर्थं शरीरं धारयेदित्यर्थः। तुल्यनिन्दात्मसंस्तुतिः स्यादित्याह, स्तूयमान इति। 'घातयन्ति' अभिभवन्ति। अन्ते द्विरुक्तिर्द्रष्टव्या।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानां दीपिकेयं कण्ठश्रुतेः॥

इति कण्ठश्रुत्युपनिषदो दीपिका सम्पूर्णा॥ १९॥

---

# पिण्डोपनिषत्।

ओं देवता ऋषयः सर्व्वे ब्रह्माणमिदमब्रुवन्।

मृतस्य दीयते पिण्डं कथं गृह्णन्त्यचेतसः ? ॥ १ ॥

ओं खण्डमेकं पिण्डहेतुः सप्तविंशति-पूरणी।

पिण्डोपनिषदुद्दण्ड-वैराग्य-जननाय सा ॥ १ ॥

संसार-विमुक्तये परमहंस-सन्न्यास उक्तः; तद्रहितानां विपन्नानां का गतिः ? इति संशये वैराग्यजननाय संसारिणां पराधीनां गतिं निरूपयितुं पिण्डोपनिषदारभ्यते, देवता इति। आख्यायिका विद्या सम्प्रदायाविच्छेद-प्रदर्शनार्था। दीयते पिण्डं लोकैरिति शेषः। तच्च शरीरमन्तरेण चेतना-रहिता मृताः कथं गृह्णन्ति ? इति प्रश्नः।

भिन्ने पञ्चात्मके देहे गते पञ्चसु पञ्चधा।

हंसस्त्यक्त्वा गतो देहं कस्मिन् स्थाने व्यवस्थितः ? ॥ २ ॥

'पञ्चसु' भूतेषु विषये पञ्चधा देहे गते सति हंसः कस्मिन् स्थाने व्यवस्थितः ? इति द्वितीयः प्रश्नः।

ब्रह्मोवाच,—

अहं वसति तोयेषु अहं वसति चाग्निषु ।
अहमाकाशगो भूत्वा दिनमेकन्तु वायुगः ॥ ३ ॥

द्वितीयस्योत्तरमाह, अहमिति ।

प्रथमेन तु पिण्डेन कलानां तस्य सम्भवः ।
द्वितीयेन तु पिण्डेन मांस-त्वक्-शोणितोद्भवः ॥ ४ ॥
तृतीयेन तु पिण्डेन मतिस्तस्याभिजायते ।
चतुर्थेन तु पिण्डेन अस्थि-मज्जा प्रजायते ॥ ५ ॥
पञ्चमेन तु पिण्डेन हस्ताङ्गुल्यः शिरो मुखम् ।
षष्ठेन कृतपिण्डेन हृत्-कण्ठं तालु जायते ॥ ६ ॥
सप्तमेन तु पिण्डेन दीर्घमायुः प्रजायते ।
अष्टमेन तु पिण्डेन वाचं पुष्यति(१) वीर्य्यवान् ॥ ७ ॥
नवमेन तु पिण्डेन सर्व्वेन्द्रिय-समाहृतिः(२) ।
दशमेन तु पिण्डेन भावानां प्लवनं तथा ॥ ८ ॥
पिण्डे पिण्डे शरीरस्य(३) पिण्डदानेन सम्भवः ।
पिण्डदानेन सम्भवः ॥ इति ॥ ९ ॥

इत्यथर्व्ववेदे पिण्डोपनिषत् समाप्ता ॥ २० ॥

---

(१) क, ख, वाचां पुष्ट्यग्निवीर्य्यवान् । घ, वाचं पुष्णाति । (२) ख, समाश्रितः ।
(३) घ, ङ, पिण्डे पिण्डशरीरस्य ।

भोगाचित-शरीरोत्पत्तिद्वारा चेतनः सन् पिण्डं(१) गृह्णातीति।

आद्यस्योत्तरमाह, प्रथमेन त्विति। 'कलाः' षोड़श षष्ठ-प्रश्नोक्ताः, यथा,—

"कलाः षोड़श भूतानि प्राणोऽन्नं जन्म कर्म च।
श्रद्धा यज्ञस्तपो मन्त्रा मनो मात्रं शरीरकम्" ॥ इति।

दश पिण्डा दशसु दिनेषु पुत्रादिभिर्दीयमानाः प्रथमादि-शब्देनोक्ताः। 'भावाः' क्षुत्तृषादयः, 'प्लवनम्' उद्बोधः। अय-मर्थो गरुड़पुराणे एतच्छ्रुतिमूल एव सोपपत्तिको भगवता गरुड़ं प्रत्युपपादितः। देहावयवोत्पत्तौ च मूर्द्धादिक्रम उक्तः; तथाहि,—

"प्रथमेऽहनि यः पिण्डस्तेन मूर्द्धा प्रजायते।
ग्रीवास्कन्धं द्वितीये च (२) तृतीये हृदयं भवेत् ॥
चतुर्थे च (३) भवेत् पृष्ठिः(४) पञ्चमे नाभिरेव च।
षट्-सप्तमे कटिर्गुह्यमूरू चाप्यष्टमे तथा ॥
जानु-पादौ तु नवमे दशमेऽह्नि क्षुधा भवेत्।
देहभूतः क्षुधाविष्टो गृहद्वारे च तिष्ठति ॥
दशमेऽहनि यः पिण्डस्तं दद्यादामिषेण तु।
यतो देहे समुत्पन्ने प्रेतो(५) जीवः क्षुधान्वितः ॥

(१) क, चेतनः स पिण्ड। ख, चेतनः सन् पिण्ड। (२) क, द्वितीयेन।
(३) क, चतुर्थेन। (४) क, पृष्ठिः। ख, पृष्ठि। (५) ख, प्रीतो।

अतस्त्वामिष-वाक्येन क्षुधा तस्य न नश्यति ।
एकादशं द्वादशञ्च प्रेतो भुङ्क्ते दिनद्वयम्" ॥ इति ।
नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद-वाक्यानां पिण्डोपनिषद्दीपिका ॥

इति पिण्डोपनिषदो दीपिका सम्पूर्णा ॥ २० ॥

---

# आत्मोपनिषत्।



ओम् अथाङ्गिरा-(१) स्त्रिविधः पुरुषः ; तद्यथा,- बाह्यात्मा, अन्तरात्मा, परमात्मा चेति।

आत्मत्रयी परात्मोपनिषत् खण्डत्रयान्विता।
अष्टाविंशी ग्रन्थसङ्ख्ये शाखा शौनकवर्त्तिता ॥ १ ॥

पिण्डग्रहणे विरक्तस्य परमात्मानं बोधयितुं शाखाचन्द्र- न्यायेन आत्मद्वयं निरूप्य निरञ्जनं संसारातीतं परमात्मानं निरूपयितुमियमारभ्यते, अथाङ्गिरा इति। 'अथ' ब्रह्मणा देवर्षीन् प्रति पिण्डनिरूपणानन्तरं तद्विमोक्षार्थी अङ्गिरा उवाचेति शेषः। बाह्यात्मादयो वक्ष्यमाणलक्षणाः।

त्वगस्थि(२)मांस-मज्जा-लोमाङ्गुल्यङ्गुष्ठ-पृष्ठि-वंश-नख- गुल्फोदर-(३) नाभि-मेढ्र-कट्यूरु-कपोल-भ्रू-ललाट-बाहु- पार्श्व-(४) शिरो-धमनिकाक्षीणि श्रोत्राणि भवन्ति, जायते, म्रियते, इत्येष बाह्यात्मा नाम।

प्रथमः खण्डः ॥ १ ॥

---

(१) क, ख, ग. ङ, अथैवाङ्गिरा। (२) क, ख, त्वक् चर्म। (३) ङ गुल्मोदर- (४) क, ख, ग, भ्रुवोर्ललाटबाहु पार्श्वे।

जायते म्रियते इति, प्रत्याहारेण षड्भावविकारा यास्कोक्ता गृह्यन्ते। ते यथा, "जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते(५) नश्यति च" इति। यत्र पञ्चविंशतिस्त्वगादयो भवन्ति, षड्भावविकाराश्च, स वाह्यात्मा नाम इत्यन्वयः ॥ १ ॥

अथान्तरात्मा नाम पृथिव्यप्-तेजो-वाय्वाकाश-(६) मिच्छा-द्वेष-सुख-दुःख-काम-मोह-विकल्पनादिभिः स्मृति-लिङ्गोदात्ता-(७)ऽनुदात्त-ह्रस्व-दीर्घ-प्लुत-स्खलित(८)गर्जित-स्फुटित-मुदित-नृत्य-गीत-वादित्र-प्रलय-विजृम्भितादिभिः श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः पुराणं न्यायो मीमांसा धर्मशास्त्राणीति श्रवण-घ्राणाकर्षण-कर्मविशेषणं करोति, एषोऽन्तरात्मा नाम।

द्वितीयः खण्डः । २ ॥

पृथिव्यादि-विजृम्भितादि-पर्य्यन्तैरुपलक्षितः 'विज्ञानात्मा' बुद्धिमयः 'कर्म्म' सामान्यं श्रवणादि-लक्षणं यः करोति, सोऽन्तरात्मेत्यन्वयः । २ ॥

---

(५) क, अपरीक्षीयते । (६) क, ख, पृथिव्यपस्तेजोवाय्वाकाश- । (७) क, ख, ग, स्मृतिलिङ्ग उदात्त । (८) क, ख, ग, सवलित ।

**अथ परमात्मा नाम, यथाक्षरमुपासनीयः। स च प्राणायाम-प्रत्याहार-समाधि-योगानुमानाध्यात्म-चिन्तकम्।**

ननु परमात्मा वाङ्मनस-(१) गोचरातीतत्वात् कथं ज्ञेयः? इत्याशङ्क्याह, यथेति। 'यथाक्षरम्' यथोपदेशम् 'उपासनीयः' उपास्यो ज्ञेयः, तं त्वौपनिषदं पुरुषं पृच्छामीति तस्य वैदिकगम्यत्वात्, मनसैवानुद्रष्टव्यमिति श्रुतेः असंस्कृतेन च मनसा अग्राह्यत्वात् संस्कारानाह, प्राणायामेति। प्राणायामादिभिर्योगानुमानेन च अध्यात्मचिन्तकं प्रति प्रकाशते इति शेषः।

**वटकणिका श्यामाक-तण्डुलो बालाग्रशत-सहस्र-विकल्पनादिभिर्न लभ्यते, नोपलभ्यते, न जायते, न म्रियते, न शुष्यते, न क्लिद्यते,(२) न दह्यते, न कम्पते, न भिद्यते, न छिद्यते, निर्गुणः साक्षी भूतः शुद्धो निरवयवात्मा केवलः सूक्ष्मो निष्कलो निरञ्जनो निरभिमानः शब्द-स्पर्श-रूप-रस-गन्ध-वर्जितो निर्विकल्पो निराकाङ्क्षः।**

नन्वसौ विभुर्निःश्वासिक-प्रमाणः कथमप्रत्यक्षः? इत्याशङ्क्याह वटकणिकेति। यथा 'वटकणिका' वटबीजं सूक्ष्मापि महान्

(१) क. ख. वाङ्मनो। (२) ख. न क्लिद्यते।

वटं सूते, एवमसौ सूक्ष्मोऽपि जगत् सूते। श्यामाक-तण्डुलोऽति-सूक्ष्मोऽपि महान्तं स्तम्बं सूते, तद्वदसावित्यर्थः।

ननु बीजवद्दृष्टीनां प्रत्यक्षोऽपि किं न स्यात्? अत आह, बालाग्रेति।

"बालाग्र-शतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते"॥

इति श्रुतेः। अतिसूक्ष्मत्वात् सर्वथा अप्रत्यक्ष इत्यर्थः। न लभ्यते कर्म्मेन्द्रियैः, नोपलभ्यते ज्ञानेन्द्रियैः, जन्म-मरण-शोष-क्लेद-दाह-कम्प-भेद-च्छेद-निषेधैः क्रियामात्रं निषिद्धम्। 'साक्षी' साक्षाद्द्रष्टा 'भूतः' सिद्धः 'शुद्धः' सहजागन्तुक-मलरहितः 'निरवयवात्मा' सावयवात्मभेदशून्यः 'केवलः' सजातीय-विजातीय-भेद-शून्यः 'सूक्ष्मः' दुर्लक्ष्यः 'निष्कलः' षोडशकला-रहितः 'निरञ्जनः' आगन्तुक-मलरहितः 'निरभिमानः' अहङ्कार--दोष-रहितः शब्देति वागिन्द्रिय-दोष-रहितः 'निर्विकल्पः' मनोदोष-रहितः 'निराकाङ्क्षः' आकाङ्क्षादि-बुद्धिदोष-रहितः।

**सर्वव्यापी सोऽचिन्त्योऽवर्ण्यश्च, पुनात्यशुद्धान्यपूतानि, निष्क्रियः संस्कारो नास्ति, इत्येष परमात्मा पुरुषो नाम, एष परमात्मा पुरुषो नाम(१)।**

**तृतीयः खण्डः॥३॥**

**इत्यथर्व्ववेदे आत्मोपनिषत् समाप्ता॥२१॥**

(१) क, ख, संस्कारो नास्ति, संस्कारो नास्ति, इत्येष परमात्मा पुरुषो नाम।

ननु सूक्ष्मश्चेत् कथमाकाशादीनामात्मप्रदः? इत्यत आह, सर्वव्यापीति। अत एव विकल्पनादिभिरित्युक्तं(१) वस्तुतस्तु अणु-महत्त्वादि-परिमाण-रहित एव स्वमहिम्ना सर्व्वं व्याप्नोति भगवान्; अतएव 'सः' ईश्वरः अचिन्त्योऽवर्ण्यश्च, 'अशुद्धानि' चाण्डालादीनि 'अपूतानि' पापादिदुष्टानि सत्त्वानि 'निष्क्रियोऽपि ध्यानस्थः पुनाति। यद्यपि आगमशास्त्रे आत्मापि चतुर्थ उक्तः शरीरान्तःकरण-जीव-परमात्म-भेदेन, तथापि जीव-परमात्मनोरभेदमाश्रित्य इह त्रिविध एवोक्तः। तदुक्तं गीतासु,-

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्व्वाणि भूतानि, कूटस्थोऽक्षर उच्यते।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" ॥ इति ॥

इदमात्मचतुष्टयं प्रणवस्याकारोकार-मकारात् परं विन्दु-नाद-शक्ति-शान्ताख्यावस्था-चतुष्टयात्मकं द्रष्टव्यम्। 'संस्कारः' पूर्वप्रज्ञा, स नास्ति स्वतोऽसङ्गत्वात्। छिन्नशाः समासशर्थाः।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्ट-पद-वाक्यानामात्मोपनिषद्दीपिका ॥

इत्यात्मोपनिषदो दीपिका सम्पूर्णा ॥ २१ ॥

---

(१) ख, वागादि-विकल्पनादिभिरित्युक्तं।

# रामपूर्वतापनीयोपनिषत्।



**ओँ चिन्मयेऽस्मिन् महाविष्णौ जाते दशरथे हरौ।**
**रघोः कुलेऽखिलं राति राजते यो महीस्थितः॥ १॥**
**स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः।**
**राक्षसा येन मरणं यान्ति स्वोद्रेकतोऽथवा॥ २॥**

ओं श्रीराम-तापनीयेऽस्मिन् पञ्चत्रिंशत्तमे मते(१)।
आथर्व्वणे तथा खण्डा दश पूर्व्वाभिधे मताः॥ १॥
"यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः।
नाभिह्रदाम्बुजादासीत्(२) ब्रह्मा विश्वसृजां पतिः॥
यस्यावयव-संस्थानैः कल्पितो लोक-विस्तरः।
तद्वै भगवतो रूपं विशुद्धं सत्वमूर्जितम्(३)॥
एतन्नानावताराणां निधानं(४) वीजमव्ययम्"॥ इति स्मृतेः

(१) ख, ततः। (२) क ख, नाभिह्रदाम्बुजादासीत्। (३) क, मूर्त्तितम्। (४) क, विधान।

नारायण-कथनानन्तरं तदवतार-कथनावसरे प्राप्ते मुख्यत्वाद्रामावतारमादौ निरूपयति, चिन्मये इति। श्रीरामस्वरूपन्तु नारसिंहे निर्णीतम्। 'दशरथे' अधिकरणे 'रघोः' दिलीपात्मजस्य सूर्य्यवंशस्य कुले 'चिन्मये' ज्ञानस्वरूपे 'महाविष्णौ' नानावतार-मूलकारणे हरौ जाते सति रामाभिधा प्रवृत्तेति(१) शेषः। अनेनास्य पूर्णावतारता सूचिता। तस्य निर्व्वचनम् अखिलं रातीत्यादि।

'सः' हरिः विद्वद्भिः लोकेषु राम इति प्रकटीकृतः। 'महीस्थितः' भूमौ नित्यं वसन् 'राति' ददाति साधुभ्योऽखिलं वाञ्छितम्, 'राजते' शोभते च, इत्यन्वर्थता-श्रयणेन राम इति लोकेषु विद्वद्भिः स्मृतः। राते: प्रकृति-मात्रशेषः, महीस्थित-शब्दस्याद्याक्षरशेषः।

राक्षस-मरण-शब्दयोराद्याक्षर-शेष इत्याह, राक्षसा इति। "रामो राक्षस-मर्द्दनः" इति प्रसिद्धेः। अथवा डित्थादि-शब्दवद्यदृच्छाशब्द एवायं न क्रिया-शब्दः, गुणातिशयात्(२) प्रसिद्धिं गत इत्याह, स्वेति। 'स्वोद्रेकतः' स्वमहिमतो गुणातिशयाद्वा अनलार्कादेरिव।१॥२॥

**रामनाम भुवि ख्यातमभिरामेण वा पुनः।**
**राक्षसान् मर्त्त्यरूपेण राहुर्मनसिजं यथा॥ ३॥**

(१) क. रामभिधाय प्रवृत्ते ति। ख. रामाभिप्रवृत्ते ति।
(२) ख. एवायं न शब्दगुणातिशयात।

प्रभाहीनांस्तथा कृत्वा राज्यार्हाणां महीभृताम् ।
धर्म्ममार्गं चरित्रेण ज्ञानमार्गञ्च नामतः ॥ ४ ॥
स्वस्य(१) ध्यानेन वैराग्यमैश्वर्य्यं स्वस्य(२) पूजनात् ।
तथा रामस्य(३) रामाख्या भुवि स्यादथ तत्त्वतः ॥ ५ ॥

राम इति नाम भुवि 'ख्यातं' प्रसिद्धिमागतं, नत्वयं क्रिया-निमित्त इत्यर्थः । चतुष्टयी शब्दानां प्रवृत्तिरिति पक्षे गुण-क्रिया-जाति-शब्दवद्यदृच्छाशब्दोऽस्ति स्वरूपनिमित्तः । निमित्ता-न्तरमाह, अभिरामेणेति । रमयतीति रामः, ज्वलिति-कसन्तेभ्यो णः । विग्रहान्तरं राक्षसानिति । राक्षसान् मर्त्यरूपेण रामः, आद्याक्षरशेषः । 'मनसिजं चन्द्र' "चन्द्रमा मनसो जातः" इति मन्त्रवर्णात्, यथा प्रभाहीनं करोति, तथा राक्षसान् प्रभाहीनान् कृत्वा विख्यातो यः स राम इत्यर्थः । निमित्तान्तरमाह, राज्यार्हाणामिति । धर्म्ममार्गमिति । स्वस्य चरित्रेण श्रुतेन धर्म्ममार्गं राति, 'नामतः' उच्चारितात्(४) ज्ञान-मार्गं राति, स्वस्य ध्यानेन वैराग्यं राति, स्वस्य पूजनात् ऐश्वर्य्यं 'राति' ददाति, राज्यार्हाणां महीभृतां तथेति समुच्चये । अतो-ऽस्य रामस्य रामाख्या भुवि स्यात् । अथ 'तत्त्वतः' वस्तुतः अर्थत उच्यते इति शेषः ॥३॥४॥५

(१) क, ग, ङ, यथा । (२) क, ग, ङ यस्य । (३) क, ग, राज्यस्य ।
(४) क, उच्चारितो ।

**रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि।**
**इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ ६ ॥**

रमन्ते इति। 'अनन्ते' देश-काल-कृत-परिच्छेद-शून्ये 'नित्ये' नियते अवयव-विकार-शून्ये च, 'आनन्दे' सुखैकरूपे 'चिदात्मनि' चिद्घने अमूर्त्तब्रह्मणि 'योगिनः' निरुद्धेन्द्रिय-ग्रामाः 'रमन्ते' ध्यानेन तृप्यन्ति ; 'इति' हेतोः रामपदेन 'असावेव' दशरथात्मजः 'परं' मुख्यं ब्रह्म अभिधीयते, अधिकरणे घञ्।

ननु मूर्त्तस्य कथमानन्त्यादि? नन्वमूर्त्तस्यापि कथमानन्त्यादि? इति चेत्, समः समाधिः, अपरिदृष्टार्थ-स्वीकारस्तूभयत्रापि समः ; तस्मात् "द्वावेव ब्रह्मणो रूपे मूर्त्तञ्चामूर्त्तञ्च" इति श्रुतेरसङ्कोच एव न्यायः, वचनानि त्वपूर्वत्वादिति न्यायाद् लौकिकार्थ-बोधनं श्रुतेरलङ्कार एव ॥ ६ ॥

**चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।**
**उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना ॥ ७ ॥**

रामशब्दार्थं निरूप्य ब्रह्मणः कथं शरीरित्वमित्याशङ्क्य उत्तरमाह, चिन्मयस्येति। चिन्मयस्य ब्रह्मणः 'रूपकल्पना, मायिकं रूपमित्यर्थः। स्वरूपानतिरिक्तया मायाशक्त्या नरस्यैवैकस्यापि विरुद्ध-नानाधर्म्माविरोध इति भावः। ७ ॥

**रूपस्थानां देवतानां पुंस्त्र्यङ्गास्त्रादि-कल्पना।**

तदायुधादिकमपि कल्पितमेवेत्याह, रूपस्थानामिति। रूपे तिष्ठन्तीति रूपस्थाः, तासां, देवतानां पुंस्त्वकल्पना यथा रामः पुमान्, स्त्रीत्वकल्पना यथा सीता स्त्री, अङ्गकल्पना यथा त्रिनयन-चतुर्भुजत्वादि रुद्र-विष्णादीनाम्, अस्त्रकल्पना यथा शार्ङ्गं धनुः, नन्दकः खड्गः; आदिशब्दाद्भूषण-वाहनादि कल्पना।

द्वि चत्वारि षडष्टासां(१) दश द्वादश षोडश ॥ ८ ॥

अष्टादशापि(२) कथिता हस्ताः शङ्खादिभियताः।

सहस्रान्तास्तथा तासां वर्ण-वाहन-कल्पना ॥ ९ ॥

उक्तमर्थमुदाहरति, द्वि चत्वारीति। 'आसां' देवतानां 'द्वि' द्वौ हस्तौ कथिताविति विपरिणामोऽविभक्तिकश्च निर्द्देशः। तथा 'चत्वारि' चत्वारो हस्ताः कथिताः, यथा हरेर्लिङ्गव्यत्ययः। तथा तासां षड्भुजाः कथिताः, यथा मूर्त्तिभेदानामम्बिकाया अष्टहस्ताः पुरुषोत्तमस्य दश शङ्करस्य द्वादश षोड़शाष्टादश चण्डिकामूर्त्तिभेदानाम्। 'शङ्खादिभिः' आयुधैः। सहस्रहस्ता विश्वरूपस्य। 'वर्णाः' श्याम-श्वेतादयः, 'वाहनानि' पक्षीन्द्रादीनि तेषां कल्पना न तु वस्तुवृत्तिः ॥ ८ ॥ ९ ॥

शक्ति-सेना-कल्पना च ब्रह्मण्येवं हि पञ्चधा।

कल्पितस्य शरीरस्य तस्य सेनादि-कल्पना ॥ १० ॥*

---

(१) क, ग, ङ, षडष्टानां। (२) क, ग, घ, अष्टादशाभी।

* ग चिह्नित-मूलपुस्तके दशमश्लोकात् परं प्रथम खण्डसमाप्ति-सूचकं ऽङ्को विद्यते, नान्यत्र।

शक्तेरपि कल्पना, स्वरूपातिरिक्तायाः पृथक् शक्तेरभावात् तस्याः पार्थक्यं कल्प्यते। अथवा, प्रभु-मन्त्रोत्साह-लक्षणास्तिस्रः शक्तयः, तासां कल्पना, 'सेना' सैन्यं, तस्याः कल्पना। एवं ब्रह्मणि पञ्चधा कल्पना, रूपकल्पना।१। पुंस्त्र्यङ्गास्त्रादि-कल्पना।२। वर्णवाहन-कल्पना।३। शक्ति-कल्पना।४। सेना-कल्पना चेति।५। अथवा, ब्रह्मण्येवं हि पञ्चधेति परेणान्वेति। ब्रह्मणि पञ्चायतन-भेदेन कल्पितस्य देहस्य सतः तस्य सेनादि-कल्पना॥ १०॥

ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादि-सञ्ज्ञकः(१)॥
जप्तव्यो मन्त्रिणा नैवं विना देवः प्रसीदति॥ ११॥

'ब्रह्मादीनां' स्थावरान्तानां वाचकोऽयं 'मन्त्रः' राममन्त्रः। वक्ष्यति हि "तथैव रामबीजस्थं जगदेतच्चराचरम्" इति। यद्वा "इति रामपदेनासौ परं ब्रह्म" इत्यादीनां पूर्वोक्तानामर्थानां 'वाचकः' रामनामात्मको मन्त्रः। आदिशब्दः पूर्वोक्तसन्निवेशा-पेक्षः(२)।

यद्वा 'ब्रह्म' अद्वैत-परमानन्दात्मा, तदादीनां वक्ष्यमाण-सप्त-चत्वारिंशद्व्यूहानां, "रमन्ते योगिनोऽनन्ते(३)" इत्याद्युक्तस्य मूलव्यूहस्य च वाचकः, 'अन्वर्थ' सर्व्वार्थानुगतं ब्रह्म तत्त्वादि-प्रपञ्चजातं, तस्य 'सञ्ज्ञा' ज्ञानं यस्मात् सोऽन्वर्थसञ्ज्ञः, स्वार्थे कः, सर्व्ववाचक इत्यर्थः।

(१) ख. मर्थसञ्ज्ञकः। (२) क. पूर्वोक्तसन्निवेशापेक्षः। (३) क, ख. योगिनो यत्र।

यद्वा द्वन्द्वगर्भो बहुव्रीहिः, अन्वर्थ मन्त्रकः, आदिमन्त्रकश्च, अन्वर्थता "मननात्त्राणनान्मन्त्र" इति, "राचसा मरणं यान्ति" इत्यादिश्च; आदिमन्त्रकः आदिमन्त्रत्वात्। स च 'मन्त्रिणा' गुरुतो लब्धमन्त्रेण जप्तव्यः। विपक्षे बाधकम् एवमिति। 'एवं विना' अर्थस्मरण-पूर्वकमन्त्रजपं विना 'देवः' परमेश्वरः न प्रसीदति। ११।

क्रिया-कर्म्मेति-कर्तृणामर्थं मन्त्रो वदत्यथ(१)।
मननात्त्राणनान्मन्त्रः सर्व्ववाच्यस्य वाचकः॥ १२॥

'क्रिया' आह्वानादिरूपा, 'कर्म्म' रक्षोमारणादि, 'इति' इद-मात्मकं कर्तृणां सतां देवानाम् अर्थं मन्त्रो वदति। मन्त्रत्वं कस्मादत आह, अथेति। 'मननात्' बोधनात् 'त्राणनात्' त्राणात् मन्त्रः, त्राणस्य कारणं त्राणनं, मननेन त्रायते इति विग्रहः। आद्यः सम्पदादित्वात् क्विबन्तः, अन्त्यः सुपिस्थ इति कान्तः। सर्व्वस्य 'वाच्यस्य' वक्तव्यस्य व्यूहद्वयात्मकस्य वाचकः प्रणववत् ब्रह्माभिधायकत्वात् ब्रह्मणि च सर्व्वान्तर्भावा-दित्यर्थः॥ १२॥

सोभयस्यास्य देवस्य विग्रहो यन्त्रकल्पना।
विना यन्त्रेण चेत् पूजा देवता न प्रसीदति॥ १३॥

---

(१) कचिल्लिखितपुस्तके. क्रिया-कारक-कर्तृणामर्थमन्त्रो वदत्ययम। ग, घ चिह्नित-पुस्तकद्वये क्रिया कर्मेज्य कर्तृणामर्थं मन्त्रो वदत्ययम। घ चिह्नितपुस्तके च क्रिया कर्मेति-कर्तृणामन्त्रमर्थो वदत्यथ।

सेति। 'सा' यन्त्रकल्पना उभयस्य(१) पुम्प्रकृत्यात्मकस्य मूर्त्तामूर्त्तात्मकस्य सूक्ष्मस्थूल-व्यूहात्मकस्य वा अस्य देवस्य(२) 'विग्रहः' शरीरं, यन्त्रस्थ-देवानां सेनारूपत्वात्, तस्य सेनादि-कल्पनेति श्रुतेश्च सर्व्वदेव-शरीरमित्यर्थः(३)।

अथवा 'सः' मन्त्रः 'अभयस्य' निर्भयस्य 'देवस्य' रामस्य 'विग्रहः' शरीरं "मूर्त्तिं मूलेन(४) कल्पयेत्" इति स्मृतेः, ततो यन्त्रकल्पना कर्त्तव्या, अयं विधिः। अकरणे बाधकं, विनेति ॥ १३ ॥

**स्वभूर्ज्योतिर्मयोऽनन्तरूपी स्वेनैव भासते।**
**जीवत्वेनेदमो यस्य सृष्टि-स्थिति-लयस्य च ॥ १४ ॥**
**कारणत्वेन चिच्छक्त्या रजःसत्त्व-तमो-गुणैः।**

देवस्वरूपमाह, स्वभूरिति। 'स्वयम्' अन्यनिरपेक्षः 'भवति' विद्यते स्वभूः, 'ज्योतिर्मयः' प्रकाशात्मा, 'अनन्तः' देशतः कालतश्च परिसमाप्तिरहितः। अनन्त इत्येव वक्तव्ये रूपीतिपदं रूपवत्त्वेऽप्यनन्तताऽव्याहतिसूचनार्थम्। स्वेनैव भासते नत्वन्येन स्वप्रकाशत्वात्। अथच 'स्वभूः' विन्दुः 'ज्योतिर्मयः' रेफमिलितः आकारेण निरूपितो मध्य आलिङ्गितो राममितिमन्त्रः 'स्वेनैव' स्वात्मनैव भासते, शब्दस्य हि स्वं स्वं रूपमर्थो वाच्यश्चेति(५)। यद्वा स्फोटस्य ब्रह्मरूपत्वात्, तस्य च स्वप्रकाशत्वात्।

(१) क, उपास्य। ख, उपथ्य। (२) ख, व्यूहात्मकस्य वासुदेवस्य।
(३) ख, सर्वदेवमयं देवशरीरमित्यर्थः। (४) क, ख, मूर्त्तिं मूलेन।
(५) ख, वाच्यश्चेति।

जीवत्वेनेति। यस्य जीवत्वेन स्थित्युत्पत्ति-लयस्य च कारणत्वेन चिच्छत्तया रजः-सत्त्व-तमो-गुणैः यथासङ्ख्य-मिदं वर्त्तते, यस्य चिच्छत्तया जीवत्वेन गुणैः कारणत्वेन च 'इदं' सर्व्वं भातीत्यर्थः। कथं भूतम् इदम्? 'ओं' परमात्मरूपमेव, वस्तु-गत्या यथैवोङ्कारः,(१) तथैव रामवीजमिति।

**यथैव वटवीजस्थः(२) प्राकृतश्च महाद्रुमः ॥ १५ ॥**

**तथैव रामवीजस्थं जगदेतच्चराचरम्।**

**रेफारूढा मूर्त्तयः स्युः शक्तयस्तिस्र एव चेति ॥१६॥**

वटवीजं दृष्टान्तमाह, यथैवेति। प्राकृतः प्रकृतेर्वटवीजा-दुत्पन्नः। १४ ॥ १५ ॥

रेफारूढ़ा इति। रेफोपरिस्थाः 'रः' कृष्णः 'आ' ब्रह्मा(३) 'मः' महेश्वरः तिस्रो मूर्त्तयः, तिस्रः 'शक्तयः' उत्पत्ति-स्थिति-संहारशक्तयः। १६ ॥

**सीता-रामौ तन्मयावत्र पूज्यौ**

**जातान्याभ्यां भुवनानि द्विसप्त।**

**स्थितानि च प्रहृतान्येव(४) तेषु**

**ततो रामो मानवो माययाऽधात् ॥ १७ ॥**

---

(१) ख, यथैकार। (२) ग. वटवीजस्थः। (३) ख. ऽकृष्णः चा ब्रह्मा।
(४) ग. घ, प्रहृतान्येव।

सीता-रामौ 'तन्मयौ' प्रकृति-पुरुषमयौ अथ बीजेन[1] पूज्यौ बीजस्य मूर्त्तित्वात् "मूर्त्तिं मूलेन[2] कल्पयेत्" इत्युक्तेः। 'आभ्यां' सीतारामाभ्यां 'द्विसप्त' द्विरावृत्तानि सप्त, चतुर्दशेत्यर्थः, 'जातानि' उत्पन्नानि, 'स्थितानि च' तयोरेव स्थितिं प्राप्तानि, 'प्रहृतानि' लीनान्येव, 'तेषु' अकारोकार-मकारेषु ब्रह्म-विष्णु-महेश्वरेषु; 'ततः' कारणात् रामो 'मायया मानवोऽभात्' कपटेन मानवोऽहमिति दध्यौ।१७॥

जगत्-प्राणायात्मनेऽस्मै[3] नमः स्या-

न्नमस्त्वैक्यं प्रवदेत् प्राग्गुणेन इति ॥ १८ ॥ २ ॥

'जगत्-प्राणाय' जगतां प्राणाय आत्मने 'अस्मै' रामाय नमनं 'नमः' नमस्कारः स्यात्, कर्त्तव्य इत्यर्थः। नमस्तु कृत्वेति शेषः, नमस्कारन्तु कृत्वा 'प्राक् गुणेन' गुणेभ्यः प्राग्रूपेण ब्रह्मणा सह ऐक्यं नमस्यदेवताया वदेत्। नमस्यैक्यमिति पाठे स्पष्टोऽर्थः। इति प्रथमः खण्डसमाप्तौ। १८ ॥ २ ॥

जीवावाचि नमो नाम[4] चात्मा रामेति गीयते।

तदात्मिका या चतुर्थी तथा चायेति कथ्यते ॥ १९॥

मन्त्रपदार्थमाह, जीवावाचीति। 'नमो नाम' नम इति नाम, नम इति प्रातिपदिकम्, 'जीवावाचि' जीवभाववक्ति, तस्य

(१) क, चाथ बीजेन। (२) क, मूर्त्तिमूलेन। ख, मूर्त्तिमूले। (३) ग, तस्मै।
(४) क, जीविवाचि नमो नाम। ग, जीववाची नमो राम। घ,जीववाचि नमो नाम।

नामत्वात् नत्वाभिधानम्(१)। रामेति नाम्ना च आत्मा गीयते । 'तदात्मिका' तेन रामेण आत्मना सह(२) ऐक्यमापन्ना एकपदतां गता या चतुर्थी-विभक्तिः आयेति(३), तया तथा कथ्यते तथोच्यते, जीवात्म-परमात्मनोरैक्यमेवोच्यते ; तेन यस्तत्त्वमस्यादि-वाक्यार्थः, स एवास्य मन्त्रस्यार्थ इत्यर्थः ।१८ ॥

मन्त्रोऽयं वाचको रामो वाच्यः स्याद्योग एतयोः ।
फलदश्चैव सर्व्वेषां साधकानां न संशयः ॥ २० ॥

वाक्यार्थमाह, मन्त्रोऽयमिति । अयं मन्त्रो वाचको रामस्य; रामोऽस्य मन्त्रस्य वाच्यः स्यात् ; 'एतयोः' वाच्य-वाचकयोः 'योगः' योजनमात्मना सहैक्यापादनं, सर्व्वेषां साधकानां फलप्रदः इति निश्चितमेव, तत उक्तम्,

"देवता-गुरु-मन्त्राणां भावयेदैक्यमात्मना" । इति ।२०॥

यथा नामी वाचकेन नाम्ना योऽभिमुखो भवेत्(४) ।
तथा वीजात्मको मन्त्रो मन्त्रिणोऽभिमुखो भवेत्॥२१॥

यथेति । यथा यः 'नामी' नामवान्, स वाचकेन नाम्ना आकारितः सन् अभिमुखो भवेत् आकारयितुरितिशेषः । यद्वा, 'आयवति' आकारयति आय, अय्गतावाङ्पूर्वः क्विप्, तस्य,

(१) क, नत्या भिधानं । (२) क, तेन रामेण सह । (३) क, ख, रामायेति ।
(४) क, यथा रामो वाचकेन नाम्नो योऽभिमुखो भवेत ।

आकारयितुरित्यर्थः। तथा बीजात्मकः नामवज्ज्ञातव्यं, येन आकारितो देवो मन्त्रिणाऽभिमुखः शीघ्रफलदो भवेदिति पदार्थ-वाक्यार्थ-ज्ञानफलमुक्तम्। २१॥

**बीज-शक्ती(१) न्यसेद्दक्ष-वामयोस्तनयोरपि।**
**कीलो मध्ये(२)विना भाव्यः(३)स्ववाञ्छा-विनियोगवान्॥२२॥**

न्यासमाह, बीजेति। 'बीजम्' आद्यपदं, 'शक्तिः' उत्तरपदम्,(४) तदुक्तं शौनककल्पे,—

"जानीयात् प्रथमं वर्णं बीजं शक्तिं ततिस्तथा"। इति।

बीजं दक्षिणस्तने, शक्तिं वामस्तने न्यसेत्। केचन आयेति शक्तिमाहुः। कील इति। कीलो य इति वर्णो 'मध्ये' स्तनयोर्मध्ये विनाभाव्यः, नियमेन न्यसनीयः। न केवलं हृदि कीलो न्यास्यः, किन्तु स्वस्य 'वाञ्छा' अभिलाषो विनियोगश्च, तावपि न्यास्यावित्याह, स्वेति। प्रयोगस्तु, श्रीराम-प्रीत्यर्थं लक्ष्म्यादि-प्राप्तये वा जपे पूजायां वा विनियोग इति हृदि स्मर्त्तव्यमिति। यद्वा ननु हृदये कीलन्यासस्य किं प्रयोजनम्? अत आह, स्वेति। स्वस्य या 'वाञ्छा' साधकस्य योऽभिलाषः, तस्याः(५) यो 'विनियोगः' विशेषेण नियोगः भवेदिति(६) प्रेरणं, तद्वान् साधकेच्छापूरक इत्यर्थः। २२॥

(१) क, घ, बीजशक्तिं। (२) क, मध्यं। (३) क, ङ, भाव्य॥ (४) ख, उत्तमपदं। (५) क, ख, तस्य। (६) ख, भावयेति॥

सर्व्वेषामेव मन्त्राणामेष साधारणः क्रमः।

अत्र रामोऽनन्तरूपस्तेजसा वह्निना समः॥ २३॥

सत्वनुष्णगु(१) विश्वश्चेदग्नीषोमात्मकं जगत्।

उत्पन्नं सीतया भाति चन्द्रश्चन्द्रिकया यथा॥ २४॥

सर्व्वेषामिति। बीजं, शक्तिः, कीलकमिति त्रयं स्ववाञ्छा-विनियोगाभ्यां सहितमुक्तस्थानेषु न्यसनीयमिति, सर्वमन्त्रस्य(२) साधारणो विधिरित्यर्थः। उद्धारः शिष्टन्यासा(३) ऋष्यादयः षडङ्गानि च यथा,—

"अनन्तो न्यासतः(४) सेन्दुबीजं रामाय हृन्मनुः।

षडक्षरोऽयमादिष्टो भजतां कामदो मणिः॥

ब्रह्मा प्रोक्तो मुनिश्छन्दो गायत्रं देवता मनोः।

देशिकेन्द्रैः समाख्यातो रामो राक्षस-मर्द्दनः॥

दीर्घभाजा स्वबीजेन कुर्य्यादङ्गानि षट् क्रमात्।

ब्रह्म-रन्ध्रे भ्रुवोर्मध्ये हृन्नाभ्यन्धुषु पादयोः॥

षडक्षराणि विन्यस्येन्मन्त्रस्य मनुवित्तमः"॥ इति।

आद्यं बीजन्तु रां,(५) तस्य ध्यानमाह, अत्रेति। 'रामः' दाशरथिः, 'अनन्तरूपः' ब्रह्मरूपः 'तेजसा' बलेन वह्नितुल्यः, अथ च रामः 'अनुष्णगुना' चन्द्रेण सीतया विश्वो व्याप्तः वेष्टित-श्चेत्, तदा पुम्प्रकृत्यात्मकं जगत् सिद्धम्, अथ 'चन्द्रेण' विश्व-

(१) ख, सत्व उष्णगु॥ (२) ख, चोमिति सर्वमन्त्रस्य॥ (३) क, शिष्टान्यमाः।
(४) ख, न्यासमः। (५) बीजन्तु रः।

बिन्दुनाविष्टश्चेत्, तदा अग्नीषोमात्मकं जगत्, तद्वाचकः रामिति सिद्धम्। उत्पन्नमिति पूर्व्वेण सम्बध्यते। स रामः 'सीता'(१) लाङ्गल-पद्धतिः, सीते सीता, औणादिकस्तन् प्रत्ययः। तज्जत्वात् जनकात्मजापि सीता, तया भाति; दृष्टान्तश्चन्द्र इति(२)। २३॥२४॥

प्रकृत्या सहितः श्यामः पीतवासा जटाधरः।
द्विभुजौ(३) कुण्डली रत्नमाली धीरो धनुर्धरः॥ २५॥
प्रसन्नवदनो जेता धृष्ट्यष्टक-(४) विभूषितः।
प्रकृत्या परमेश्वर्य्या जगद्योन्याङ्किताङ्कभृत्॥ २६॥

इदानीं ध्यानार्थं देवस्वरूपमाह, प्रकृत्येति। श्यामो वर्णेन, 'धीरः' निर्भयः।

'धृष्टिः' प्रागल्भ्यं साच(५) 'अष्टकम्' अणिमाद्यष्टकञ्च, तेन 'विभूषितः' शोभितः। अथवा, धृष्ट्याद्यष्टकावरणेन(६)। 'प्रकृत्या' मूलप्रकृतिरूपया 'परमेश्वर्य्या' परमया ईश्वर्य्या जगतां 'योन्या' उत्पत्तिहेतु-भूतया 'अङ्कितः' चिह्नितः यः 'अङ्कः' उत्सङ्गः, तं बिभर्त्ति। २५॥ २६॥

हेमाभया द्विभुजया सर्व्वालङ्कृतयाचिता।
श्लिष्टः कमल-धारिण्या पुष्टः कोशलजात्मजः(७)॥२७॥*

---

(१) ख, सीता। (२) ख, दृष्टान्तो चन्द्र इति। (३) क, द्विभुजः।
(४) ख, धष्ट्यष्टक। ग, दृष्टादृष्ट। (५) क, ख, तच। (६) क, धृष्ट्याद्यष्टकावरणेन। ख, धृष्ट्याद्यष्टकावरणेन। (७) क, ग, ख, कोशलजन्मजः।
* दीपिकापुस्तकद्वय एव सप्तविंश-श्लोकात परं तृतीयखण्ड-समाप्तिसूचकोऽङ्को विद्यते, मान्यत्र।

'सर्व्वालङ्कृतयाचिता' सर्वेण अलङ्कृतेन अलङ्कारेण 'आचितया'(१) व्याप्तया । सर्व्वालङ्कृताचितया इति वक्तव्ये छान्दसो विभक्तिमध्ये प्रयोगः । यद्वा, सर्वैरलङ्कारैरलङ्कृतया, तथा 'चिता' चिच्छक्ति-रूपया । सर्व्वालङ्कृतया श्लिष्ट इति युक्तः पाठः । 'पुष्टः' विपुलाङ्गः, 'कौशलजायाः' कौशल्यायाः आत्मजः पुत्रः ॥ २७ ॥

**दक्षिणे लक्ष्मणेनाथ सधनुष्पाणिना पुनः ।**

**हेमाभेनानुजेनैव तदा कोणत्रयं भवेत् ॥ २८ ॥***

दक्षिणे इति । दक्षिणे भागे लक्ष्मणेन श्लिष्टः, अर्थात् वामे सीतया श्लिष्टः । तदुक्तम्—

"वामभागे समासीनां सीतां काञ्चन-सन्निभाम्" इति ।

'तदा' देवतात्रय उपविष्टे सति 'कोणत्रयं भवेत्' एकं त्रिकोणं भवेदित्यर्थः । अनुजेनैवेत्येवकारेण अस्मिन् त्रिकोणे देवतान्तर-पूजा वार्य्यते ॥२८॥

**तथैव तस्य मन्त्रस्य यस्याणुश्च स्वङेतया(२) ।**

**एवं त्रिकोणरूपं स्यात् तं देवा ये समाययुः ॥ २९ ॥**

---

* क, चिह्नित मूलपुस्तक एव अष्टाविंश-श्लोकात् परं तृतीयखण्डसमाप्ति-सूचकोऽङ्को विद्यते, नान्यत्र ग्रन्थे ।

(१) क, अन्वितया । (२) ङ, यथानस्य स्वङेतया । च, तथैव तस्य मन्त्रस्य यथानुस्य स्वङन्तया ।

तथैवेति। यथा बीजमुक्तम्, एवं तस्य 'मन्त्रस्य' राममन्त्रस्य शेषोऽंश उच्यते इति शेषः। तस्य कस्य? यस्य स्वङेतया सह अणुः 'मं' रामस्वरूपं शब्दः, तस्य 'ङेता' विभक्तिश्चतुर्थ्येकवचनं, तेन सह 'अणुः' सूक्ष्मो भागः नम्रांशो नतिः नमःशब्द इत्यर्थः। ङेतो रामो नमः शब्दः स्वमन्त्रशेषोऽंश इत्यर्थः। 'एवं' सति षडक्षरे मन्त्रे सिद्धे सति द्वितीयं त्रिकोणरूपं(१) स्यात्, त्रिकोणद्वये कोणषट्क-षडक्षर-समावेशार्थं, तं देवा इति। ये देवाः तं समाययुः ।२९ ॥

स्तुतिं चक्रुश्च जगतः पतिं कल्पतरौ स्थितम्।
कामरूपाय रामाय नमो माया-मयाय च ॥ ३० ॥
नमो वेदादिरूपाय ओङ्काराय नमोनमः।
रामाधाराय(२) रामाय श्रीरामायात्ममूर्त्तये ॥ ३१ ॥
जानकीदेह-भूषाय रक्षोघ्नाय शुभाङ्गिने।
भद्राय रघुवीराय दशास्यान्तक-रूपिणे ॥ ३२ ॥

द्रष्टुं लब्धावसरास्ते तं स्तुतिं स्तूयते यः, स स्तुतिः, तं 'स्तुतिं' स्तुतिविषयं चक्रुः। स्तुतिमाह, कामेति। 'कामेन' स्वेच्छया रूपं यस्य, तस्मै, 'रामा' स्त्री, तस्याः 'धाराय' धर्त्रे, रमाधारायेति युक्तः पाठः। 'शुभाङ्गिने' शुभमङ्गमस्यास्ति शुभाङ्गी, तस्मै। छान्दसत्वात् कर्म्मधारयादपि मत्वर्थीयः(३)

(१) क. द्विकोणरूपं। (२) ख, रमाधाराय। (३) क, मत्वर्थीयः।

साधुः, शुभश्चासावङ्गो चेति वा, 'अङ्गी' प्रधान-पुरुषः ।३०।३१।३२।

रामभद्र ! महेष्वास ! रघुवीर ! नृपोत्तम ! ।
भो दशास्यान्तकास्माकं रक्ष, देहि श्रियश्च ते(१) ॥ ३३॥
त्वमैश्वर्य्यं दापयाथ सम्प्रत्याखरमारणम्(२) ।
कुर्व्विति(३) स्तुत्य देवाद्यास्तेन सार्द्धं सुखं स्थिताः ॥३४॥

रामभद्र इत्यादि सम्बोधन-चतुष्टयम् । भो भगवन् 'दशास्यान्तक!' दश आस्यानि यस्य सः दशास्यः रावणः, तस्य अन्तक! अस्माकं 'रक्ष' रक्षणं कुरु, 'ते' तव श्रियश्च अस्मभ्यं देहि । यद्वा 'ते अस्मान्' त्वदीयानस्मान् श्रियं देहीत्यन्वयः । त्वम् 'ऐश्वर्य्यम्' ईश्वरभावं 'दापय' राक्षसैर्गृहीतं प्रत्यर्पय, 'अथ सम्प्रति' इदानीं सङ्क्षेपेण प्रार्थयामहे, 'आखरमारणं' खरो नाम राक्षसः, तस्य मारण-पर्य्यन्तं कुरु(४), भो दशास्यान्तक ! अस्माकं रक्षेत्यादिना प्रार्थितन्तु पौरुषं पश्चात् करिष्यसि । 'इति स्तुत्य' एवं स्तुत्वा 'देवाद्याः' मुख्यदेवाः 'तेन' रामेण सार्द्धं सुखं यथा स्यात्तथा स्थिताः रावणवधेन निजश्रीलाभं प्रतीक्षमाणाः । अन्तिस्तुत्येति पाठे 'अन्ति' समीपे स्थिता इत्यन्वयः । ३३।३४।

---

(१) ङ, रक्षां देहि श्रियश्च मे । (२) क, ग, घ, सम्प्रत्याखरिमारणं । ख, सम्प्रत्याखरमारणम् । ङ, सम्प्रत्यासुरमारणम् । (३) क, ग, कुर्व्वन्ति स्तुत्य । ख,घ,कुर्व्विति स्तुत्य । ङ, कुर्व्वन्ति स्तुतिं । (४) क, ख, कुरु पौरुषं ।

स्तुवन्त्येवं हि ऋषय-(१) स्तदा रावण आसुरः ।
रामपत्नीं वनस्थां यः स्वनिवृत्त्यर्थमाददे ॥ ३५ ॥

न केवलं देवाद्याः, किन्त्वन्येऽपीत्याह,स्तुवन्तीति। यथा च देवाः स्तुवन्ति, एवमृषयोऽपीत्यर्थः। 'तदा' खरादिषु हतेषु, रावणनामा 'आसुरः' असुर एव आसुरः 'यः' प्रसिद्धः, स रामपत्नीं वनस्थां 'स्वनिवृत्त्यर्थं' स्वविनाशार्थम् आददे ।३५॥

स रावण इति ख्यातो यद्वा रावाच्च रावणः ।
तद्व्याजेनेक्षितुं सीतां रामो लक्ष्मण एव च ॥ ३६ ॥

स इति। रामपत्नीं वनस्थामाददे यः, स रावण इति रावणपदव्युत्पत्तिः। 'यद्वा' अथवा, 'रावात्' शब्दात्, कैलास-तोलनावसरे ईश्वरेण भारे दत्ते रौति स्म; तेन रावणः; ततः पूर्वन्तु दशाननामाभूत्। तदिति। 'तत्' तस्मात्, यतः रामपत्नीमाददे, तस्मात् कारणात् सीतामीक्षितुं यद्व्याजं, तेन। सीताशब्दो दन्त्यादिस्तालव्यादिरपि। ३६॥

विचेरतुस्तदा भूमौ देवीं सन्दृश्य चासुरम् ।
हत्वा कबन्धं शबरीं गत्वा तस्याज्ञया तया(२) ॥ ३७ ॥
पूजितावीरपुत्रेण(१) भक्तेन च कपीश्वरम् ।
आहूय शंसतां सर्व्वमाद्यन्तं राम-लक्ष्मणौ ॥ ३८ ॥ *

(१) ङ, मुनयः। (२) क, ग, ङ, तथा। च, तदा।

(१) क, ङ, पूजितौ वीरपुत्रेण।

* कस्मिंश्चिन्मूलपुस्तक एव अष्टत्रिंशश्लोकात्परं चतुर्थखण्ड-समाप्ति-सूचकोऽङ्को विद्यते नान्यत्र।

विचेरतुरिति। न सीतेक्षणमुद्देश्यम्, किन्तु दशास्य-वध एवो-द्देश्यः, यदर्थं देवप्रार्थनया अवतीर्णः। 'भूमौ' उपाजदाज्यनम्त-र्हितायां विचेरतुः, 'देवी' राजपत्नीं सीतां 'सन्दृश्य' इतस्ततो विलोक्य असुरं कबन्धं हत्वा 'शबरीं' तापसीं 'गत्वा' प्राप्य तत्र तत्स्वागतं(१) गृहीत्वा 'तस्य' रामस्य आज्ञया 'तया' शबर्य्या पूजितौ सन्तौ 'ईरः' वायुः तस्य पुत्रेण(२) 'भक्तेन' भजन-परेण हनूमता कारणेन प्रयोज्यकर्त्रा वा 'कपीश्वरं' सुग्रीवम् आहूय 'शंसताम्' अशंसतां कथितवन्तौ सर्व्वम् 'आद्यन्तम्' आदिश्च अन्तश्च आद्यन्तौ तम् आद्यन्तं, वाहिताग्न्यादिषु, आदित आरभ्य अन्तं यावत्। ३७। ३८॥

**स तु रामे शङ्कितः सन् प्रत्ययार्थञ्च दुन्दुभेः।**
**विग्रहं दर्शयामास यो रामस्तमचिक्षिपत्॥ ३९॥**

ततो रामेण सुग्रीवस्य राज्ये प्रतिज्ञाते सति, स तु रामे 'शङ्कितः' बालिवधे रामस्य सामर्थ्यमस्ति नवेति सन्दिग्धः सन् 'प्रत्ययार्थं' स्वविश्वासार्थम्। 'तत्प्रत्ययार्थम्' इति पाठे 'तस्मिन्' रामे पौरुषस्य विश्वासार्थं 'दुन्दुभेः' दैत्यस्य बालिहतस्य 'विग्रहम्' अस्थिपुञ्जं रामाय दर्शयामास, अयं दैत्यो बालिना हत इति। ततो 'यः' रामो दुन्दुभेर्दृष्ट्वा, स 'तं'(३) दुन्दुभिम् 'अचिक्षिपत्' अनतिप्रयत्नेनैव क्षिप्तवान्। अथवा "यस्तु मातरिश्वनि" इति निघण्टुः; 'यः' मातरिश्वा इव वायुरिव तूलपुञ्जं, शीघ्र-कारी रामः 'तं' विग्रहम् अचिक्षिपत्। ३९॥

(१) ख, तं स्वागतं। (२) ख. तत्पुत्रेण। (३) क, दृष्टासक्तं। ख, दृष्टासतं।

सप्ततालान् विभिद्याशु मोदते राघवस्तदा।
तेन हृष्टः कपीन्द्रोऽसौ सरामस्तस्य पत्तनम्॥ ४०॥
जगामागर्जदनुजो बालिनो वेगतो गृहात्।
बाली तदा निर्जगाम तं बालिनमथाह्वे॥ ४१॥

ततो बलनिश्चये सत्यपि धानुष्कता-सन्देह-निरासार्थं सप्ततालान् एकेन बाणेन 'आशु' शीघ्रं 'विभिद्य' निर्भिद्य मोदते रघोरपत्यं 'राघवः' रामः। वर्त्तमानकाल-निर्द्देशस्तु कल्पे कल्पे एवं भवतीति द्योतनार्थम्। तेन सुग्रीवो हृष्टः सन् 'सरामः' रामसहितः 'तस्य' बालिनः 'पत्तनं' नगरं 'जगाम' गतवान्। ततः 'अगर्जत्' सिंहनादं कृतवान् 'अनुजः'. कनिष्ठः, बालिन इत्युभाभ्यां सम्बध्यते। 'वेगतः' वेगेन गृहात् जगाम, अगर्जच्चेत्यन्वयः। 'निर्जगाम' गृहान्निर्गतः। ४०।४१।

निहत्य राघवो राज्ये सुग्रीवं स्थापयेत्ततः।
हरीनाहूय(१) सुग्रीवस्त्वाह चाशाविदोऽधुना॥ ४२॥*
आदाय मैथिलीमद्य ददत स्वाशु(२) गच्छत।

'आशाविदः' दिक्कुशलान्। 'अधुना' शीघ्रं गच्छत, आशु मैथिलीमादाय अद्य ददत, 'शु' आशु स्वरूपतो वा सन्देशतो वा शु आदाय आशु ददतेत्यर्थः। शुशब्द आश्चर्य्ये.। ददत,(३) शु, आशु, इति पदच्छेदः।

(१) क, ग, घ, हरिणाहूय। (२) ग, ङ, च, ददताश्वाशु। (३) क, ख, ददतु।

* दीपिका-पुस्तकद्वये एव द्वाचत्वारिंशश्लोकात् परं पञ्चमखण्ड-समाप्ति-सूचकोऽङ्को विद्यते नान्यत्र।

**ततस्ततार हनुमानब्धिं लङ्कां समाययौ ॥ ४३ ॥**

'ततः' तदनन्तरं 'हनुमान्' ईरपुत्रः 'अब्धिं' समुद्रं 'ततार' तीर्णवान्, तीर्त्वा लङ्कां समाययौ । कथाविस्तरस्तु वाल्मीकीयाद्बोद्धव्यः । ४२ । ४३ ।

**सीतां दृष्ट्वासुरान् हत्वा पुरं दग्ध्वा तथा(१) स्वयम् ।**
**आगत्य रामाय स्वयं(२) न्यवेदयत तत्त्वतः ॥ ४४ ॥**

अशोकवनिकायां सीतां दृष्ट्वा 'असुरान्' रक्षःकुमारादीन् हत्वा 'पुरं' लङ्कां पुच्छाग्निना दग्ध्वा तथा स्वयं रामं प्रति आगत्य रामाय 'स्वयं' स्वमुखेन तत्त्वतः 'न्यवेदयत' नितरां बोधितवान् । द्विःस्वयम्पदमादरातिशयार्थम् । ४४ ।

**तदा रामः क्रोधरूपी तानाहूयाथ वानरान् ।**
**तैः सार्द्धमादायास्त्रांश्च(३) पुरीं लङ्कां समाययौ ॥ ४५ ॥**

'क्रोधरूपी' क्रोधं रूपयति निरूपयति आत्मना दर्शयति, तद्धर्मी । तैः सार्द्धं लङ्कां समाययौ । किं कृत्वा ? 'अस्त्रान्' एकोनपञ्चाशतः प्रयोग-मन्त्रान्, एकोनपञ्चाशतः संहार-मन्त्रान् विश्वामित्रोपदिष्टान् कृशाश्वसुतान्(४) 'आदाय' गृहीत्वा । ४५ ।

---

(१) च, तदा । (२) क, ग, च रामेण सह । (३) क, ग, ङ, तैः सार्द्धमादायास्त्रांश्च । च, सार्द्धमादायास्त्रांश्च स । (४) क, कृशाश्वसुतान् ।

तां दृष्ट्वा तदधीशेन सार्द्धं युद्धमकारयत् ।
घट-श्रोत्र-सहस्राक्षजिद्भ्यां युक्तं तमाहवे ॥ ४६ ॥
हत्वा विभीषणं तत्र स्थाप्याथ जनकात्मजाम् ।
आदायाङ्कस्थितां कृत्वा स्वपुरं तैर्जगाम सः ॥ ४७ ॥
ततः सिंहासनस्थः सन् द्विभुजो रघुनन्दनः ।
धनुर्धरः प्रसन्नात्मा सर्वाभरण-भूषितः ॥ ४८ ॥ *

तामिति । 'ताम्' लङ्कां दृष्ट्वा 'तदधीशेन' रावणेन सार्द्धं युद्धम् 'अकारयत्' कृतवान्, कारितवान् वानरैरिति वा । 'घट-श्रोत्रः' कुम्भकर्णः, 'सहस्राक्षजित्' इन्द्रजित् मेघनादः । 'तैः' वानरविभीषणादिभिः ।४६।४७।४८ ॥

मुद्रां ज्ञानमयीं याम्ये वामे तेजः-प्रकाशनम् ।
धृत्वा व्याख्यान-निरतश्चिन्मयः परमेश्वरः ॥ ४९ ॥

'याम्ये' दक्षिणे बाहौ । ज्ञानमुद्रा, तल्लक्षणन्तु,—
"तर्जन्यङ्गुष्ठकौ सक्तावग्रतो हृदि विन्यसेत् ।
वामं हस्ताम्बुजं वामे जानुमूर्धनि विन्यसेत् ।
ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य वल्लभा" ॥ इति ॥

वामे 'तेजः प्रकाशनं' धनुः धृत्वा, यद्वा 'प्रकाशनं तेजः' पुस्तकाख्यमुद्रां धृत्वा वाममुष्टिं स्वाभिमुखीं कृत्वा पुस्तक-मुद्रिकाव्याख्यान-निरतः स्थितः । व्याख्यानमुद्रा तु,—

* कचित्तित मूलपुस्तके अष्टचत्वारिंशश्लोकात्परं पञ्चमखण्ड समाप्ति सूचकोऽङ्को निश्यते ।

"दक्षिणाङ्गुष्ठ-तर्जन्यावग्रलग्ने पराङ्गुली:।
प्रसार्य्य संहतोत्ताना एषा व्याख्यानमुद्रिका।
रामस्य च सरस्वत्या अत्यन्तं प्रेयसी मता"॥ इति॥

ज्ञान-व्याख्यान-पुस्तकानां युगपत् सम्भवः। धनुर्मुद्रा तु,—

"वामस्य मध्यमाग्रन्तु तर्जन्यग्रे नियोजयेत्।
अनामिकां कनिष्ठाञ्च तस्याङ्गुष्ठेन पीड़येत्।
दर्शयेद्दामके स्कन्धे धनुर्मुद्रेयमीरिता"॥ इति॥ ४९॥

**उदग्-दक्षिणयोः स्वस्य(१) शत्रुघ्न-भरतौ धृतः।**
**हनूमन्तञ्च श्रोतारमग्रतः स्यात्त्रिकोणगम्॥ ५०॥**

'स्वस्य' रामस्य। धृत इत्यत्र धृतचामरौ इति पदलोपो द्रष्टव्यः। तदुक्तम्,—

"उभौ भरत-शत्रुघ्नौ पार्श्वयोर्धृतचामरौ"। इति।

यद्वा धृङ् स्थैर्य्ये, व्यत्ययेन परस्मैपदम्, छान्दसः शप्लुक्। 'धृतः' स्थिरीभूय तिष्ठतः। हनूमन्तञ्च श्रोतारं रामे व्याख्यातरि शिष्यम् 'अग्रतः' गुरोरग्रे त्रिकोणगं पूजयेदिति प्रकारः स्यात्। अथवा भरत-शत्रुघ्नौ धृतवान् रामः स्यात् अग्रतो(२) हनूमन्तञ्च धृतः स्यात्, कर्त्तरि क्तः, न लोकाव्ययेति षष्ठी-निषेधः। ५०॥

**भरताधस्तु सुग्रीवं शत्रुघ्नाधो विभीषणम्।**
**पश्चिमे लक्ष्मणं धृत्वा धृतच्छत्रं सचामरम्॥ ५१॥**

---

(१) ग, ङ, तस्य। (२) क, धृतवान् रामस्याग्रतो।

तदधस्तौ तालवृन्तकरौ त्र्यस्रं पुनर्भवेत्।
एवं षट्कोणमादौ स्वदीर्घाङ्गैरेष संयुतः ॥ ५२ ॥

'भरताधः' रामात् भरत-व्यवधानेन धृत्वा स्थापयित्वा(१) रामः कर्त्ता। 'तदधः' लक्ष्मणाधः 'तौ' भरत-शत्रुघ्नौ धृत्वा व्याख्यान-निरतः स्थित इत्यनुषङ्गः। पुनस्त्र्यस्रं भवेत्; तेन एवं षडस्रं जातम्। इदानीमावरणान्याह, आदाविति। 'एषः' देवः 'आदौ' प्रथमावरणे 'स्वदीर्घाङ्गैः' स्वस्य दीर्घाङ्गैः रां० रीं० रूं० रैं० रौं० रः इत्येतैः संयुक्तः स्यात्। ५१। ५२॥

द्वितीयं वासुदेवाद्यैराग्नेय्यादिषु संयुतः।
तृतीयं वायुसूनुञ्च सुग्रीवं भरतन्तथा ॥ ५३ ॥
विभीषणं लक्ष्मणञ्च अङ्गदञ्चारिमर्द्दनम्।
जाम्बवन्तञ्च तैर्युक्तः(२) ततो धृष्टिर्जयन्तकः ॥ ५४ ॥
विजयश्च सुराष्ट्रश्च राष्ट्रवर्द्धन एव च।
अकोपो धर्म्मपालश्च सुमन्त्रैरेभिरावृतः(३) ॥ ५५ ॥

इदं दलमूले। तृतीयमिति। वायुपुत्रादीन् प्राप्य तैर्युक्तो देवो यदा भवति, तदा तृतीयं भवेदित्यर्थः। एते पूर्वादिष्वष्टसु क्रमेण पूज्याः। 'ततः' अनन्तरं 'सुमन्त्रैः' सुमन्त्र-सहितैः एभिरावृतश्चेत्, तदा चतुर्थं भवति। धृष्टिस्थाने सृष्टिरिति केचित् पठन्ति। इदं दलाग्रे। ५३। ५४ ५५।

(१) क, ख, स्थाप्य। (२) क, घ, ङ, तैर्युक्तं। (३) च, सुमन्त्रकर्वे भिरावृतः।

सहस्रदृग्वह्नि-धर्म्म-रक्षो-वरुणानिला:(१) ।
इन्द्वीश-धात्रनन्ताश्च दशभिस्त्वेभिरावृतः ॥ ५६ ॥
वह्निस्तदायुधैः पूज्यो नलादिभि-(२) रलङ्कृतः ।
वशिष्ठ वामदेवादि-मुनिभिः समुपासितः ॥ ५७ ॥*

पञ्चममाह, सहस्रदृगिति । 'सहस्रदृक्' इन्द्रः 'धर्म्मः' यमः, 'रक्षोवरुण-वायवः' इति युक्तः पाठः । 'इन्दुः' चन्द्रः 'ईशः' ईशानः ; 'धाता' ब्रह्मा, स पूर्व्वेशानयोर्मध्ये पूज्यः ; 'अनन्तः' शेषः, स निरृति-वरुणयोर्मध्ये ; ततो वह्निः, 'तदायुधैः' इन्द्राद्यायुधैः आवृतः पूज्यः ; तदायुधान्युक्तानि, यथा,—

"वज्रं शक्तिं दण्डमसिं पाशमङ्कुशकं गदाम् ।
शूलं चक्रं पद्ममेषामायुधानि क्रमाद्विदुः" ॥ इति ।

'नलः' नाम वानरः अनलावतारः, येन बद्धः सेतुर्नलसेतुरुच्यते । आदिशब्दवाच्यान् नीलाद्यान् षोड़श दलावरणे वक्ष्यामः । वशिष्ठादिभिश्च द्वादशभिः सेवितः ; तेऽप्यावरणे पूज्या इति भावः । तानपि वक्ष्यामः ; एतेन दशावरण-पक्षः सूचितः । ५६ । ५७

(१) क, ग, ङ, ततः सहस्र दृग्वह्नि धर्म्म रक्षो-वरुणानिलाः । घ, सहस्र दृग्वह्नि-धर्म्म-रक्षो-वरुणोऽनिलः । (२) ग, नीलादिभि ।

* ग, घ, चिह्नित-पुस्तकद्वये समुपासित इत्यनन्तरं पञ्चखण्ड-समाप्ति-सूचकं चिह्नमस्ति ।

एवमुद्देशत: प्रोक्तं(१) निर्द्देशस्तस्य चाधुना(२)।

त्रिरेखापुटमालिख्य मध्ये तारद्वयं लिखेत्॥ ५८॥

एवम् 'उद्देशत:' सङ्क्षेपत: पूजनं प्रोक्तं, तस्याधुना 'निर्द्देश:' नि:शेषतो देश उपदेश: क्रियते स्पष्टतरम् धारण-यन्त्रमुपदिश्यते, तदेव चाङ्गादि-देवता-सहितं मन्त्रवर्ण सहितं पूजनयन्त्रमित्यर्थ:। त्रिधा रेखा 'त्रिरेखा' त्रिकोणं, तस्या: 'पुटं' द्वयं षट्कोणम् आलिख्य 'मध्ये' षट्कोणमध्ये 'तारद्वयं' प्रणवद्वयं सव्यवधानं लिखेत्। ५८।

तन्मध्ये वीजमालिख्य तदध: साध्यमालिखेत्।

द्वितीयान्तञ्च तस्योर्द्ध्वं(३) षष्ठ्यन्तं साधकं तथा॥५९॥

कुरुद्वयञ्च तत्पार्श्वे लिखेद्वीजान्तरे रमाम्।

तत् सर्व्वं प्रणवाभ्याञ्च वेष्टयेद्बुद्धि-वृद्धिमान्(४)॥ ६०॥

तयोर्मध्ये आद्यवीजमालिख्य तस्याध: साध्यं षट्प्रामग्रान्यतर-(५) (?) विषयमालिखेत्। कीदृशं? द्वितीया-विभक्त्यन्तं 'तस्योर्द्ध्वं' वीजस्योर्द्ध्वभागे षष्ठीविभक्त्यन्तं 'साधकं' वश्यादिकारकं लिखेत्। कुरु कुरु इति वर्णद्वयं 'तत्पार्श्वे' वीजपार्श्वे वीजस्य वाम-दक्षिणयो: लिखेत्। 'वीजान्तरे' वीजमध्ये साध्यस्योर्द्ध्वभागे 'रमां' श्रीवीजं लिखेत्। 'तत्सर्व्वं' वीजादि

(१) क, घ, प्रोक्त:। (२) घ, वाधुना। (३) घ, द्वितीयान्तं च तस्यार्द्धं।

(४) च, वेष्टयेच्छुद्ध-बुद्धिमान। (५) षड्ग्रन्थयान्यतर।

'प्रणवाभ्यां' पूर्वोक्ताभ्यां यथा वेष्टितं स्यात्, तथा लिखेत् । बुद्धेर्वृद्धिः, तद्वान् लिपिविचक्षणः । ५८ : ६० ।

**दीर्घभाजि षडस्रेषु लिखेद्बीजं हृदादिभिः ।**

**कोणपार्श्वे रमा-माये तदग्रेऽनङ्गमालिखेत् ॥ ६१ ॥**

दीर्घेति । 'षडस्रेषु' षट्कोणेषु 'हृदादिभिः' सह, हृदयाय नमः इत्यादि-जातिसहितं मूलस्य बीजं लिखेत् । कीदृशं बीजं? 'दीर्घभाजि' दीर्घान् भजति तच्छीलं दीर्घभाजि षड्दीर्घयुक्तमित्यर्थः । कोणपार्श्वे त्रिकोण-गण्डेषु रमाबीज-मायाबीजे लिखेत् । 'तदग्रे' कोणाग्रे 'अनङ्ग' कामबीजं लिखेत् । तेषामुद्धारो यथा—

"वान्तं(१) वह्नि-समारूढं वामनेत्रेन्दु-संयुतम् ।
बीजमेतच्छ्रियः प्रोक्तं चिन्तारत्नमिवापरम् ॥
नकुलीशोऽग्निमारूढो(२) वामनेत्रार्धचन्द्रवान् ।
बीजं तस्याः समाख्यातं सेवितं सिद्धिकाङ्क्षिभिः ॥
ब्रह्मा भूम्या समासीनः(३) शान्तिबिन्दु-समन्वितः ।
बीजं मनोभुवः प्रोक्तं जगत्त्रय-विमोहनम्" ॥ इति ।६१

**क्रोधं कोणाग्रान्तरेषु लिख्य मन्त्रमभितो गिरम् ।**

**वृत्तत्रयं साष्टपत्रं सरोजं(४) विलिखेत् स्वरान् ॥ ६२ ॥**

---

(१) ख, वान्तं । (२) क, नकुलीशोऽग्नि मारूढो । ख, न कुलीशोऽग्निमारूढो ।
(३) ख,ब्रह्म भूम्यासमासीनः । (४) च, सरोजे ।

**केसरेष्वष्टपत्रेषु(१) वर्गाष्टकं तथा(२) लिखेत् ।**
**तेषु मालामन्त्र-वर्णान्(३) विलिखेद्भूमि(४)-सङ्ख्यया ॥६३॥**

क्रोधमिति । 'क्रोधः' हुङ्कारः "हुं क्रोधबीजं कवचम्" इति लक्ष्मीकुलार्णवे । तं क्रोधं कोणाग्रेषु कोणान्तरेषु च 'लिख्य' लिखित्वा 'अभितः' परितः 'गिरं' सारस्वतं बीजम् ऐमिति लिखेत् । वृत्तत्रयं षट्कोणस्योपरि एकं वृत्तं, मध्ये चैकं, पत्राग्रे चैकम्, अष्टपत्र-सहितं 'सरोजं' कमलं विलिखेत् । स्वरान् केसरेषु च द्विशो लिखेत् । अष्टपत्रेषु(५) स्वरोपरि वर्गाष्टकम्(६) क-च-ट-त-प-य-श-लाख्यं लिखेत् । तेषु पत्रेषु वक्ष्यमाण-मालामन्त्र-वर्णान् षट् संख्यया विलिखेत् । ६२।६३ ॥

**अन्ते पञ्चाक्षरानेवं पुनरष्टदलं लिखेत् ।**
**तेषु नारायणाष्टार्णं(७) लिखेत् तत् केसरे(८) रमाम् ॥६४॥**

'अन्ते' चरमपत्रे पञ्चाक्षरान् तावतामेवावशिष्टत्वात् । 'एवं' पूर्वोक्त-वृत्तत्रयं साष्टपत्रमित्यादि-मार्गेण पुनरष्टदलं लिखेत्, 'तेषु' दलेषु नारायणस्य अष्टाक्षरम् ओं नमो नारायणायेति प्रत्येक-मेकैकाक्षरं लिखेत् ।

---

(१) क, ग, ङ, च, केसरे चाष्टपत्रे च ।
(२) ग, च, वर्गाष्टकमथा । (३) ग, च. मालामनोर्वर्णान् ।
(४) ग, विलिखेद्भूमि । (५) ख, चाष्टपत्रे च ।
(६) क. वर्गाष्टकं । (७) च. नारायणाष्टार्णान् ।
(८) क. ख, विलिखेत् । केसरे ।

केसरेषु 'रमां' श्रीबीजं लिखेत् *। ६४ ॥

तद्बहिर्द्वादशदलं विलिखेद्द्वादशाक्षरम्।
तथों नमो भगवते वासुदेवाय इत्ययम् ॥ ६५ ॥

'तद्बहिः' तदुपरि द्वादशदलं पद्मं विलिखेत्। द्वादशाक्षरमाह, ओं नम इति। अयं द्वादशार्णो ज्ञेय इत्यर्थः। ६५।

आदिक्षान्तान् केसरेषु वृत्ताकारेण सं लिखेत्।
तद्बहिः षोडशदलं विलिखेत् केसरे(१) ह्रियम् ॥ ६६॥
वर्म्मास्त्र-नति-संयुक्तं दलेषु द्वादशाक्षरम्।
तत्सन्धिष्वीरजादीनां मन्त्रान् मन्त्री समालिखेत् ॥ ६७ ॥
ह्रं स्रं भ्रं व्रं ल्रं श्रं जृम्भ लिखेत् सम्यक् ततो वहिः।

'आदिक्षान्तान्' अकारादि-क्षकारान्तान् वृत्ताकारेण(२) नतु वैषम्येण प्रतिकेसरं चतुरश्चतुरो लिखित्वा अन्तिमे सप्तेति(३) सम्भवः 'ह्रियं' मायां, 'वर्म्म' हुं 'अस्त्रं' फट् 'नतिः' नमः शब्दः 'दलेषु' षोड़शसु प्रत्येक-मेकैको वर्णः 'तत् सन्धिषु' षोड़शपत्र-सन्धिषु, ईरजादीनामिति। 'ईरः' वायुः, तज्जो हनुमान्, तदादीनाम् आवरणोक्तानां षोड़शानां स्वाद्याक्षरादीनि ऋकार-

* श्रीबीजं लिखेदित्यनन्तरं "दशाक्षरं पदं क्षिति शेषः" इति पाठो दीपिका-पुस्तके विद्यते; परन्तु दशाक्षरपदस्य मूलेऽविद्यमानत्वादसौ पाठो दीपिकामध्ये नैव निवेशितः।

(१) क, ख, लिखेतत् केसरे। (२) ख, विषमाकारेण। (३) क, सप्तेति।

बिन्दु-सहितानि षोड़श-वीजानि, अङ्गदस्य त्वमिति, अकोपस्या-प्यमिति, धृष्टेर्धर्म्मपालस्य धृमिति, राष्ट्रवर्द्धनस्य ऋमिति, वीजा-नि, चकारसमुच्चितानि हनुमतो ह्रमिति, सुग्रीव-सुराष्ट्रयोः स्रमिति, भरतस्य भृमिति, विभीषण-विजययोर्व्रमिति, लक्ष्मणस्य लृमिति, शत्रुमर्द्दनस्य शृमिति, जाम्बवज्जयन्तयोर्ज्रमिति, सर्व्वे-तानि पृथक् षोड़श-सन्धिस्थानेषु लिखेत्।

द्वात्रिंशारं महापद्मं(१) नाद-बिन्दु-समायुतम् ॥६८॥*
विलिखेन्मन्त्र-राजार्णान् तेषु पत्रेषु यत्नतः।
ध्यायेदष्टवसूनेकादश रुद्रांश्च तत्र वै॥ ६९ ॥

नादेति। 'नादः' अर्द्धचन्द्रः 'बिन्दुः' चन्द्रः, ताभ्यां प्रान्ते अङ्कितम्। यद्वा नाद-बिन्दु-समायुतं यथा स्यात्तथा 'मन्त्रराजा-र्णान्' नारसिंहान् सबिन्दुकान् लिखेत्।

ध्यायेदष्टवसूनिति। ते यथा,—
"ध्रुवो ध्वरश्च सोमश्च आपश्चैवानिलोऽनलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः"॥ इति।

रुद्रानिति। ते यथा,—
"वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः।
अजैकपादहिर्बुध्नः(२) पिणाकी चापराजितः॥

---

(१) ग, महाचक्रं।

* कचिन्निजमूलपुस्तके एव समायुतमित्यनन्तरं सप्तमखण्ड-समाप्ति-सूचको ऽङ्को विद्यते, नान्यत्र।

(२) क, बुंध्नः। ख, र्बध्नः।

भुवनाधीश्वरश्चैव कपाली च विशाम्पतिः।
स्थाणुर्भवश्च रुद्रश्च" इत्येकादश।*
महायशा विशाम्पतिरिति विशेषणे। ६६।६७।६८।६९॥

**द्वादशेनांश्च धातारं वषट्कारञ्च तद्बहिः।**
**भूगृहं वज्र-शूलाढ्यं रेखात्रय-समन्वितम्॥ ७०॥**

'इनान्' सूर्य्यांश्च; ते यथा,—
"धातार्य्यमा च मित्रश्च वरुणोऽंशो भगस्तथा।
इन्द्रो विवस्वान पूषा च पर्य्यन्यो दशमः स्मृतः।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः"॥

* ग्रन्थान्तरेषु रुद्रगणस्य नामान्तराणि दृश्यन्ते। तद्यथा—
अजैकपादहिर्बुध्नो विरूपाक्षः सुरेश्वरः।
जयन्तो बहुरूपश्च त्र्यम्बकोऽप्यपराजितः।
वैवस्वतश्च सावित्रो हरो रुद्रा इमे स्मृताः॥ इति जटाधरः।
"अजैकपादहिर्बुध्नस्त्वष्टा रुद्रश्च वीर्य्यवान्।
त्वष्टुश्चाप्यात्मजः पुत्रो विश्वरूपो महातपाः।
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः।
वृषाकपिश्च शम्भुश्च कपर्द्दी रैवतस्तथा।
एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः"॥
इति गरुड़पुराणम्।
"अजैकपादहिर्बुध्नो विरूपाक्षोऽथ रैवतः।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः।
सावित्रश्च जयन्तश्च पिनाकी चापराजितः।
एते रुद्राः समाख्याता एकादश गणेश्वराः"॥
इति मत्स्यपुराणम्।

इति द्वादश। धातारमिति, 'धाता' प्रथमादित्यः; अयन्तु वषट्कारस्य विशेषणम्। पुनरुक्तो वषट्कारो हि दानार्थः, दानेन लोका धीयन्ते इति वषट्कारो धाता भवति। भ्वादि-वषट्-कारान्तान् द्वात्रिंशत् पत्रेषु न्यसेत्। ततो वहिर्भागे 'भूगृहं' भूपुरं; तल्लक्षणन्तु, "भूमौ चतुरस्रं सवज्रकं पीतञ्च"(१) इति। दीक्षु वज्राढ्यं, कोणेषु शूलाढ्यञ्च। वज्रलक्षणन्तु, "चतुरस्र-सम्पात-रेखाः सम्बुद्धाष्ट-वज्राणि कुर्य्यात्"(२) इति केचित्। सम्प्रदाय-विदस्तु चतुरस्ररेखास्वेवाष्टवज्राणि कार्य्याणि इति वदन्ति। स्वरूपन्तु अन्योऽन्याभिमुखतमात्रिचक्रं रेखाद्वयं परस्पर-सम्बद्धं परस्परसम्बद्धमधोरेखाद्वय-(३) मिति केचित्। रेखेति। सात्विक-राजस-तामस-भेदेन। ७० ॥

**द्वारोपेतञ्च राश्यादि-भूषितं फणिसंयुतम्।**
**एवं मण्डलमालिख्य तस्य दिक्षु विदिक्षु च ॥ ७१ ॥**
**नारसिंहञ्च वाराहं लिखेन्मन्त्रद्वयं तथा।**
**क-ष-(४)रेफानुग्रहेन्दु-नाद-शक्त्यादिभिर्युतः ॥ ७२ ॥**

'द्वारोपेतं' मण्डपवत्, 'राश्यादि-भूषितं' ज्योतिश्चक्र-विराजितं परितो राश्यादि स्थाप्यमित्यर्थः। भूपुरमेव शूलाढ्यं

(१) क, 'भूमेश्चतुरस्रं वज्रकं पीतञ्च' इति। (२) ख, चतुरस्रं पातखाः संबद्धाष्टवज्राणि। (३) ख, परस्परसम्बद्धं वज्रं परस्परसम्बद्धं मध्यरेखाद्वय।
(४) क, ग, घ कुठ।

सद्राशिचक्रं भवति। 'फणिसंयुतं' फणिना शेषेण धृतमिति लेख्यम्। *

दिक्षु नारसिंहं विदिक्षु वाराहं लिखेत्। नारसिंहमुद्धरति, कषेति। क-ष-योगे क्षः, ततो रेफः, ततः 'अनुग्रहः' औकारः(१), 'इन्दुः' अनुस्वारः 'नादः' अनुस्वारानन्तरो रवविशेषः कांस्य-चरमध्वनिनिभः, ततः 'शक्तिः' मन्त्र-सामर्थ्यम्; आदि-शब्दात् ब्रह्म शान्ताख्यं, क्ष्रौमिति(२) रूपम्। ७१।७२॥

**यो नृसिंहः समाख्यातो ग्रह-मारण-कर्मणि(३)।**

**अन्त्यार्घीश-युतो विन्दु-नादैः(४) वीजञ्च सौकरम्॥ ७३॥**

अस्य स्वातन्त्र्यमाह, य इति। 'ग्रह-कर्म्मणि' भूतादिविमोचणे, 'मारण कर्म्मणि'-शत्रु-वधादौ। अस्य ऋष्यादिकं यथा,—

"ऋषिरत्रिश्च गायत्री छन्दः श्रीनृहरिः प्रभुः।

देवता दीर्घयुग्-वीजैनैवाङ्गं कल्पयेत् सुधीः।

ध्यानं सर्वस्य देवस्यैकलक्षं प्रजपेन्मनुम्(५)।

तद्दशांशं हुते सम्यक् घृताक्तैः पायसैः शुभैः।

अर्च्चा-होमादिकं सर्वमस्य पूर्ववदाचरेत्।

मन्त्रराजवदेवास्य प्रयोगानपि साधयेत्।

हृल्लेखा-सम्पुटं केचित् सङ्गिरन्ते मनुन्त्विमम्"॥ इति।

---

* क्वचिल्लिम-दीपिकापुस्तके एव लेख्यमित्यनन्तरम् चतुरङ्गचक्रसमाप्ति-सूचकोऽङ्को विद्यते, नान्यत्र।

(१) क, औङ्कारः। (२) ख, क्ष्रौमिति। (३) ग, ग्रहमारणकर्म्मणि।

(४) ग, अन्त्यार्द्धंशयुतो विन्दुनादैः। घ, अन्त्यार्घीशयुतो विन्दु-नादौ। च, अन्त्यार्थी प्राविशद्विन्दुनादैः। (५) मनुः।

वाराहमन्त्रमुद्धरति, अन्त्य इति:। 'अन्त्यः' केवलमातृका-र्णान्त्यो हकारः 'अर्घीशः' उकारः(१) तेन युतः, 'विन्दु-नादैः' विन्दु-नाद-शक्त्यादिभिरपि युतः। 'सौकरं' सूकरस्येदं वर्म्मा-त्मकम्। ७३ ॥

ऊङ्कारश्चात्र(२) रामस्य मालामन्त्रोऽधुनेरिता(३) ।
तारो नतिश्च निद्रायाः स्मृतिर्मेदश्च कामिका ॥ ७४ ॥
रुद्रेण संयुता वह्निर्मेधामर-विभूषिता ।
दीर्घा (४) क्रूरयुता ह्लादिन्यथो दीर्घा समानदा ॥ ७५॥
क्षुधा क्रोधिन्यमोघा च(५) विश्वमप्यथ मेधया ।
युक्ता दीर्घा ज्वालिनी च ससूक्ष्मा(६) मृत्युरूपिणी ॥७६॥
सप्रतिष्ठा(७) ह्लादिनी त्वक्ष्वेलः(८) प्रीतिश्च सामरा ।
ज्योतिस्तीक्ष्णाग्नि-संयुक्ता श्वेतानुस्वार-संयुता ॥ ७७ ॥
कामिका-पञ्चमो लान्तस्तान्तान्तो धान्त इत्यथ(९) ।
स सानन्तो(१०) दीर्घयुतो वायुः सूक्ष्मयुतो विषः ॥७८॥*

---

(१) ख, ऊकारः। (२) च, ऊङ्कारश्चात्र । (३) च, ऽधुनेरितः । (४) घ, दीर्घात्।
(५) च, क्रोधिन्यथामोघा। (६) क, ग, सुसूक्ष्मा। (७) ग, सप्रविष्टा ।
(८) क, ग, त्वक् चलः। (९) घ, इत्यपि। (१०) ग, घ, समानन्तो।
* कचिच्छिन्नमूलपुस्तके एव विष इत्यनन्तरम् अष्टम-खण्डसमाप्ति सूचकं चिह्नमस्ति, न्यत्र ।

**कामिका कामिका-रुद्र-युक्ताथोऽथ स्थिरा स ए(१)।**

दशाक्षर-राममन्त्र-वीजमाह, हुङ्कारस्तत्र रामस्येति। रामस्य दशाक्षरस्य 'हुङ्कारं' ऊश्वोकार-विन्दुसहितं हकारं वीजं जानीयात्। तस्मात् वाराहवीज-समीपे लिखेत्। दशाक्षरो यथा,—

"जानकीवल्लभायाथ भवेत् पावक-वल्लभा।

हुमादिरेष कथितो राममन्त्रो दशाक्षरः"॥ इति।

मालामन्त्रोऽधुनेरितेति। रामस्य इत्येव। अधुना रामस्य मालामन्त्रः ईरिता, लुट्, अद्यतनेऽपि छान्दसः। ईरिष्यते कथयिष्यते(२)।

'तारः' प्रणवः 'नतिः' नमः शब्दः 'निद्रायाः' भकारात् परा 'स्मृतिः' गकारः। प्रणव-कलासु प्रायेणैतानि नामानि। अत्र स्वरानुक्तौ प्रथमत्वादकारो बोद्धव्यः। 'मेदो धातुः' वकारः 'कामिका' तकारः, सा 'रुद्रेण' एकारेण, एकादशत्वात्, 'संयुता' सहिता; तेन ओं नमो भगवते इति सिद्धम्।

'वह्निः' रेफः 'मेधा' घकारः, सा 'अमरविभूषिता' अमरः उकारः, तेन 'विभूषिता' शोभमाना; तेन रघु इति सिद्धम्।

'दीर्घा' कला नकारः 'अङ्करेण' अनुस्वारेण संयुता नं, 'ह्लादिनी' दकारः, 'अथो' अनन्तरं 'दीर्घा' नकारः, सा

---

(१) क, युक्तायोऽप्यस्थिरेरुथा। ग, युक्तायाँप्यस्थिरा मथे। घ, युक्ताख्योऽपि स्थिरा स ए। (२) क, कथिते, ख, कथाते।

'समानदा' मानदया कलया आकारेण सह वर्त्तमाना, 'क्षुधा' यकारः; तेन नन्दनाय इति सिद्धम्।

'क्रोधिनी' रेफः 'अमोघा' क्षकारः। अनन्ता चेति युक्तः पाठः, प्रणवकलासु अनन्तायाः क्षकार-कलात्वात्, कौर्म्यादिष्व-मोघायास्तत्सर्व्वाक्षर-कालकलात्वाच्च। 'विश्वम्' ओकारः, 'अपि' अथ, 'मेधया' धकारेण युक्ता 'दीर्घा' नकारः 'ज्वालिनी' वह्नि-कला वकारः सा 'ससूक्ष्मा' सूक्ष्मेण श्रीकण्ठादि-तृतीयरूपेण इकारेण(१) सहिता 'मृत्युरूपिणी' मृत्युः प्रणवकला यकारः, 'सप्रतिष्ठा' प्रतिष्ठया आकारेण सहिता 'ह्लादिनी' दकारः 'त्वक्' यकारः; तेन रक्षोघ्न-विशदायेति सिद्धम्।

'क्ष्वेलः'(२) मकारः 'प्रीतिः' धकारश्च 'सामरा' सौकारा, 'ज्योतिः' रेफः तीक्ष्णा पकारः 'अग्नि-संयुक्ता' रेफसंयुक्ता 'श्वेता' सकारः 'अनुस्वार-संयुता' सानुस्वारा 'कामिका पञ्चमः' तकार-पञ्चमः(३) नकारः 'लान्तः' वकारः 'तान्तान्तः' तस्यान्तः थकारः, तस्यान्तो दकारः 'धान्तः' नकारः, सः सानन्तः'(४) अनन्तेन आकारेण सहितः 'दीर्घस्वरेण' आकारेण युतः 'वायुः' यकारः सूक्ष्मेण इकारेण युतः 'विषः' मकारः 'कामिका' तकारः, पुनः सैव 'रुद्रेण' एकारेण युक्ता, 'अथो अथ' अनन्तरं 'स्थिरा' जकारः, ततः सः, सकारात् पर एकारः; तेन मधुर-प्रसन्न-वदनायामित-तेजसे इति सिद्धम्।

---

(१) ख. रुद्रेण इकारेण। (२) क, क्ष्वेलः। (३) क, तकारात् पञ्चमः।
(४) क, समानन्तः।

तापिनी दीर्घयुक्ता भूरनिलोऽनन्तगोऽनलः ॥ ७९ ॥
नारायणात्मकः कालः प्राणोऽम्भो विद्यया युतम्(१) ।
पीता रतिस्तथा लान्तो योन्या युक्तोऽन्ततो नतिः ॥८०॥

अत्र सन्धिर्नकार्थ्यः। 'तापिनी' वकारः दीर्घयुक्ता 'भूः' लकारः, 'अनिलः' यकारः; तेन वलायेति । 'अनन्तगः' आकारगः 'अनलः' रेफ, 'नारायणः' आकारः, तदात्मकः 'कालः' मकारः, 'प्राणः' यकारः; तेन रामायेति सिद्धम् । 'अम्भः' वकारः 'विद्यया' इकारेण 'युतं' सहितं, 'पीता' षकारः, 'रतिः' णकारः, तेन 'युता' संयुता, 'लान्तः' वकारः 'योन्या' एकारेण युक्तः; तेन विष्णवे इति सिद्धम् । 'अन्ततः' अन्ते 'नतिः' नमः शब्दः ।७४।७५।७६।७७।७८।७९।८० ॥

सप्तचत्वारिंशद्वर्णो गुणान्तः सगुणः स्वयम्(२) ।
राज्याभिषिक्तस्य तस्य रामस्योक्तक्रमाल्लिखेत् ॥ ८१॥

एवं सप्तचत्वारिंशत् 'अर्णः' वर्णः(३) । 'गुणान्तः सगुणः स्वयम्' स्वयं सगुणोऽपि भक्तानां 'गुणान्तः' त्रैगुण्यनाशकः मोक्षदत्वात् । अथवा, 'गुणान्तः' वीजत्रयान्तः 'सगुणः' वीजत्रयादिः । तदुक्तम्,—

---

(१) ख, युतः । (२) ख, सप्तचत्वारिंशद्वर्णो गुणान्तः सगणस्स्वयम् ।
(३) ख, सप्तचत्वारिंशद्वर्णो मालामन्त्रः अर्णो वर्णः ।

"तारकं(१) कामबीजैश्च सम्पुटं प्रजपेदमुम्।
शिरस्याननवक्त्रे च(२) भ्रूमध्ये शिवयोऽपि च॥
श्रोत्रयोर्घ्राणयोश्चैव गण्डयो रोष्ठयोरपि।
दन्तयोरास्यदेशे च दोः-पत-सन्ध्यग्रकेषु च॥
कण्ठे हृदि स्तनद्वन्द्वे पार्श्वयोः पृष्ठदेशतः।
जठरे चाप्यधिष्ठाने गुह्ये वर्णान् प्रविन्यसेत्।
सप्त षट् सप्तदश षड् वद्रसङ्कैः षड़ङ्गकम्॥
उन्निद्र-नीलकमलामलकान्ति-मञ्ज-
चापासि-बाण-करमम्बुज-पत्रनेत्रम्।
पीताम्बरं स्मितसुधा-मधुरं मुरारिं
सञ्चिन्तयेन्मिथिलराज-सुता-सहायम्॥
जपेद्द्वादश-लक्षञ्च ध्यात्वैवं विजितेन्द्रियः।
विल्वैः फलैः प्रसूनैश्च पत्रैस्त्रिमधुर-प्लुतैः॥
मधुरत्रय-युक्तेन पयोऽन्नेन सिताम्बुजैः।
होमं दशांशतः कुर्य्यात् तथा सर्व्वत्र तर्पणम्(३)॥
प्राक् प्रोक्ते पूजयेत् पीठे पूज्याश्च वाद्यदेवताम्(४)।
प्रथमाङ्गा रतिः प्रोक्ता(५) सप्तमो ज्या समीरिता॥
लक्ष्मणो भरतश्चैव शत्रुघ्नश्च हनूमता।
सुग्रीवः पञ्चमः प्रोक्तः षष्ट उक्तो विभीषणः॥
अङ्गदः सप्तमः प्रोक्तो नीलोऽष्टम उदाहृतः।

(१) क, तारका। ख, तां खान्। (२) क, शिरस्याननवक्त्रे च।
(३) ख, सर्वप्रतर्पणम्। (४) ख, पूर्व्वं वै वाद्य देवतम्।
(५) क, प्रथमाङ्गाविति; प्रोक्ता।

नारदश्च वशिष्ठश्च वामदेवस्तृतीयकः(१) ॥
जावालो गौतमश्चापि भरद्वाजोऽथ कश्यपः ।
वाल्मीकिश्चाष्टमः प्रोक्तो लक्ष्मीश्चाथ सरस्वती ॥
रतिः प्रीतिः कीर्त्ति-कान्ती तुष्टिः पुष्टिरिमाः क्रमात् ।
दृष्टिर्जयन्त-विजयौ सिद्धार्थः कार्य्य-साधकः ॥
अशोकश्चैव सर्व्वस्यां(२) श्रीवत्सश्च गदा तथा ।
पाञ्चजन्यः कौस्तुभाख्यो वनमाला च दक्षिणे ॥
उत्तरे चक्र-पद्मे च शार्ङ्गं बाणं सखड्गकम् ।
पश्चिमे धर्म्म-गरुड़-धर्म्मपाल-सुमन्त्रकान् ॥

इत्युक्तक्रमादेकैकस्मिन् षट् षट् मन्त्रे पञ्चेति क्रमेण अस्यो-
द्धारो(३) ऽन्यत्राप्युक्तः ।

श्रीं नमो भगवते ब्रूयाच्चतुर्थ्यां रघुनन्दनम् ।
रक्षोघ्न-विशदायेति मधुरादि समीपयेत् ।।
प्रसन्न-वदनायेति पश्चादमित-तेजसे ।
बलाय पश्चाद्रामाय विष्णवे तदनन्तरम् ॥
प्रणवादि-नमोऽन्तोऽयं मालामनुरुदीरितः ॥ ८१ ॥

इदं सर्व्वात्मकं यन्त्रं प्रागुक्तमृषि-सेवितम् ।
सेवकानां मोक्षकरमायुरारोग्य-वर्द्धनम् ॥ ८२ ॥
अपुत्रिणां पुत्रदञ्च बहुना किमनेन वै ।
प्राप्नुवन्ति क्षणात् सम्यगत्र धर्म्मादिकानपि ॥ ८३ ॥

---

(१) ख, स्ततोमयः । (२) ख, पूर्वस्यां । (३) क, चतोद्वारः ।

'सर्व्वात्मकम्' त्रैलोक्यमयं 'प्रागुक्तं' पूर्व्वाचार्य्यैरुक्तम्, 'अनेन' उक्तेन, 'धर्म्मादिकान्' धर्म्मार्थ-काम-मोक्षान्, धर्म्म-ज्ञान-वैराग्यै-श्वर्य्याणि वा, 'अपि' शब्दात् अणिमादि-सिद्धिरपि। ८२।८३॥

**इदं रहस्यं परममीश्वरेणापि दुर्गमम्।**
**एवं(१) यन्त्रं समाख्यातं न देयं प्राकृते जने॥ इति॥८४॥***

'ईश्वरेण' सर्व्वशक्तिमतापि उपदेशं विना 'दुर्गमम्' अगम्यम्। इति शब्दो यन्त्राभिधान-(२)समाप्तौ। ८४॥

**भूतादिकं शोधयेद्द्वारपूजां कृत्वा पद्माद्यासनस्थः प्रसन्नः।**

भूतादिकमिति। 'भूतानि' पृथिव्यादीनि पञ्च;† आदि-शब्दान्महदहङ्कारादि, तत् 'शोधयेत्' आत्मनि विलापयेत्। भूतशुद्धिः प्राणप्रतिष्ठाया मातृकान्यासस्य चोपलक्षणम्; भूतशुद्धिप्राणप्रतिष्ठे मातृकान्यासञ्च कुर्य्यादित्यर्थः। तत् करणप्रकारस्तु,—

भूतशुद्धिं ततः कुर्य्यात्तत्प्रकारोऽधुनोच्यते।
पादादिजानुपर्य्यन्तं चतुरस्रं सवज्रकम्॥
लंयुतं पीतवर्णञ्च भुवः स्थानं विचिन्तयेत्।

---

* कचिह्नितमूलपुस्तके, दीपिका-पुस्तकद्वये च, इति शब्दात् परं नवमखण्ड-समाप्ति-सूचकोऽङ्को विद्यते। (१) च, इदम्। (२) ख, यन्त्रविधान-।

† पञ्च इत्यादि 'व्योममर्द्धेन्दु-संयुतम्' इत्यन्तं सर्व्वं खचिह्नित—दीपिका—पुस्तके नास्ति। कचिह्नित—दीपिकापुस्तके विद्यमानमपि शुद्धिविरहितम्, बह्वक्षरा खण्डिताश्च। वर्णशुद्धिर्यथाज्ञानं कृता। खण्डिता अंशास्तु ग्रन्थान्तरेष्वप्यप्राप्ततया तथैव स्थिताः।

जानो-(१) रानाभि चन्द्रार्द्धनिभं रामेण(२) लाञ्छितम् ॥
शुक्लवर्णं स्वबीजेन युतं ध्यायेदपां स्थलम्।
नाभितः कण्ठपर्य्यन्तं त्रिकोणं रक्तवर्णकम् ॥
स्वबीजेन युतं ०००० वह्नेस्तु मण्डलम्।
कण्ठाद्भ्रूमध्य-पर्य्यन्तं कृष्णं वायोस्तु मण्डलम् ॥
षट्-कोणं विन्दुभिः षड्भिर्युतं बीजेन चिन्तयेत्।
भ्रूमध्याद्-ब्रह्म-रन्ध्रान्तं वर्त्तुलं ध्वज-लाञ्छितम् ॥
धूम्रवर्णं स्वबीजेन युक्तं ध्यायेन्नभस्तलम्।
एवं ध्यात्वा पुनस्तानि भूतानि प्रविलापयेत् ॥
पृथ्वीमप्सु च ता (३) वह्नौ वह्निं वायौ समीरणम्।
प्रविलाप्य तथाकाशेऽप्याकाशं प्रकृतौ ततः ॥
अपर-ब्रह्मरूपां तां मायाशक्तिं परात्मनि।
इत्थं समस्तदेहादि-प्रपञ्चं परमात्मनि ॥
प्रविलाप्य पर ब्रह्मरूपस्तिष्ठेत् कियत्-क्षणम्।
पुनरुत्पादयेद्देहं पवित्रं परमात्मनः ॥
शब्दब्रह्मात्मिका जाता प्रकृतिः परमात्मनः।
अजायत जगन्मातुराकाशं ० ० ० ० ०।
नभसोऽभित्र ० ० ० ०।
समीरणाद्भूद्वह्निर्वह्नेरापस्ततः ०००।
तोयमेभ्योऽपि भूतेभ्यस्तेजोरूपं कलेवरम्।
देवताराधने योग्यमुत्पन्नमिति भावयेत्।

(१) क, आम्बो-। (२) क, रायमन। (३) क, ताम्।

तस्मिन् देहे परात्मानं सर्व्वज्ञं सर्वशक्तिमत् ।
समस्त-देवतारूपं सर्व्वमन्त्रमयं शुभम् ।
आत्मरूपेण देहे स्वे वीजभावेन तिष्ठति ।
इत्येषा भावना मुख्या भूतशुद्धिरितीरिता ॥
अथवान्य-प्रकारेण भूतशुद्धिर्विधीयते ।
धर्म्मकन्द-समुद्भूतं जानता लं सुशोभनम् ।
ऐश्वर्य्याष्टदलञ्चैव परं वैराग्य-कर्णिकम् ।
स्वीयहृत्-कमलं ध्यायेत् प्रणवेन विकाशितम् ।
कृत्वा तत्कर्णिकासंस्थं प्रदीपकलिकाकृतिम् ।
सुषुम्णा वर्त्मना तच्च परमात्मनि योजयेत् ।
योगयुक्तेन विधिना सोऽहं मन्त्रेण साधकः ।
तत्रैव सर्वतत्त्वानि विलीनानि विचिन्तयेत् ।
पुरुषाभं ततः पापमनादिभव-सञ्चितम् ।
ब्रह्महत्या शिरस्कञ्च स्वर्णस्तेयं भुजद्वयम् ।
सुरापानहृदा युक्तं गुरुतल्प-कटिद्वयम् ।
तत्संयोगि-पदद्वन्द्वमङ्ग-प्रत्यङ्ग-पातकम् ।
उपपातक-रोमाणं रक्त-श्मश्रु-विलोचनम् ।
खड्ग-चर्म्म-धरं कृष्णं कुक्षौ दक्षिणतः स्मरेत् ।*
ततः संशोधयेद्देहं पूरकादि-क्रमेण वै ।
विधाय प्राणसंरोधं वायुवीजेन वायुना ।

---

* खड्ग-चर्म्मधरं पापमङ्गुष्ठ-परिमाणकम् ।
अधोमुखं कृष्णवर्णं वामकुक्षौ विचिन्तयेत् ।
इति प्राणतोषिण्यां राघवभट्टधृतः पाठः ।

वह्निबीजेन तेनैव सन्दहेत् सकलां तनुम्।
भस्म तद्घ्राणमार्गेण निर्गतं चिन्तयेत् सुधीः।
ततो वमिति बीजेन प्लावयेत् सकलां तनुम्।
सञ्जाते निर्म्मले देहे देवतोपासन-क्षमे।
आत्मजीवादि-तत्वानि स्वस्थानं प्रापयेत्ततः।
आत्मानं हृदयाम्भोजमानयेत् परमात्मनः।
हंसमन्त्रेण विधिवदेवावश्यं विधीयते।
भूतशुद्धि-विहीनेन कृता पूजाभिचारिका।
विपरीतं फलं दद्यादभक्त्या पूजनं यथा।
भूतशुद्धिं विधायेत्थं ततो वै स्थापयेदसून्।
पाशाङ्कुशेन पुटितां शक्तिमादौ समुच्चरेत्।
यकारादि-सकारान्तान बिन्दु-मस्तक-लाञ्छितान्।
तदन्त उच्चरेत् प्राज्ञो व्योममर्द्धेन्दु-संयुतम्।
ततो हंस-परात्मानौ ततोऽमुष्य(१) पदं वदेत्।
प्राणा इति वदेत् पश्चादिह प्राणास्ततः परम्।
अमुष्य जीव इह तु स्थितोऽमुष्य पदं ततः।
सर्वेन्द्रियाण्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः।
श्रोत्र-घ्राण-पदे प्राणा इहागत्य सुखं चिरम्।
तिष्ठन्त्वग्निवधूः पूर्वं प्रत्यमुष्यपदं (२)बुधः।
पाशाद्यानि प्रयोज्यैवं प्राणमन्त्रं समुच्चरेत्।
ब्रह्मर्षिरस्य च्छन्दस्तु विराट् प्राणास्तु देवता।
प्रणवोऽग्निर्वधूर्बीजं शक्तिरुक्ता मनीषिभिः।

---

(१) क, ऽमुष्य। एवं सर्वत्र। (२) क, प्रत्यमुष्यपदं।

शिरो-वदन-हृद्गुह्य-पाद-पृष्ठादि(१) विन्यसेत्।
अमुष्येति पदस्थाने साध्यनाम समुच्चरेत्।
निर्जपेत् साध्य-संस्पर्शं कृत्वा मन्त्रमुदारधीः।
एष प्राण-प्रतिष्ठायाः प्रकारः परिकीर्त्तितः।

आं पाशः, क्रीं माया, क्रोम् अङ्कुशः। मातृकान्यासो यथ ऋष्यादिपूर्वः।

ऋषिर्ब्रह्मा समुद्दिष्टो गायत्री च्छन्द ईरितम्।
सरस्वती समाख्याता देवता देशिकोत्तमैः।
अक्लीव-ह्रस्व-दीर्घान्तर्गतैः षड्वर्गकैः क्रमात्।
षड़ङ्गानि विधेयानि जातियुक्तानि देशिकैः॥
पञ्चाशल्लिपिभिर्विभक्त-मुख-दोः-पन्मध्य-वक्षस्थलां
भास्वन्मौलि-निबद्ध-चन्द्र-शकलामापीन-तुङ्गस्तनीम्।
मुद्रामक्षगुणं सुधाढ्य-कलशं विद्याञ्च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतां संश्रये॥
ललाट-मुख-वृत्ताक्षि-श्रुति-घ्राणेषु गण्डयोः।
ओष्ठ-दन्तोत्तमाङ्गास्ये दोः-पत्-सन्ध्यग्रकेषु च।
पार्श्वतः पृष्ठतो नाभौ जठरे हृदयेऽंसके।
ककुद्यंसे च हृत्पूर्वं पाणौ पादयुगे ततः।
जठराननयोर्न्यस्येन्मातृकार्णान् यथाक्रमात्॥ इति।

द्वारपूजां कृत्वेति। सा यथा,—

देशिको विधिवत् स्नात्वा कृत्वा पूर्वाह्निकाः क्रियाः।
गायादलङ्कृतो मौनी यागार्थं यागमण्डपम्॥

---

(१) क, प्रष्ठादि। ख, पादहृत्यादि।

आचम्य विधिवत्तत्र सामान्यार्घ्यं विधाय च ।
द्वारमस्त्राम्बुभिः प्रोक्ष्य द्वारपूजां समाचरेत् ॥
ऊर्द्धोडुम्बरके विघ्नं महालक्ष्मीः सरस्वती ।
ततो दक्षिण-शाखायां विघ्नक्षेत्र-समन्वितः ॥
तयोः पार्श्वगते गङ्गा-यमुने पुष्पवारिभिः ।
देहल्यामर्च्चयेदस्त्रं प्रतिद्वारमिति क्रमात्" ॥ इति ।

पद्माद्यासनस्थ इति । पद्मासनन्तु,—

"वामोरूपरि दक्षिणन्तु चरणं संस्थाप्य वामं तथा
याम्योरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ।
अङ्गुष्ठौ हृदये निधाय चिवुकं नासाग्रमालोकये—
देतद्व्याधि-विघात-कारि यमिनां पद्मासनं प्रोच्यते" ॥ इति ।

आदिशब्दात् स्वस्तिकादि । पूजाविधौ तु तन्निर्व्वाहार्थं-मङ्गुष्ठ-बन्धनं हस्ताभ्यां न कर्त्तव्यम् । आदौ द्वारपूजां कृत्वा पद्मासने उपविश्य प्रसन्नचित्तो भूतशुद्ध्यादिकं कुर्य्यादित्यन्वयः ।

**अर्च्चाविधावस्य पीठाधरोर्द्ध-**
**पार्श्वार्च्चनं मध्यपद्मार्च्चनञ्च ॥ ८५ ॥ ***

---

* ग चिह्नितमूलपुस्तके चस्मात् श्लोकात् परम् "ओं ह्रीं क्रों यं रं लं वं शं षं सं हं सः सोऽहं श्रीरामस्य प्राणा इह प्राणाः । १८ । जीव इह स्थितः । ८६ । सर्व्वेन्द्रियाणि इह स्थितानि । १९ । वाङ्मनश्चक्षुः-श्रोत्र-घ्राण-प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । ८७ ॥ एवं त्रिः" इत्यतिरिक्तः पाठो विद्यते, किन्तु मूलपुस्तकान्तरेषु न दृश्यते । परन्त्वयं पाठः प्राणप्रतिष्ठा प्रकरणोक्त-दीपिकान्तर्गतो भवितुमर्हतीति विद्वद्भिर्ज्ञेयम् ।

अर्चाविधाविति। 'अस्य' रामस्य 'अर्चाविधौ' पूजाविधौ, पीठस्य अधरदेशार्चनम्, ऊर्द्ध्वदेशार्चनम्, पार्श्वदेशार्चनं, मध्यवर्त्तिनः पद्मस्य चार्चनं कृत्वा पीठस्याङ्घ्रिषु धर्म्मादिकानर्च्चयेदिति सम्बन्धः। ८५॥

कृत्वा मृदु-श्लक्ष्ण-समतूलिकायां(१)
रत्नासने देशिकञ्चार्च्चयित्वा।
शक्तिञ्चाधाराख्यकां कूर्म्म-नागौ
पृथिव्यब्जे स्वासनाधः प्रकल्प्य॥ ८६॥
विघ्नं दुर्गां क्षेत्रपालञ्च वाणीं
वीजादिकांश्चाग्नि-देशादिकांश्च।
पीठस्याङ्घ्रिष्वेषु धर्म्मादिकांश्च
नञ्पूर्वां-(१) स्तांस्तस्य दिक्ष्वर्च्चयेच्च॥ ८७॥

रत्नबद्धे आसने 'मृदुः' कोमला, 'श्लक्ष्णा' मनोहरा, 'समाना' रत्नासनतुल्य-परिमाणा या तूलिका, तस्यां 'देशिकं' देशः उपदेशोऽस्यास्ति देशिकः, अत इति ठन्(२)। उपदेष्टा, तञ्च 'अर्च्चयित्वा' सम्पूज्य। पीठाधर-भागादिषूक्तमर्च्चणं विशदयति, शक्तिमिति। 'शक्तिञ्चाधाराख्यकाम्' आधारशक्तिं 'कूर्म्मः' कच्छपः

---

(१) ख, मृतूलिकायां। क, न पूर्वां-। ख, नञ्पूर्वां-।

(२) क, अत इति ठनौ। ख, न इति पाठमौ।

'नागः' शेषः तौ च(१) पृथिवीलक्षणे च 'अब्जे' कमले एताः स्वासनस्य देवताः, स्वासनस्य अधः प्रकल्प्याः । तदुक्तम्,—

"आधारशक्तिं प्रजपेत् पङ्कजद्वयधारिणीम् ।
मूर्ध्नि तस्याः समासीनं कूर्म्मं नीलाभमर्च्चयेत् ।
ऊर्द्ध्वं ब्रह्म शिलासीनमनन्तं कुन्द-सन्निभम् ।
यजेच्चक्रधरं मूर्ध्नि धारयन्तं वसुन्धराम् ।
तमाल-श्यामलां तस्मिन् नीलेन्दीवर-धारिणीम् ।
अभ्यर्च्चयेद्वसुमतीं स्फुरत्सागर-मेखलाम् ।
तस्यां रत्नमयं द्वीपं तस्मिंश्च मणिमण्डपम्" ॥ इति ।

एवं मण्डपान्तं पूजयित्वा मण्डपं प्रविशेत् । द्वारे विं विघ्नाय नमः, दुं दुर्गायै नमः, चं क्षेत्रपालाय नमः, वां वाण्यै नमः, इति वीजादिकान् यथास्थानमभ्यर्च्च्य 'अग्नि-देशादिकान्' धर्म्मादीन्; तदुक्तम्,—

"यजेत् कल्पतरूंस्तस्मिन् साधकाभीष्ट-सिद्धिदान् ।
अधस्तात् पूजयेत्तेषां वेदिकां मण्डलोज्ज्वलाम् ।
पश्चादभ्यर्च्चयेत्तस्यां पीठं(२) धर्म्मादिभिः पुनः ।
रक्त-श्याम-हरिदिन्द्र-नीलाभान् पाद-रूपिणः(३) ।
वृष-केशरि-भूतेभरूपान् धर्म्मादिकान् यजेत् ।
गात्रेषु पुजयेत्तांस्तु नञ्पूर्व्वकाननुक्रमात्(४) ।
आग्नेयादिषु कोणेषु दिक्षु चाथाम्बुजं यजेत्" ॥ इति ।

---

(१) ख, मोच । (२) ख, पीठे । (३) ख, मौलान् पादस्वरूपिणः ।
(४) क, न पूर्व्वकाननुक्रमात् । ख, तत् पर्व्वा च मनुक्रमात् ।

'अङ्घ्रिषु' पादेषु 'नञ्पूर्वान्' धर्म्मादिकान् 'तस्य' पीठस्य 'दिक्षु' पूर्व्वादिषु। ८६।८७॥

मध्ये क्रमादर्क-विध्वग्नि-तेजां-
स्युपर्य्युपर्य्युत्तमैरर्च्चितानि।
रजः सत्त्वं तम एतानि वृत्त-
त्रयं वीजाढ्यं क्रमाद्भावयेच्च॥ ८८॥

मध्ये इति। सूर्य्येन्दग्नयः क्रमेण पूज्याः, यत् 'वृत्तत्रयं' तत् रजः सत्त्वं तमः एतानि यानि गुणरूपाणि तज्ज्ञातव्यम् 'वीजाढ्यं' कलिकारूपं 'क्रमात्' अनुक्रमेण 'भावयेत्' पूजयेत्। ८८॥

आशा-व्याशास्वप्यथात्मानमन्त-
रात्मानञ्च परमात्मानमन्तः।
ज्ञानात्मानञ्चार्च्चयेत्तस्य दिक्षु
माया-विद्ये ये कला-पारतत्त्वे॥ ८९॥

आशेति। 'आशा-व्याशासु' दिक्षु-विदिक्षु च अष्टौ पद्मपत्राणि पूजयेदिति शेषः। अथेति। 'आत्मानं' लिङ्गम् 'अन्तरात्मानं' जीवं 'परमात्मानम्' ईश्वरं 'ज्ञानात्मानं' ब्रह्म विन्दु-नाद-शक्ति-शान्तात्मकान् एतान् 'अन्तः' मध्ये अर्च्चयेत्। माया, विद्या, कला, 'पारतत्त्वं' परमं तत्त्वञ्च, एतानि चत्वारि तत्त्वानि दिक्षु पूज्यानि। तदुक्तम्,—

"आनन्दकन्दं प्रथमं संविन्नालमनन्तरम् ।
सर्वतत्त्वात्मकं पद्ममभ्यर्च्य तदनन्तरम् ।
मन्त्री प्रकृति-पत्राणि विकारमय-केशरान् ।
पञ्चाशद्वर्ण-वीजाढ्यां कर्णिकां पूजयेत्ततः ।
कलाभिः पूजयेत् सार्द्धं तस्यां सूर्य्येन्दुपावकान् ।
प्रणवस्य त्रिभिर्मन्त्रैरथ सत्त्वादिकान् गुणान् ।
आत्मानमन्तरात्मानं परमात्मानमर्च्चयेत् ।
ज्ञानात्मानञ्च विधिवत् पीठं मन्त्रावसानिकम्"(१)॥ इति ।

तत्त्वपूजायां, मां मायातत्त्वाय नमः, विं विद्यातत्त्वाय नमः, कं कलातत्त्वाय नमः, पं परतत्त्वाय नमः इति प्रयोगः । ८८ ॥

**सम्पूजयेद्विमलादींश्च शक्ती-**
**रभ्यर्च्चयेद्देवमावाहयेच्च ।**

विमलादींश्चेति । 'विमला' उत्कर्षिणी ज्ञानक्रियायोगेति शक्तयः,

"प्रह्वी सत्या तथेशानानुग्रहा नवमी मता" ।

इत्यासनस्थानमुक्तम् ।

"पीठशक्ति-केशरेषु मध्ये च सवराभया(२)" ।

इति पीठमन्त्रो नारायणीये उक्तः ।

देवमावाहयेच्चेति, मूलमन्त्रेण आहूतो भव इत्याद्युक्तावाहनादिमुद्राः प्रदर्शयेत् । ता यथा,—

---

(१) क, पीठं मन्त्रावमानिकम् । (२) ख, मदराभया ।

"आवाहनादिका मुद्रा नव साधारणी मताः।
तथा षड़ङ्गमुद्राश्च सर्वमन्त्रेषु योजयेत्।
हस्ताभ्यामञ्जलिं बद्ध्वानामिका-मूलपर्वणोः(१)।
अङ्गुष्ठौ निक्षिपेत् सेयं मुद्रा त्वावाहनी स्मृता॥ १॥
अधोमुखी त्वियं चेत्स्यात् स्थापनी मुद्रिका स्मृता॥ २॥
उच्छ्रिताङ्गुष्ठ(४) मुष्ट्योस्तु संयोगात् सन्निधापनी॥ ३॥
अन्तः प्रवेशिताङ्गुष्ठा सैव संरोधिनी(५) मता। ४।
उत्तानमुष्टि-युगला सम्मुखीकरणी मता। ५।
देवताङ्गे षड़ङ्गानां न्यासः स्यात् सकलीकृतिः। ६।
सव्यहस्तकृता मुष्टिर्दीर्घाधो-मुखतर्जनी।
अवगुण्ठनमुद्रेयमभितो भ्रामिता सती। ७।
अन्योऽन्याभिमुखाश्लिष्ट-कनिष्ठानामिका पुनः।
तथैव तर्जनीमध्या धेनुमुद्रा समीरिता।
अमृतीकरणं कुर्य्यात् तया साधक-सत्तमः। ८।
अन्योऽन्य-ग्रथिताङ्गुष्ठा प्रसारित-पराङ्गुली।
महामुद्रेयमाख्याता परमीकरणे बुधैः।
प्रयोजयेदिमा मुद्रा देवताह्वान-कर्म्मणि"॥ ९॥ इति।

अङ्गव्यूहानि जलाद्यैश्च पूज्य
धृष्ट्यादिकैर्लोकपालैस्तदस्त्रैः॥ ९०॥

(१) क, बद्धानामिकाग्रता। ख, नामिका नासिका मता। (४) ख, उत्थिताङ्गुष्ठ। (५) पुस्तकान्तरे सम्बोधिनी।

अङ्गव्यूहानीति। 'अङ्गव्यूहानि' हृदयादीनि 'अलाद्यैः' उदकदानाद्यैः पाद्यादिभिः सम्पूज्येत्यर्थः। अङ्गव्यूहानिलजाद्यैरिति पाठे, अङ्गव्यूहैः 'अनिलजाद्यैः' हनुमदाद्यैश्च साकं देवं पूज्येत्यन्वयः। अङ्गव्यूहानलाद्यैरिति तु युक्तः पाठः। 'नलाद्यैः' नीलाद्यैः षोडशभिः सहेत्यर्थः। तेषां स्थानानि "आग्नेयादिषु कोणेषु हृदयादीनि पूजयेत्। नेत्रमग्रे दिशास्वस्त्रम्" इति।

अङ्गमुद्रा यथा—

"अङ्गन्यासस्य या मुद्रास्तासां लक्षणमुच्यते।
अनङ्गुष्ठा ऋजवो हस्तशाखा भवेन्मुद्रा हृदये शिरस्यपि।
अधोऽङ्गुष्ठा खलु मुष्टिः शिखायां करद्वन्द्वाङ्गुलयो वर्म्मणि स्युः॥
नाराचमुष्ट्युद्धृत-बाहुयुग्मकाङ्गुष्ठ-तर्जन्युदितो ध्वनिस्तु।
विष्वग्निषिक्तः कथितास्त्रमुद्रा(१) यत्राश्विनी तर्जनिमध्यमे स्तुः(२)
नेत्रत्रयं तत्र भवेद्नामा षड़ङ्गमुद्राः कथिता यथावत्"॥ इति।

धृष्ट्यादिकैरिति। सृष्ट्यादीनन्ये पठन्ति। तथाहि,—

"पूजयेद्वैष्णवे पीठे मूर्त्तिं मूलेन कल्पयेत्।
श्रीं सीतायै दिगन्तेन सीतां पार्श्वगतां यजेत्।
अग्रे पार्श्वद्वये शार्ङ्ग-शरानङ्गानि तद्वहिः।
हनूमन्तं ससुग्रीवं भरतं सविभीषणम्।
लक्ष्मणाङ्गद-शत्रुघ्नान् जाम्बवन्तं दलेष्विमान्।
वाचयन्तं हनूमन्तमग्रतो धृतपुस्तकम्।

---

(१) क, कथिता समुद्रा। (२) ख, तर्जनीमध्यमेस्तु।

यजेद्भरत-शत्रुघ्नौ पार्श्वयोर्धृतचामरौ।
धृतातपत्रं हस्ताभ्यां लक्ष्मणं पश्चिमे यजेत्।
दृष्टिं जयन्तं विजयं सुराष्ट्रं राष्ट्र-वर्द्धनम्।
अकोपं धर्म्मपालाख्यं सुमन्त्रञ्च दलाग्रतः।
सर्वाभरण-सम्पन्नांल्लोकेशानर्च्चयेत्ततः।
तदस्त्राणि ततो वाह्ये वज्रादीनि च पूजयेत्" ॥ इति।९०

वशिष्ठाद्यैर्मुनिभिर्नीलमुख्यै-
राराधयेद्राघवं चन्दनाद्यैः।
मुख्योपचारैर्विविधैश्च पूज्य
तस्मै जपादींश्च समर्प्य सम्यक्(१) ॥ ९१ ॥

एवम्भूतं जगदाधारभूतं
रामं वन्दे सच्चिदानन्दरूपम्।
गदादि-शङ्खाब्जधरं भवारिं
स यो ध्यायेन्मोक्षमाप्नोति सर्वतः(२) ॥ ९२ ॥

वशिष्ठाद्यैरिति। वशिष्ठ-वामदेव-जावाल-(३) गौतम-भरद्वाज—कशिक-वाल्मीकि--नारद-सनक-सनन्दन-सनातन-सनत्कुमारान् द्वादश कमण्डलुधरान्(४) सर्वान् मन्त्रमुच्चरतो मुनीन्

---

(१) क, च, सम्यक् समर्प्य। (२) क, ग, च, सर्व्वः। (३) ख, जाम्बल।
(४) च, कमण्डलुधमान्।

द्वादशाब्जे अर्च्चयेत् पूर्वदिक्-क्रमेण च तत्परान्। नीलमुख्यैरिति। नील-सुषेण-मैन्द-(¹) शरभ-द्विविद-धनद-गवाक्ष-किरीट-कुण्डल-श्रीवत्स-कौस्तुभ-शङ्ख-चक्र-गदा-पद्मानि षोडशाब्जे अर्च्चयेत् पूर्वदिक्क्रमेण कृताञ्जलीन्। 'चन्दनाद्यैः' सुगन्धिभिः। जपादीनिति। आदिशब्देन उपचाराः। जपसमर्पणे मन्त्रः,—

"गुह्यातिगुह्य-गोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव! त्वत्प्रसादात्त्वयि स्थिताः"। इति।

अरिचक्रम् (?) 'सर्वतः' सर्वस्मात् बन्धनात्। सर्वः इति तु युक्तः पाठः। ८१ ॥ ८२ ॥

विश्वव्यापी राघवोऽथो तदानी-(²)
मन्तर्दधे शङ्ख-चक्रे गदाब्जे।
धृत्वा रमासहितः सावृतश्च(³)
ससपत्नजः(⁴) सानुजः सर्वलोकी ॥ ८३ ॥

राघवः, अथो, तदानीम्, इति पदच्छेदः। 'अन्तर्दधे' लोकादृश्यो बभूव, न तु देहधर्म्मं गतः, रामायणेऽपि तेनैव रूपेण ब्रह्मलोके गमनमुक्तम्। 'सावृतः' आवरणैः परिवारैः सहितः, 'ससपत्नजः' सपत्नजेन वैरिसन्तानेनापि सहितः, समदर्शित्वात् 'सर्वलोकी' सर्वदर्शी। ८३ ॥

---

(१) ख, मैद। (२) ग, राघवो यस्तदानी। (३) च, संवृतश्च।
(४) ग, च, सपत्नजः।

तद्भक्ता(१) ये लब्धकामांश्च भुक्त्वा

तथा पदं परमं यान्ति ते च।

इमा ऋचः सर्वकामार्थदाश्च

ये ते पठन्त्यमला यान्ति मोक्षम्।

ये ते पठन्त्यमला यान्ति मोक्षम् ॥इति। ९४॥१०॥

इत्यथर्ववेदे रामपूर्व-तापनीयोपनिषत् समाप्ता ॥ २२ ॥

ये तद्भक्ताः, ते कामान् लभन्ते, लब्धांश्च कामान् भुक्त्वा परं पदं यान्ति।

उपनिषत्पाठे फलमाह, इमा इति। द्विरुक्तिः समाप्त्यर्था।

दशावरण-पूजा गण-(२) संहितायामुक्ता,—

"षट्कोणे प्रथमा वृत्तिः स्यादङ्गैरन्वितः क्रमात्।

द्वितीयात्मादिकैः प्रोक्ता देवैरष्टाब्जमूलके" ॥ इति।

तथा, आत्मा १। निवृत्तिः २। अन्तरात्मा ३। प्रतिष्ठा ४। परमात्मा ५। विद्या ६। ज्ञानात्मा ७। शान्तिः ८। इत्यादयः।

"तृतीया वासुदेवाद्यैरष्टपत्रे तथैव च।

चतुर्थी वायुपुत्राद्यैः पत्राग्रे पूर्वतः क्रमात्।

धृष्ट्याद्यैः पञ्चमी वृत्तिर्द्वितीयाष्टदले तथा।

षष्ठी द्वादश-पत्रेषु नारदाद्यैर्महर्षिभिः।

(१) क, मद्भक्ता। (२) ख, सगणः।

सप्तमी षोड़शाब्जे स्यान्नीलाद्यैः कपिपुङ्गवैः ।
ध्रुवाद्यैरष्टमी ज्ञेया द्वात्रिंशद्दलपद्मके ।
इन्द्राद्यैर्भूगृहे चाद्ये(१) नवमावरणं भवेत् ।
तदस्त्रैर्वज्रशक्त्याद्यैर्दशमावरणं शुभम् ।
दशावरण-पूजेयं कर्त्तव्या साधकोत्तमैः" । इति ।

पूजायन्त्रे चैतान्यावरणानि, अस्य धारण-यन्त्रादयं विशेषः । अत्र हि षट्कोणादि-(२) भूपुरान्ते देवरूपाणि भवन्ति । धारण-यन्त्रे तु मन्त्रवर्णा इति, आवरणक्रमोऽप्ययमेव श्रुतौ द्रष्टव्यः, पाठक्रमादर्थक्रमस्य बलीयस्त्वात् ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्ट-पद-वाक्यानां रामपूर्वस्य दीपिका ॥

इति रामपूर्वतापनीयोपनिषदो दीपिका सम्पूर्णा । २२ ॥

---

(१) ख, चाद्यैः । (२) क, षट्कोणादिषु ।

## ओँ नम सीतापतये।



### रामोत्तर-तापनीयोपनिषत्।

ओँ वृहस्पतिरुवाच याज्ञवल्क्यम्। यदनु कुरुक्षेत्रं देवानां देवयजनं सर्व्वेषां भूतानां ब्रह्मसदनम्। अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्व्वेषां भूतानां ब्रह्मसदनम्। तस्माद् यत्र क्वचन गच्छति, तदेव मन्येतेति(१)।

ओँ रामोत्तर-तापनीयं स्वरूप-महिमोक्तये।
रामचन्द्रस्य षट्त्रिंशं खण्ड-पञ्चक-मण्डितम्॥१।

ऋषि-संवादेन रामचन्द्रस्य मन्त्रतोऽर्थतश्च महिमानं स्वरूपञ्च प्रकाशयितुमादौ क्षेत्रोत्तमं विविनक्ति, वृहस्पतिरुवाच याज्ञवल्क्यमिति। यत् क्षेत्रम् 'अनु' हीनं कुरुक्षेत्रं कुरुक्षेत्रादपि यन्महिम्ना अधिकं, कुरुक्षेत्रं हि 'कुरोः' ब्रह्मणो वरदानात् क्षेत्रोत्तमं प्रसिद्धं, तत्तु यतो हीनमित्यर्थः। हीने द्योत्ये(२) अनुः कर्म्मप्रवचनीयम्, तद्योगे यदिति द्वितीया। तथा देवाना-

(१) क, ख, मदविमुक्तमेव मन्येत,। (२) क, हीनो द्योतते।

मपि देवपूजास्थानं, तथा सर्व्वेषां प्राणिनां ब्रह्मलोकतुल्यं, तत् याज्ञवल्क्यापत्यं प्रति 'उवाच' तन्नामतो लिङ्गतश्च दर्शयेति पप्रच्छेत्यर्थः। याज्ञवल्क्यस्तु उत्तरयन् तावत्तन्नामतो निर्द्दिशति, अविमुक्तं वै इति। 'नविमुक्तम्' ईश्वरेणापरित्यक्तम् अविमुक्तं वाराणसी चैव कुरुक्षेत्रं, कुरु इति देवैः प्रार्थितेन शिवेन कृतत्वात्(१) कुरुक्षेत्रम्। तथा देवानामित्यादि विशेषणद्वयम् उत्तरेऽप्यनूदितम्। देशान्तरं तद्वच्छोपास्यमित्याह, तस्मादिति। 'तदेव' अविमुक्तमेव 'मन्येत' जानीयात्।

इदं वै कुरुक्षेत्रं देवानां देवयजनं सर्व्वेषां भूतानां ब्रह्मसदनम्। अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे, येनासावमृती भूत्वा मोक्षी भवति। तस्मादविमुक्तमेव निषेवेत, अविमुक्तं न विमुञ्चेदेवमेवैतद्याज्ञवल्क्य॥

प्रथमः खण्डः। १॥

तस्य मननोल्लेखमाह, इदं वा इति। 'इदं' यत्र वयं विचरामः, तदेव विशेषण-त्रय-युक्तमविमुक्तमिति मन्येतेत्यन्वयः। एवं कृते सति अविमुक्त-निवासफलं भवतीति भावः। नन्वन्येभ्यः क्षेत्रेभ्यः को विशेषः? अत्राह, अत्र हीति। 'जन्तोः' प्राणिमात्रस्य न मनुष्यस्यैव 'तारकं' षड़क्षरं वीजं वा। तस्य

(१) ख, लोककृतत्वात्।

किं फलम्? अत आह, येनेति। 'अमृतीभूत्वा' ब्रह्मीभूय मोक्षी भवति, मोक्षोऽस्यास्तीति; बन्धाद्रहितो भवति। कर्त्तव्यमाह, तस्मादिति। 'निषेवणं' चिन्तनादि। देशान्तरस्थस्यापि सम्भवतीत्यत उक्तं न विमुञ्चेदिति। 'एवमेवैतत्' भवदुक्तं याज्ञवल्क्येति आह बृहस्पतिः; याज्ञवल्क्येनोक्तमर्थं स्वीकृतवान्। 'एवमेष भगवन्' इति पाठे, हे भगवन्! 'एषः' भवदुक्तोऽर्थः एवं, नान्यथा, इति याज्ञवल्क्यं श्रोता बृहस्पतिराह इत्यर्थः। १॥

अथ हैनं भरद्वाजः पप्रच्छ याज्ञवल्क्यम्, किं तारकं? किं तरतीति?। स होवाच याज्ञवल्क्यः, तारकं विन्दुपूर्वकं दीर्घानलं पुनर्माय नमः, चन्द्राय नमः, भद्राय नमः, इति। ओं तत् ब्रह्मात्मकाः सच्चिदानन्दाख्या इत्युपासितव्यम्।

एवं बृहस्पति-प्रोक्तार्थतत्त्वं याज्ञवल्क्यं प्रश्नस्वरूपम्(१) आह, किं तारकमिति। ननु तरणक्रिया कर्म्म(२) प्रसिद्धमेव इत्याशङ्क्य प्रश्नस्य विशेषता-(३) माह, किं तरतीति।

(१) ख, पृष्टस्वरूपम्। (२) क, तारण क्रिया कर्त्तरि। (३) ख, विशेष विशेष विशेषता?

यत् 'तरति' संसारं तारयति, तस्य किं स्वरूपमित्यर्थः। तरतिरन्तर्भूतण्यर्थः(१)। यद्वा कर्म्मप्रश्नोऽयं, यस्य गर्भ-त्वायुत्तरं भावि, उत्तरमाह, स हेति॥ 'दीर्घानलं' दीर्घे आकारे आरूढ़ः 'अनलः' रेफः यस्मिन् तत्, तच्च 'विन्दुपूर्बकं' विन्दोः पूर्बमेव पूर्बकं रा सिद्धम्। दीर्घानलं रा इति। पुन-र्माय नमः(२) इति स्वरूपम्। चन्द्राय नमः, भद्राय नमः, इति द्वौ मन्त्रौ पृथक्। तदुक्तम्,—

"रामेति रामभद्रेति रामचन्द्रेति वा स्मरन्।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिञ्च विन्दति"॥ इति।

ओं रूपाः तद्रूपाः ब्रह्मरूपाः, तथा सदाख्याश्चिदाख्या आनन्दाख्याश्चेत्येवमेता रामाद्याख्या उपासितव्याः। तदुक्तं गीतायाम्,—

"ओं तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा"॥ इति।

अकारः प्रथमाक्षरो भवति, उकारो द्वितीयाक्षरो भवति, मकारस्तृतीयाक्षरो भवति, अर्द्धमात्रश्चतुर्थाक्षरो भवति, विन्दुः पञ्चमाक्षरो भवति, नादः षष्ठाक्षरो भवति,

---

(१) क, भावितण्यर्थः। (२) ख, पुनरपि माय नमः।

तारकत्वात्तारको भवति ; तदेव तारकं ब्रह्म त्वं विद्धि, तदेवोपास्यमिति ज्ञेयम्; गर्भ-जन्म-जरा-मरण-संसार-महद्भयात् सन्तारयतीति ; तस्मादुच्यते तारकमिति।

य एतत्तारकं ब्राह्मणो नित्यमधीते, स सर्वं पाप्मानं तरति, स मृत्युं तरति, स ब्रह्महत्यां तरति, स भ्रूणहत्यां तरति, स वीरहत्यां तरति, स सर्वहत्यां तरति, स संसारं तरति, स सर्वं तरति, सोऽविमुक्तमाश्रितो भवति, स महान् भवति, सोऽमृतत्वञ्च गच्छतीति।

द्वितीयः खण्डः। २॥

ओङ्कारात्मिका रामाद्याख्या इत्युक्तम्; तेन रामादीनां तारकत्व--मुपपादयितु--मोङ्कारस्य तारकत्वमुपपादयति, अकार इत्यादिना। अकारादयस्त्रयो मूर्त्ताः, अर्द्धमात्रादयस्त्रयोऽमूर्त्ताः, नादात् परे शक्तिशान्ताख्ये(१) अप्यवस्थे वेदितव्ये। 'तदेव' रां बीजमेव प्रणवात्मकत्वाद्ब्रह्मणो वाचकम्, 'अविमुक्तं' वाराणसी-क्षेत्रम्, यत्र तत्र(२) स्थितो वाराणस्यामेव स्थितो भवति, यत्र तत्र मृतो वाराणस्यामेव मृतो भवतीत्यर्थः। आश्रितो भवतीत्यस्यानन्तरं स महान् भवतीति केचित् पठन्ते ; तेन भुक्तिरुक्ता, अमृतत्वञ्चेति मुक्तिरुक्ता। २॥

(१) क, आत्माख्ये। ख, सीताख्ये। (२) ख, यत्र यत्र।

अथैते श्लोका भवन्ति ;

अकाराक्षर-सम्भूतः सौमित्रिर्विश्वभावनः ।
उकाराक्षर-सम्भूतः प्रद्युम्नस्तैजसात्मकः ॥ १ ॥
प्रज्ञात्मकस्तु(१) भरतो मकाराक्षर-सम्भवः ।
अर्द्धमात्रात्मको रामो ब्रह्मानन्दैक-विग्रहः ॥ २ ॥

प्रणव-षडक्षराणां क्रमेणार्थानाह मन्त्रैः, अथैते इत्यादिना । 'विश्वभावनः' विश्वाभिधानः जाग्रदभिमानी सङ्कर्षणः 'तैजसात्मकः' स्वप्नाभिमानी प्रद्युम्नः 'प्रज्ञात्मकः' सुषुप्त्यभिमानी अनिरुद्धः रामः । १ । २ ॥

श्रीराम-सान्निध्य-वशाज्जगदानन्द-दायिनी ।
उत्पत्ति-स्थिति-संहार-कारिणी सर्वदेहिनाम् ॥ ३ ॥
सा सीता भवति(२) ज्ञेया मूलप्रकृति-सञ्ज्ञिता ।
प्रणवत्वात् प्रकृतिरिति वदन्ति ब्रह्मवादिनः॥ इति ।४॥

तुरीयावस्थं ब्रह्मलक्षणाख्यं बिन्द्वर्थमाह, श्रीरामेति । आनन्दस्य ब्रह्मांशत्वात् केवलया प्रकृत्या स दातुमशक्यः, कार्य्य-कर्त्तृ-बिन्द्वंश-वाच्या कार्य्योन्मुखी नादांशवाच्या (३) सा तद्रूपिणी । सीतायाः शक्ति-शान्ताख्ये अप्यवस्थे आह, प्रणवत्वादिति । वाच्य-वाचकभावं त्यक्त्वा प्रणवेन यदाऽभेदं गता, तदा

---

(१) क, ग, ङ, प्राज्ञात्मकस्तु । (२) क, भगवति ।
(३) क, नादवाच्या ।

प्रकृतिरिति वदन्ति 'ब्रह्मवादिनः' ज्ञानिनः। इतिशब्दः श्लोक-समाप्त्यर्थः। ३। ४॥

ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं, भूतं भवद्भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत्त्रिकालातीतं, तदप्योङ्कार एव। सर्वं ह्येतद्ब्रह्म, अयमात्मा ब्रह्म, सोऽयमात्मा चतुष्पाज्जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः, स्थूलभुग्-वैश्वानरः प्रथमः पादः।

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोन-विंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः।

यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति, तत् सुषुप्तं, सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः।

एष सर्वेश्वरः, एष सर्वज्ञः, एषोऽन्तर्यामी, एष योनिः, सर्वस्य प्रभवाप्ययौ हि भूतानां, नान्तः प्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनं न घनप्रज्ञं न प्रज्ञान-मदृष्ट-मव्यवहार्य्य-मग्राह्य-मलक्षण-मलिङ्ग-मचिन्त्य-मव्यपदेश्य मेकात्म-प्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते।

स आत्मा स विज्ञेयः सदोज्ज्वलोऽविद्या-तत्कार्य्य-हीनः स आत्मा बन्धहरः सर्वदा द्वैत-रहितः आनन्दरूपः सर्वाधिष्ठानः सन्मात्रो निरस्ताविद्या-तमोमोहोऽहमेवेति सम्भाव्योऽहमित्योँ तत् सत्, यत् परं ब्रह्म रामचन्द्रः ।

'त्रिकालातीतम्' आत्मस्वरूपम् । ननु कथमेकस्य मूर्त्ता-मूर्त्तरूपता ? विरोधात्; अत आह, सर्वं ह्येतद्ब्रह्मेति । मायिकत्वात् मूर्त्तस्य न विरोध इति भावः । ननु तथापि जीवस्य ब्रह्मणो भेदे कथमैक्यसिद्धिरित्यत आह, अयमात्मा ब्रह्मेति । योऽयम् 'आत्मा' जीवः प्रसिद्धः, सोऽपि ब्रह्मैव, तस्य आत्मनो ब्रह्मणः ओङ्कार-वाच्यस्य रामस्यैकात्मत्वे कथं भेदव्यवहारः ? इत्याशङ्क्योपाधि-भेदादित्याह, सोऽयमिति । चतुर्थं मन्यन्ते इत्यन्तो ग्रन्थो माण्डूक्ये नारसिंहे च व्याख्यातः । स आत्मेत्यादिः स्पष्टः । 'अहमित्योँ तत्सदिति' एतच्छब्द-चतुष्टयवाच्यं यत् परं ब्रह्म, स रामचन्द्रः ।

चिदात्मकः सोऽहमोँ तद्रामभद्रः पर ज्योतीरसोऽहमित्यात्मानमादाय मनसा ब्रह्मणैकीकुर्य्यात् । सदा रामोऽहमित्येतत् तत्त्वतः प्रवदन्ति; येन ते संसारिणो नूनं राम एव, न संशयः, इत्युपनिषत्, य एवं वेद, स मुक्तो भवतीति याज्ञवल्क्यः ।

तृतीयःखण्डः । ३ ॥

स किं भूतात्मकः? न इत्याह, चिदात्मक इति। ज्ञानैकविग्रहः, सोऽहमिति, 'सः' प्रसिद्धः अमुकपुत्रोऽमुकनामा अहमस्म(१)। स मनुष्यादिरूपो न, किन्तु ओङ्काररूपः तद्रूपः परं ज्योतीरूपः, इत्येवमात्मानं प्रसिद्धमादाय तत्त्वमस्यादि व्याख्यानन्यायेन(२)'मनसा' करणेन 'ब्रह्मणा' अविकृतेन सहैकीकुर्य्यात्। एकीकरणे फलमाह, सदेति। 'उपनिषत्' परमार्थज्ञानं याज्ञवल्क्यः आह भरद्वाजं प्रतीति शेषः। ३॥

अथ हैनमत्रिः पप्रच्छ, याज्ञवल्क्य! (३) य एषोऽनन्तोऽव्यक्त आत्मा, तं कथमहं जानीयामिति। स होवाच याज्ञवल्क्यः।सोऽविमुक्त उपास्यः,य एषोऽ त्ररोऽनन्तोऽव्यक्तः परिपूर्णानन्दैकरसश्चिदात्मा, योऽयमनन्तोऽव्यक्त आत्मा, सोऽविमुक्ते प्रतिष्ठित इति। सोऽविमुक्तः कस्मिन् प्रतिष्ठितः? इति। वरणायां नाश्याञ्च(४) मध्ये प्रतिष्ठित इति। का वै वरणा? का च नाशी?(५) इति। सर्व्वानिन्द्रियकृतान् दोषान् वारयतीति, तेन वरणा भवतीति। सर्व्वानिन्द्रिय-कृतान् पापान् नाशयतीति, तेन नाशी भवतीति।

अविमुक्ताधिष्ठान-पुरुष-स्वरूपमाह, य एष इति। 'अव्यक्तः'

---

(१) ख, प्रसिद्धः अमुकपुत्रोऽमुकनामाऽहमस्मि। (२) क, प्रायेण। (३) ग, याज्ञवल्क्यं। घ, याज्ञवल्क्यः। (४) ग, ङ, नास्याञ्च। (५) ग, ङ, नासी।

इन्द्रियाग्राह्यः। अविमुक्तं किमित्युपास्यः? इत्यत उक्तम् अविमुक्ते प्रतिष्ठित इति। नन्वविमुक्तो देशो न ज्ञायते; अतः पृच्छति, स इति। 'वरणायां' वरण-नामिकायां नद्यां, 'नाश्यां' नाशी-नामिकायाञ्च, मध्ये यो देशः ऐतिह्य-प्रसिद्ध, तत्र प्रतिष्ठितो ऽविमुक्तः। प्रवृत्ति निमित्तं पृच्छति, का वै वरणा इति। उत्तरमाह, सर्व्वानिति। यत्र स्नाताः पापदोष-रहिता भवन्ति। तदुक्तम्,—

"असी-वरणयोर्मध्ये पञ्चक्रोशं महत्तरम्।
अमरा मरणमिच्छन्ति का कथा इतरे जनाः"॥ इति।

**कतमच्चास्य स्थानं भवति?। भ्रुवोर्घ्राणस्य च यः सन्धिः, स एव द्यौर्लोकस्य परस्य च(१) सन्धिर्भवति, एतद्वै सन्धिं सन्ध्या ब्रह्मविद उपासत इति। सोऽविमुक्त उपास्य इति। सोऽविमुक्तं ज्ञानमाचष्टे, यो वै तदेवं वेदेति॥**

स्कान्दे वाह्यस्य प्रसिद्धैरत्र ज्ञातत्वादान्तराभिप्रायेण पृच्छति कतमच्चेति। 'अस्य' अविमुक्तस्य। भ्रुवोर्घ्राणस्य च यः सन्धिः कूर्पस्थानमित्यर्थः; तत्र हि इड़ा-पिङ्गले सङ्गते। सन्धिशब्दस्य निमित्तान्तरमाह, स एष इति। द्यौरिति प्रसिद्धस्य लोकस्य परस्य(२) दिवो ज्योतिषश्च 'एतत्' वस्तु-सन्धिरूपं 'ब्रह्मविदः' योगिनः सन्ध्येत्युपासते, सोऽविमुक्तः सन्धिधिया उपास्य इत्यर्थः।

(१) ख, परस्यास्य च। (२) क, ख, परस्मै।

इति शब्दो वाक्यसमाप्तौ । स रामः परमात्मा अविमुक्त-क्षेत्रे उपास्य इति विधिफलमाह, स इति । 'अविमुक्तं स्थानम्' अविमुक्त-प्रदेशे ध्यानबलेन यत् प्राप्तम् । यद्वा 'अविमुक्तम्' अत्यक्तं नित्यं 'स्थानं' ब्रह्माख्यं यत्, तत् 'आचष्टे' कथयति । 'यः' पुमान् 'वै' निश्चितं 'तत्' अविमुक्तं स्थानम् उक्तप्रकारं 'वेद' जानाति ।

अथ तं प्रत्युवाच स्वयमेव याज्ञवल्क्यः ।

श्रीरामस्य मनुं काश्यां जजाप(१) वृषभध्वजः ।

मन्वन्तर-सहस्रैस्तु जपहोमार्चनादिभिः ॥ ५ ॥

ततः प्रसन्नो भगवान् श्रीरामः प्राह शङ्करम् ।

वृणीष्व यदभीष्टं तद्दास्यामि परमेश्वरः ॥ ६ ॥ इति ।

अथेति । 'तम्' अत्रिं प्रति याज्ञवल्क्यः कथान्तरमुवाच, श्रीरामस्येति । वृषभध्वजः काश्यां श्रीरामस्य 'मनुं' मन्त्रं जजाप । ततः श्रीरामः प्राह, अहं परमेश्वरः, यदभीष्टं, तत् दास्यामि । 'इति' वाक्यसमाप्तौ ।

---

(१) क, ग, घ, श्रीरामचन्द्रस्य मनुं जजाप ।

अतः सत्यानन्द-चिदात्मा श्रीराममीश्वरः पप्रच्छ ।*

मणिकर्ण्यां वा मत्‌क्षेत्रे(१) गङ्गायां वा तटे पुनः ।
म्रियते देहि तज्जन्तोर्मुक्तिं नातो वरान्तरम् ॥ ७इति।

अतः परं श्रीराममीश्वरः 'पप्रच्छ' ययाचे इति। सत्यानन्द-चिदात्मेति द्वितीयार्थे प्रथमा, सत्यानन्द-चिदात्मानं श्रीरामम् ईश्वरः पप्रच्छ इति । अस्य स्थाने सहोवाचेति क्वचित् पाठः ।

'मणिकर्ण्यां' मणिकर्णिकायां, 'मत्‌क्षेत्रे' काश्यां यो म्रियते, तज्जन्तोर्मुक्तिं देहि ; अतः परं वरान्तरं न प्रार्थनीयम् ।

अथ स होवाच श्रीरामः ।

क्षेत्रेऽत्र तव देवेश ! यत्र कुत्रापि वा मृताः ।
क्रिमि-कीटादयोऽप्याशु मुक्ताः सन्तु न चान्यथा ॥८॥
अविमुक्ते तव क्षेत्रे सर्व्वेषां मुक्ति-सिद्धये ।
अहं सन्निहितस्तत्र पाषाण-प्रतिमादिषु ॥ ९ ॥
क्षेत्रेऽस्मिन् योऽर्चयेद्भक्त्या मन्त्रेणानेन मां शिव ! ।
ब्रह्महत्यादि-पापेभ्यो मोक्षयिष्यामि मा शुचः ॥ १० ॥

---

* क, ग चिह्नितमूल-पुस्तकद्वये अत इत्यादि पप्रच्छ इत्यन्तं मूलं नास्ति, तत् स्थाने स होवाच इति विद्यते ।

(१) ख, मणिकर्णिकायां मत्‌क्षेत्रे ।

त्वत्तो वा ब्राह्मणो वापि ये लभन्ते षडक्षरम्।
जीवन्तो मन्त्रसिद्धाः स्युर्मुक्ता मां प्राप्नुवन्ति ते ॥ ११ ॥
मुमूर्षा-(१) र्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम्।
उपदेक्ष्यसि मन्मन्त्रं स मुक्तो भविता शिव ! ॥१२॥ इति।
श्रीरामचन्द्रेणोक्तं योऽविमुक्तं पश्यति, स जन्मान्तरितान् दोषान नाशयतीति(२) ॥

चतुर्थः खण्डः ॥ ४ ॥

तव क्षेत्रे इति क्षेत्रमपि तुभ्यं मया दत्तमिति भावः। क्रमेरिक्षोपधाया इतीत्वम् इन्। 'क्रिमिः' क्रमचारी(३) पिपीलिकादिः। कीट बन्ध-वर्णयोः, कीटति बध्नातीति। 'कीटः' लूतादिः। न चान्यथा इति महावाक्यशेषः(४)। 'अनेन' षडक्षरेण। 'मा शुचः' प्राणिदुःखेन शोकं मा कृथाः। 'मुक्ताः' त्यक्तदेहाः। 'यस्य कस्यापि' पशु-पक्षि-मृगादेरपि। 'जन्मान्तरितानिति' अन्यजन्मार्जितानपि दोषान् 'नाशयति' छिनत्ति। तेन वरेणेति क्वचित् पाठः, श्रीराम-दत्तेन वरेण। इति शब्दः खण्डसमाप्तौ। इदं वाराणसी शब्दस्य व्युत्पत्त्यन्तरम्, वरेण नाशयति दोषान् वाराणसीति ॥ ४ ॥

---

(१) ग, मुमुक्षो।

(२) घ, दोषान् वारयतीति, तान् पापान् नाशयतीति।

(३) ख, क्रिमिचारी। (४) ख, महावाक्यमिति शेषः।

अथ हैनं भरद्वाजो याज्ञवल्क्यमुवाच। अथ कमन्त्र-स्तुतः श्रीरामः प्रीतो भवति, स्वात्मानं दर्शयति, तन्नो ब्रूहि भगवन्निति। स होवाच याज्ञवल्क्यः। श्रीरामेणैवं(१) शिक्षितो ब्रह्मा पुनरेतया(२) गदया नमस्करोति।

विश्वाधारं(३) महाविष्णुं नारायणमनामयम्।
पूर्णानन्दैक-विज्ञानं परं(४) ज्योतिःस्वरूपिणम्।
मनसा संस्मरन् ब्रह्मा तुष्टाव परमेश्वरम्॥

ओं यो वै श्रीरामः,(५) स भगवानद्वैत-परमानन्दात्मा, यः परं ब्रह्म भूर्भुवः स्वस्तस्मै वै नमो नमः॥ १॥

श्रीरामेणेति, यद्यपि शङ्करः प्रकृतस्तथापि समयान्तरे ब्रह्मापि एवं वाराणसी(६)-वृत्तान्तं रामेण शिक्षितः सन्नित्यर्थः। 'गदया' गद्येन माथया व्यक्तवाचा, गद् व्यक्तायां वाचि।

(१) च, श्रीरामेणैव। (२) ग, पुनरेव तथा।
(३) क, विश्वम्भरं।
(४) च, पर। (५) ग, श्री रामचन्द्रः, एवं सर्वत्र। (६) क, ग, घ, वाराणसी।

'यः' प्रसिद्धः 'वै' निश्चितं श्रिया जुष्टो रामचन्द्रः,(१) स 'भगवान्' षड्विधैश्वर्य्य-सम्पन्नः 'अद्वैत-परमानन्दात्मा' अद्वैतो यः परमानन्दः तदात्मा यः 'परम्' उत्कृष्टं ब्रह्मापि सन् 'भूर्भुवः स्वः' लोकत्रयी-रूपः मूल-स्थूल-व्यूहरूपः, 'तस्मै' एवं रूपाय 'वै' निश्चितं नमो नमः ॥

ओँ यो वै श्रीरामः स भगवान् यश्चाखण्डैक-रसात्मा(२) भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च ब्रह्मानन्दामृतं भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ३ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च तारकं ब्रह्म भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ४ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च ब्रह्मा विष्णु-रीश्वरो यः सर्व्ववेदात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः॥ ५ ॥

ओँ यो वै श्रीरामः स भगवान् ये च सर्व्वे वेदाः साङ्गाः सशाखाः सपुराणा भूर्भुवः स्वस्तस्मै वै-नमो नमः ॥ ६ ॥

---

(१) ख, रामचन्द्र इव ।

(२) ग, स भगवानद्वैत परमानन्दात्मा यश्चाखण्डैक रसात्मा ।

ओँ यो वै श्रीरामः स भगवान् यो जीवात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ७ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च सर्व्वभूतान्तरात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ८ ॥

ओँ यो वै श्रीरामः स भगवान् ये देवासुर-मनुष्यादि-भावा भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ९ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च(१) मत्स्य-कूर्म्मा-द्यवतारः(२) भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १० ॥

ओँ यो वै श्रीरामः स भगवान् यश्च प्राणो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ११ ॥

ओँ यो वै श्रीरामः स भगवान् यश्चान्तःकरण-चतुष्टयात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १२ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च यमो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १३ ॥

---

(१) ग, ये च । (२) ग, ताराः ।

ओँ यो वै श्रीरामः स भगवान् यश्चान्तको भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १४ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च मृत्युर्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १५ ॥

ओँ यो वै श्रीरामः स भगवान् यश्चामृतं भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १६ ॥

ओँ यो वै श्रीरामः स भगवान् यानि च पञ्च महा-भूतानि भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १७ ॥

ओँ यो वै श्रीरामः स भगवान् यः स्थावर-जङ्गमात्मको भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १८ ॥

ओँ यो वै श्रीरामः स भगवान् ये च पञ्चाग्नयो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १९ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च सप्त व्याहृतयो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २० ॥

ओँ यो वै श्रीरामः स भगवान् या विद्या भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २१ ॥

ओँ यो वै श्रीरामः स भगवान् या च सरस्वती भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २२ ॥

ओँ यो वै श्रीरामः स भगवान् या च लक्ष्मीर्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २३ ॥

ओँ यो वै श्रीरामः स भगवान् या च गौरी भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २४ ॥

ओँ यो वै श्रीरामः स भगवान् या च जानकी भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २५ ॥

ओँ यो वै श्रीरामः स भगवान् यच्च त्रैलोक्यं भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २६ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च सूर्यो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २७ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च सोमो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २८ ॥

ओँ यो वै श्रीरामः स भगवान् यानि च नक्षत्राणि भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २९ ॥

ओँ यो वै श्रीरामः स भगवान् ये च नवग्रहा भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ३० ॥

ओँ यो वै श्रीरामः स भगवान् ये चाष्टौ वसवो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ३१ ॥

ओँ यो वै श्रीरामः स भगवान् ये चाष्टौ लोकपाला भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ३२ ॥

ओँ यो वै श्रीरामः स भगवान् ये चैकादश रुद्रा भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ३३ ॥

ओँ यो वै श्रीरामः स भगवान् ये च द्वादशादित्या भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ३४ ॥

ओँ यो वै श्रीरामः स भगवान् यच्च भूतं भव्यं भविष्यत् भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ३५ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च ब्रह्माण्डस्यान्तर्बहिर्व्याप्नोति विराट् भूर्भुवः स्वस्तस्मै वै नमो नमः ॥३६॥

ओँ यो वै श्रीरामः स भगवान् यश्च हिरण्यगर्भो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ३७ ॥

ओँ यो वै श्रीरामः स भगवान् या च प्रकृतिर्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ३८ ॥

ओँ यो वै श्रीरामः स भगवान् यश्चोङ्कारो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ३९ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च चतस्रोऽर्द्धमात्रा भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ४० ॥

ओँ यो वै श्रीरामः स भगवान् यश्च परम-पुरुषो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ४१ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च महेश्वरो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ४२ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च महादेवो भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ४३ ॥

ओँ यो वै श्रीरामः स भगवान् यश्चों नमो भगवते वासुदेवाय महाविष्णुर्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥४४॥

ओँ यो वै श्रीरामः स भगवान् यश्च परमात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ४५ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च ज्ञानात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ४६ ॥

ओँ यो वै श्रीरामः स भगवान् यश्च सच्चिदानन्दाद्वैतैकरसात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ४७ ॥

एतान्(१) ब्रह्मवित्(२) सप्त-चत्वारिंशन्मन्त्रैर्नित्यं देवं स्तुवन्; (३) ततो देवः प्रीतो भवति; तस्माद् य एतैर्मन्त्रै-र्नित्यं देवं स्तौति, स देवं पश्यति, सोऽमृतत्वञ्च गच्छति सोऽमृतत्वञ्च गच्छतीति ॥

पञ्चमः खण्डः ॥ ५ ॥

इत्यथर्व्ववेदे रामोत्तर-तापनीयोपनिषत्
समाप्ता ॥ २३ ॥

एवं सप्तचत्वारिंशत् पर्य्यायाः पूर्वोद्धृत-मालामन्त्राक्षर-सङ्ख्यका नारसिंहस्यैवानुष्टुभाक्षर-सङ्ख्यका द्रष्टव्याः; अतः प्रतिपर्य्यायं क्रमेण मालामन्त्राक्षराण्येकैकश आदावुच्चार्य्याणि। अयं षडक्षर-वाच्य-राममूल-व्यूहस्य मालामन्त्र-वाच्यः सप्तचत्वारिंश-द्व्यूहः। तदुक्तम्,—

"कल्पितस्य शरीरस्य तस्य सेनादि-कल्पना"। इति।

'शरीरस्य' मूलव्यूहस्य 'सेनादि-कल्पना' सप्तचत्वारिंश-द्व्यूहस्य कल्पना इत्यर्थः। इति शब्दः स्तुतिसमाप्तौ।

'एतान्' पूर्वोक्तान् अद्वैत-परमानन्दात्मादीन् ब्रह्मत्वेन 'वित्' वेत्ता एतैर्मन्त्रैः 'नित्यं' प्रत्यहं 'देवं' रामं स्तुवन् भवेत्।

---

(१) क, ग, एतैः। (२) घ, ब्रह्माब्रवीत्। (३) क, ग, स्तौति, तस्य ततो।

'ततः' स्तवनात् देवः 'प्रीतः' अनुकूलो भवति । तस्मात्, यतः अयं स्तवः प्रीतिकृत्, तस्मात् 'यः' पुमान् एतैर्मन्त्रैः 'नित्य' त्रिसन्ध्यं देवं स्तौति 'सः' स्तोता 'देवं' विष्णुं 'पश्यति' साक्षात् करोति, अमृतत्वञ्च गच्छति । द्विरुक्तिः समाप्त्यर्था । उक्त-मेव पुनरुच्यते, उत्तर-ग्रन्थाभावादिति हि द्विरुक्त्या सूच्यते ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद-वाक्यानां रामोत्तर-प्रदीपिका ॥

इति रामोत्तर-तापनीयोपनिषद्दीपिका सम्पूर्णा ॥ २३ ॥

रामोत्तरतापन्यां बहुषु मूल-पुस्तकेषु पञ्च खण्डाः, बार्लिन् नामक-नगरे मुद्रितपुस्तके तु सप्त खण्डा दृश्यन्ते । दीपिकायामप्यस्यातिरिक्त-खण्डद्वयस्य व्याख्या न विद्यते । तच्च खण्डद्वयमन्यत्राप्रसिद्धमसङ्गतञ्च ; अतस्तस्य सत्यतयाङ्गीकारे महान् संशयो जायते । तथापि सर्वजन-परिदर्शनाय तत्खण्डद्वयमत्रैव निवेश्यते । यथा,—

अथैनं भरद्वाजो याज्ञवल्क्यमुपसमेत्योवाच ।
श्रीरामचन्द्रस्य महात्मनो ब्रूहि* भगवन् ! इति ।
स होवाच याज्ञवल्क्यः ॥

---

* अत्र मनुमिति कर्मपदं भवितव्यम् ।

स्वप्रकाशः स्वयं ज्योतिः स्वयम्भूरेक-चिन्मयः ।
तदेव रामचन्द्रस्य मनुरध्यक्षरः स्मृतः ॥ १ ॥
अखण्डैक-रसानन्द-तारक-ब्रह्म-वाचकः ।
रामायेति सुविज्ञेयः सदानन्द-चिदात्मकः ॥ २ ॥
नमः पदं सुविज्ञेयं पूर्णानन्दैक-विग्रहम् ।
सदा रमन्ति हृदये सर्व्वंवेदा मुमुक्षवः ॥ इति ॥ ३ ॥

य एतं मन्त्रराजं रामचन्द्रस्य षड़क्षरं नित्यमधीते, सोऽग्निपूतो भवति, स सोमपूतो भवति, स ब्रह्मणा पूतो भवति, स विष्णुना पूतो भवति, स रुद्रेण पूतो भवति, स सर्वेण पूतो भवति, स सर्वयज्ञ-क्रतुभिरिष्टवान् भवति, स सर्वैर्देवैर्ज्ञातो भवति, इतिहास-पुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति, गायत्र्याः षष्टिशत-सहस्राणि जप्तानि भवन्ति, प्रणवानामयुतानि जप्तानि भवन्ति । दश पूर्वान् दशोत्तरान् पुनाति, स पङ्क्ति-पावनो भवति, स महान् भवति, सोऽमृतत्वञ्च गच्छति ।

षष्ठः खण्डः ॥ ६ ॥

अथ पुराणेषु उदाहरन्ति,—

गाणपत्येषु शैवेषु शाक्त-सौर्य्य-मन्त्रेष्वथ ।
वैष्णवेष्वपि सर्वेषु राममन्त्रः फलाधिकः(१)॥ १ ॥
गाणपत्यादि-मन्त्रेषु जपः कोटिगुणाधिकः ।
मन्त्रराजस्त्वनायास-फलदोऽयं षड़क्षरः ॥ २ ॥

(१) ख, राममन्त्र फलाधिकम् ।

षड्क्षरोऽयं मन्त्रस्तु सर्वाघौघ-विनाशनः।
मन्त्रराज इति प्रोक्तः सर्वेषामुत्तमोत्तमः॥ ३॥
कृतं दैन्येन दुरितं पक्ष-मासर्तु-वर्षजम्।
स हरेत निःशेषन्तु चलाचलमिवाचलः॥ ४॥
ब्रह्महत्या-सहस्राणि ज्ञानाज्ञान-कृतानि च।
स्वर्णस्तेय-सुरापाण-गुरुतल्पायुतानि च॥ ५॥
कोटिकोटि-सहस्राणि उपपातकजान्यपि।
सर्वाण्यपि प्रणश्यन्ति राम-मन्त्रानुकीर्त्तनात्॥ ६॥
भूत-प्रेत-पिशाचाद्याः कुष्माण्ड-ग्रह-राक्षसाः।
दूरादेव प्रधावन्ति राममन्त्र-प्रभावतः॥ ७॥
ग्राम्यारण्य-पशुघ्नत्वे सञ्चितं दुरितञ्च यत्।
मद्यपानेन यत् पापं तदप्याशु विनाशयेत्॥ ८॥
अभक्ष्य-भक्षणोत्पन्नं मिथ्याज्ञान-समुद्भवम्।
सर्वं विलीयेत पापं राममन्त्रानुकीर्त्तनात्॥ ९॥
श्रोत्रियः स्वर्णहरणात् यश्च पापमुपस्थितः।
रत्नादे-(१)र्वाथ हरणाज्जपेन तद्विनाशयेत्॥ १०॥
गत्वापि मातरं मोहादगम्याश्चैव योषितम्।
उपासितेन मन्त्रेण रामस्तदपि नाशयेत्॥ ११॥
महापातकया बध्वा(२) सङ्गत्य(३) सञ्चितञ्च यत्।
बुद्धिपूर्बमघं कृत्वा तदप्याशु विनाशयेत्॥ १२॥

---

(१) ष, रत्नाद्यै। (२) ष, बद्धा। (३) सङ्गत्या इति पाठान्तरम्।

कृच्छ्रैः सप्त पराकाद्यैर्नानाचान्द्रायणैरपि ।
पापं दुरपनोद्यं यत् तदप्याशु विनाशयेत् ॥ १३ ॥
आत्मतुल्य-सुवर्णाद्यैर्दानैर्बहुविधैरपि ।
एतदप्यपरिक्षीणं(१) तदप्याशु विनाशयेत् ॥ १४ ॥
अवस्थास्तु चयस्यैव मूलबन्धमघञ्च यत् ।
तन्मन्त्र-स्मरणादेव नशेषं तत् प्रणश्यति ॥ १५ ॥
तत्तद्गुरूपदिष्टेन वर्त्मनानुष्ठितञ्च यत् ।
रामात्मा मनुरेवायं पापराशि-विनाशकृत् ॥ १६ ॥
आ ब्रह्मबीजदोषाश्च नाशयेत पृथक् तथा ॥ १७ ॥
पितृ-मातृ-वधोत्पन्नं बुद्धिपूर्वमघञ्च यत् ।
निःशेषं नाशयेत्त्वेव राममन्त्रानुकीर्त्तनात् ॥ १८ ॥
पितृ-मातृ- स्वसृघ्नानां यद्वा विश्वास-घातिनाम् ।
यद्वा बालवधोत्पन्नं कृत्याः शस्त्रासुसायकम् '?' ॥ १९ ॥
गुरुपुत्र-कलत्रादि-वधोत्पन्नमघञ्च यत् ।
तदनुध्यान(२)-मात्रेण सर्वमेतद्विलीयते ॥ २० ॥
यः प्रयागादि-तीर्थेषु सर्वेषु कुरुक्षेत्रादिषु ।
सूर्य्य-नियमादि-क्रमाद् भूयः ० ० ० ० ॥ २१ ॥
स्त्रीणाञ्च पुरुषाणां स्यान्मन्त्रेणानेन दोषतः ॥ २२ ॥
येषु येषु विरोधिषु रामभद्रमुपासते ।
दौर्बल्यादि-भयान्येषु न भवन्ति कदाचन ॥ २३ ॥

---

(१) किं तदप्यपरिक्षीणे इति पाठान्तरम् । (२) यंदनुध्यान-इति पाठान्तरम् ।

शान्तः प्रसन्न-वदनो(१) अक्रोधो भक्तवत्सलः ।
अनेन सदृशो मन्त्रो जगत्स्वपि न विद्यते ॥ २४ ॥
सम्यगाराधितो रामः प्रसीदत्येव सत्वरम् ।
ददात्यायुष्यमैश्वर्य्यमन्ते (२) विष्णु-पदञ्च यत् ॥ २५ ॥
तदेतदृचाभ्युक्तं तद्विष्णोः परमं पदम् ॥ २६ ॥
स मुक्तो भवति, स मुक्तो भवति ॥ २७ ॥

इत्याथर्वण-रहस्ये रामोत्तर-तापनीयोपनिषत् समाप्ता ॥

---

(१) ख, प्रसन्न वरदः । (२) ख, मन्ते ।

# हनुमदुक्त-रामोपनिषत् ।

क, ख. ग चिह्नित मूलपुस्तकत्रये हनुमदुपनिषन्नास्ति । घ, ङ चिह्नित पुस्तकद्वये तस्याः प्रथम खण्डो न विद्यते । च चिह्निते वार्लिन् नामकनगरीय-पुस्तके पुनः सम्पूर्णा दृश्यते, परन्तु तत् पुस्तकं नैव सम्यक् विशुद्धम् । दीपिकापुस्तकद्वये तु तस्याः सम्पूर्णा व्याख्या वर्त्तते, सा तु न परिशुद्धा । तथापि तदुभयं यथामति विशोध्य दीपिका-सम्मतान् पाठान् मूले, तदितरान् तदधोभागे निवेश्य प्रकटी-क्रियते। यथा—



ओँ सनकादयो योगीन्द्रा अन्ये च ऋषयस्तथा ।
प्रह्लादाद्या विष्णुभक्ता हनुमन्तमिदं ब्रुवन् ॥ १ ॥
वायुपुत्र ! महाबाहो ! किं तत्त्वं ? ब्रह्मवादिनाम् ।
पुराणेष्वष्टादशसु स्मृतिष्वष्टादशस्वपि ॥ २ ॥
चतुर्व्वेदेषु शास्त्रेषु सर्व्वाध्यात्म-विद्यासु च ।
सर्व्वेषु विष्णुभिधानेषु(१) विघ्न-सूर्य्येश-शक्तिषु ॥ ३ ॥
एतेषु मध्ये किं तत्त्वं कथय त्वं महाबल ! ।

पूर्वतापनीये साङ्गस्तारको वर्णितः । उत्तरतापनीये प्रणवस्यापि तारकत्वमुक्तम्, रामस्य परब्रह्मणः प्रणव-बीजाभ्याम्

(१) च, विष्णुभिन्नेषु ।

"वाच्यत्वमुक्तम्। इदमिदानीं सन्दिह्यते, किं विघ्नराजादयः पञ्चापि तुल्यसामर्थ्या एव? आहोस्विदन्यतरस्मिन् विशेषोऽस्ति? किं श्रेष्ठं नाम? अथ के च रामस्याङ्गमन्त्राः? तथा प्रणवे गृहस्थ-ब्राह्मणानामधिकारोऽस्ति? उत यतीनामेवेति?। अधिकार-पक्षे कियांश्च प्रणवो जप्यः? कियांश्च षडक्षरः? इति। विभीषणकृता रामस्तुतिश्च किमित्यप्रसिद्धा? कियता च पुरश्चरणेन परम-पुरुषार्थसिद्धिः? के च पुरश्चरणानुकल्पाः? इति। तदर्थं रामोपनिषदारभ्यते, ओं सनकादय इति।

अस्य अनुष्टुपछन्दः। 'अन्ये च' नारदादयः, 'ब्रुवन्' अब्रुवन् बहुलं छन्दसीत्यमाङ्योगेऽप्यडभावः। ब्रह्मवादिनामभिमत-(१) मिति शेषः। पुराणादिषु प्रतिपाद्यं किं तत्त्वं? सर्वेषु विष्णो 'अभिधानेषु' नामसु मध्ये किं 'तत्त्वं'? श्रेष्ठं नाम?। 'विघ्नः' गणेश्वरः 'सूर्यः' आदित्यः 'ईशः' रुद्रः 'शक्तिः' चण्डी, प्रकृतत्वात्(२) विष्णुश्च, एतेषु मध्ये किं 'तत्त्वं'? परमदैवतम्?।

## हनुमानुवाच।

भोभो योगीन्द्रा ऋषयो विष्णुभक्तास्तथैव च॥ ४॥
शृणुत मामकीं वाचं भवबन्ध-विनाशिनीम्।
एतेषु चैव सर्व्वेषु तत्त्वञ्च ब्रह्म तारकम्॥ ५॥
राम एव परं ब्रह्म राम एव परं तपः।
राम एव परं तत्त्वं श्रीरामो ब्रह्म तारकम्॥ ६॥

(१) क, ब्रह्मवादिनो नाभिमति। (२) ख, प्रत्यक्षत्वात्।

भो भो इत्यादिरे वीप्सा । 'एतेषु' शास्त्रेषु तत्त्वं प्रतिपाद्यं, देवेषु तत्त्वं परमदैवतं, नामसु तत्त्वं सर्वाधिकफलं ब्रह्म तारकं, 'राम एव' श्रीराम एव तारकं ब्रह्म ।

वायुपुत्रेणोक्ता योगीन्द्रा ऋषयो विष्णुभक्ताः पुनः पप्रच्छुर्हनुमन्तं, रामस्याङ्गान् नो ब्रूहि हनुमन्! । स होवाच वायुपुत्रः, विघ्नं वाणीं दुर्गां क्षेत्रपालं सूर्य्यं चन्द्रं नारायणं नारसिंहं वासुदेवं वाराहम् अन्यांश्च(१) कांश्चित् सर्व्वान् मन्त्रान् श्रीसीतां लक्ष्मणं हनुमन्तं शत्रुघ्नं विभीषणं सुग्रीवम् अङ्गदं जाम्बवन्तं प्रणवम्,* एतान् रामस्याङ्गान् जानीयात् । अङ्गान् विना रामो विघ्नकरो भवति(२) ।

राममन्त्रं जपता के चाङ्गमन्त्रा जप्तव्याः ? इति तृतीयं सन्देहं पृच्छन्ति, वायुपुत्रेणोक्ता(३) इति । 'अङ्गान्' अङ्गस्थानीयान् मन्त्रान् देवांश्च ब्रूहि हे हनुमन् ! । 'वाणी' सरस्वती, विघ्नादयो वाराहान्ता दशाङ्गदेवताः, अन्यांश्च कांश्चित् वशिष्ठ-वामदेवादीन, अन्येषामप्राधान्य-सूचनाय सामान्यशब्द-प्रयोगः ।

---

(१) घ, एतान् ।

* मूलपुस्तके श्रीसीतादयः प्रणवान्ता नव दृश्यन्ते । दीपिकाकृता तु सीताद्यः प्रणवान्ता दश इत्युक्तम् । रामार्चन-चन्द्रिकायां भरतोऽप्यङ्गत्वेन पठितः । अतो मूले भरतमिति पदं भवितव्यमिति सुधीभिर्विवेच्यम् ।

(२) पुस्तकान्तरे तान् विना रामो विघ्नकरो भवतीति पाठः ।

(३, क, वायुपुत्रोक्ता ।

श्रीबीज-पूर्व्विकां सीतां, सीताशब्दं चतुर्थ्यन्तं स्वाहान्तं, सीता-द्वयः प्रणवान्ता दश, एतान् रामस्य 'अङ्गान्' अङ्गमन्त्रान् जानीत । एषां प्रणवादि विन्द्वन्तमाद्यक्षरं बीजं, चतुर्थ्यन्तं नाम मन्त्रः । तदुक्तं डामरे ।—

"ओङ्कार-विन्दु-मध्यस्थं नामधेयाद्यमक्षरम् ।
देवतानां स्वबीजं तत् पूजायामृद्धि-सिद्धिदम्" ॥ इति ।

एतन्मन्त्रोल्लङ्घने बाधकमाह, अङ्गान् विनेति । विघ्नकारित्वे जप-पूजनादिकमेव न सिध्यति ।

**पुनर्व्व्यासपुत्रेणोक्तास्ते हनुमन्तं पप्रच्छुः । आञ्जनेय! महाबल!(१) विप्राणां गृहस्थानां प्रणवाधिकारः कथं स्यात्? इति ।**

चतुर्थं संशयं पृच्छन्ति, आञ्जनेयेति । अञ्जनाया अपत्यम् आञ्जनेयः, तत् सम्बोधनम् । महाबलेति संशय-निराकरण-सामर्थ्यं सूचितम् । कथं स्यादिति यतीनामेव स्वातन्त्र्येण तदु-पासन-विधानात् ।

**पुनरुवाच हनुमान् ।**

**अयोध्यानगरे रम्ये समासीनो रामो मया पृष्टः, सीतापते! योगि-मानस-हंस! विप्राणां गृहस्थानां प्रणवाधिकारः कथं स्यात्? इति । स होवाच रामः ।**

(१) आञ्जनेयेत्यत्र रामतप इति । रामजप इति च पाठान्तरम् ।

येषामेव षड़क्षराधिकारो वर्त्तते, तेषां प्रणवाधिकारः स्यात्, नान्येषाम्। प्रणवं केवलम् अकारमुकार मकारमर्द्ध-मात्रा-सहितं जपित्वा यो रामचन्द्रमन्त्रं जपति, तस्य शुभकरोऽहं(१) स्यात्; तस्मात् प्रणवस्य चाकारस्य चोकारस्य च मकारस्य चार्द्धमात्रस्य च ऋषिच्छन्दो-देवताः तद्वत् वर्ण--चतुःस्थान-स्वर--वेदाग्नि- गुणादीन्युच्चार्य्य न्यासं कृत्वा प्रणव मन्त्रान् द्विगुणं जप्त्वा पश्चाद्राममन्त्र-माद्यन्त-प्रणवं यो जपते, स रामो भवेत्, इति रामेणोक्तम्; तस्मात् रामाङ्गं प्रणवः कथित इति वायुपुत्रेणोक्ताः पुनर्हनुमन्तं पप्रच्छुः।

सीतापते! इत्यादि हनुमदुक्तं रामस्य सम्बोधनम्। येषा-मिति। गृहस्थ-साधूनां षड़क्षराधिकारः सम्प्रतिपन्नः प्रणव-स्याङ्गत्वात्, तत्समान-योगक्षेमः प्रणवाधिकारः, 'नान्येषां' षड़क्षरेणादीक्षितानाम्। प्रणवजपं विना राममन्त्रजपेऽधिकार एव नास्तीत्याह, प्रणवमिति। अकारादि-चतुरक्षर-सहित-मितिवक्तव्यम्। अकारादिषु पृथग्विभक्त्युच्चारणं स्वातन्त्र्येण छन्दऋष्याद्यभिधान-सूचनार्थम्। तदेवाह, तस्मादिति। एषा-मर्थादयो(२) ऽथर्व्वशिरसि, माण्डूक्ये, नारसिंहे चोक्ताः। न्यासं

(१) शुभकरोऽहः स्यात् इति पाठान्तरम्। (२) ख. एषामध्यादयो।

कृत्वा प्रणवकलोक्त-मन्त्रान् षड़क्षरान्, 'आद्यन्त-प्रणवम्', आदौ अन्ते च प्रणवोऽस्य तं, प्रणव-पुटितमित्यर्थः, 'जपते' जपति। उपसंहारः, तस्मादिति। इत्यमृतकल्प उक्ताः(१)। पुनः पञ्चमं संशयं(२) पप्रच्छुरित्यन्वयः।

स होवाच हनुमान् रामभक्त-विभीषणाकृत-(३) रामपरिचर्य्यायां सप्त सहस्राणि संस्कृतवाक्यानि, सप्त सहस्राणि गद्यानि, पञ्चशतान्यार्य्याः,(४) अष्टौ सहस्राणि श्लोकाः, चतुर्विंशति-सहस्राणि पद्यानि, दश सहस्राणि दण्डकाः, इत्येवमनुक्रमं ज्ञात्वा कृतकृत्यो भवेदिति(५)। इति हनुमदुपनिषत्(६)।

प्रथमः खण्डः ॥ १ ॥

१ रामस्य भक्तो यो विभीषणः, तेन कृता 'रामपरिचर्य्या' रामस्तुतिः, सा विस्तरतः सम्प्रति श्रोतुमशक्या बहुत्वात्,(७) उद्देशतस्तु(८) वक्ष्यामीत्याशयेनाह, स होवाचेति। 'गद्यानि' संस्कृत-प्राकृत-साधारणानि, 'आर्य्या' गणच्छन्दः, 'श्लोकाः'

(१) क, कल्पामृताः। (२) क, पञ्चमे संशये। (३) ख चिह्नितपुस्तके पप्रच्छुरित्यनन्तरं रामभक्त! विभीषणाकृत इतिपाठः। ग, विभीषणोक्त।

(४) क, पञ्चदश-शतान्यार्य्याः। (५) ख, कृतकृत्यो भवति कृतकृत्योभवति इति। (६) ख, हनुमतोक्ता रामोपनिषत् समाप्ता। (७) क, रामस्तुतिस्तावत् विस्तरतः श्रोतुमशक्यत्वात्। (८) क, उद्देशस्तु।

इत्यादि 'पद्मानि' पञ्चषट्प्रमाणा:, 'हस्तका' षड्विंशत्याद्य-वयवाः। ननु उद्देशमात्रेण तदर्थाज्ञानात् फलासम्बन्धः? इत्याशङ्क्य फलमाह, इत्येवमिति। उद्देशेन अनुक्रमो ज्ञातः, तावतापि कृतार्थो भवेदित्यर्थः। इति हनुमदुक्तं रहस्यज्ञानम्। अतिविस्तृतत्वात् सा न सर्व्वजनप्रसिद्धेतिभावः।

हनुमानुवाच(१)।

सिंहासने समासीनं रामं पौलस्त्यसूदनम्।
प्रणम्य दण्डवद्-भूमौ पौलस्त्यो वाक्यमब्रवीत्॥ ७॥
रघुनाथ! महाबाहो कैवल्यं कथितं मया(२)।
अज्ञाना-(३) सुलभञ्चैव कथनीयञ्च सौलभम्॥ ८॥

षष्ठं सन्देहं निरस्यति, हनुमानुवाचेति।

'पौलस्त्यः' पुलस्त्यापत्यं रावणः तस्य 'सूदनं' निरसितारम्; सूद निरसने। 'पौलस्त्यः' विभीषणः। कैवल्यमिति। यन्मया संस्कृतवाक्यादिषु कैवल्यं 'कथितं' निरूपितं, तत् 'अज्ञानानाम्' अकृतबुद्धीनाम् 'असुलभं' दुष्प्रापं, च शब्दो हेतौ, ततः 'सौलभं' सुलभस्य ज्ञानस्य इदं कारणं सौलभं सुलभज्ञान-प्राप्तिसाधनं त्वया कथनीयमिति प्रार्थितो राम उवाच।

---

(१) ग, घौः घो हनुमानुवाच। (२) घ. त्वया। (३) ग, ङ, अज्ञानां। घ, अज्ञान-।

श्रीराम उवाच।

अथ पञ्च दण्डकाः, पितृघ्नो मातृघ्नो जारी गुरुघ्ना-नेक(१)कोटि-यतिघ्नोऽनेक-कृतपापो(२) यो मम षण्णवति-कोटि-नामानि जपते, स तेभ्यः पापेभ्यः प्रमुच्यते; स्वयमेव सच्चिदानन्दस्वरूपो भवेन्न किम्?।

'अथ' शब्दः पञ्चव्यावृत्त्यर्थः। पञ्च दण्डकाः(३) पठनीयाः विभीषणोक्त-दशसहस्रेभ्य उद्धृत्य पञ्च पठनीयाः। 'जारः' गुरुतल्पगः, चतुर्न्यून-(४) शतकोटिनामानि रामेत्यादीनि। सच्चिदानन्दरूपः स्वयमेव किं न भवेत्? अपि तु भवेदेव। इदं मुख्यं पुरश्चरणम्।

पुनरुवाच विभीषणः। तत्राप्यशक्तो यः, स किं करोति?। स होवाच रामः। पञ्चाशल्लक्ष-मन्मन्त्र-माद्यन्त-प्रणवं(५) मन्मन्त्राद्द्विगुणः प्रणवो(६) यो जपते, स स्वयमेवाहं भवेन्न किम्?। पुनरुवाच काश्यपेयः। तत्राप्य-शक्ता ये, ते किं कुर्वन्तीति। स होवाच रामः। अथ त्रीणि पद्यानि पुरश्चरणानि, तत्राप्यशक्तो(७) यो मम

(१) घ, गुरुद्रोहीनेक। ङ, गुरुघ्नोनेक। (२) ङ, कृत पापे। च, कृत्यो।
(३) क, ख, दण्डिकाः। (४) ख, चतुरून। (५) घ, मन्मन्त्रजापं जपन्।
(६) च, द्विगुणं प्रणवं। (७) ङ, घ, पुरश्चरणविधावशक्तो।

गीता मन्नामसहस्रं मद्विश्वरूपं मदष्टोत्तर-शताभिधानं(१) नारदोक्तं स्तवराजं हनुमदुक्तं मन्त्रराजात्मक-स्तवञ्च सीतास्तवञ्च(२) राम ! इत्येत्यादिभिः स्तवैरेतैर्यो मां नित्यं स्तौति,स मत्सदृशो भवेन्न किम्(३) इति।

द्वितीयः खण्डः ॥ २॥

इत्याथर्व्वण-रहस्ये रामोपनिषत् समाप्ता ॥ २४ ॥

सप्तमं सन्देहं निरस्यन् अनुकल्पान् प्रश्नपूर्व्वकमाह, पुनः रिति। मन्मन्त्रं यो जपते इत्यन्वयः। अस्मन्मन्त्राच्च द्विगुणः प्रणवो जप्तव्य इति शेषः। स स्वयमेव 'अहं' रामः किं न भवेत् ?। पक्षान्तरं पुनरिति। कर्कशाया अपत्यं कार्कशेयः। त्रीणि 'पद्यानि' श्लोकाः, गीतादीन्यष्ट।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्ट-पद-वाक्यानां रामोपनिषद्दीपिका ॥

इति श्रीभट्टरत्नाकरसूनु-भट्टनारायण-विरचिता श्रीरामोपनिषदो दीपिका सम्पूर्णा। २४ ॥

---

(१) ख, मद्विश्वरूपनामाष्टोत्तर शताभिधानं। (२) क, ग, घ, सीता।
(३) ख, भवेन्न किं भवेदिति।

# सर्व्वोपनिषत्सारः।

ओँ कथं बन्धः कथं मोक्षः काऽविद्या का विद्येति जाग्रत्-स्वप्न-सुषुप्तं तुरीयञ्च कथम् अन्नमयः प्राणमयो मनोमय आनन्दमयः कथं कर्त्ता जीवः क्षेत्रज्ञः साक्षी कूटस्थोऽन्तर्य्यामी कथं प्रत्यगात्मा परमात्मा आत्मा माया चेति कथमात्मेश्वरः। अनात्मनो देहादीनात्मत्वे-नाभिमन्यते सोऽभिमान आत्मनो बन्धः; तस्मिन निवृत्तिर्मोक्षः; तमभिमानं कारयति या, साऽविद्या; सोऽभिमानो यया निवर्त्तते, सा विद्या; मन आदि-चतुर्द्दशकरणैः पुष्कलैरादित्याद्यनुगृहीतैः शब्दादीन् विषयान् स्थूलान् यदोपलभते, तदात्मनो जागरणम्।

ओँ बन्धादि मायापर्य्यन्तं लक्षणं तैत्तिरीयके।

सर्व्वोपनिषदां सारः सप्तत्रिंशे चतुर्द्दशे॥ १॥

त्रयोविंशते-(१) रर्थानामादौ स्वरूप-लक्षणप्रश्ने बन्धस्वरूपं तावदाह, आत्मेश्वर इति। अनात्मनः स्थूलत्वात् देहेन्द्रियादौ न्

(१) क, त्रयोविंशति।

'आत्मत्वेन' ब्राह्मणोऽहं, स्थूलोऽहं, गच्छामीत्यात्मत्वेनाभिमन्यते, सोऽभिमानो बन्धः ; तत्त्यागो मोक्षः ; तत्कारिका अविद्या ; तन्निवर्त्तिका विद्या । मन आदीति, मनो-बुद्धि-चित्ताहङ्कार-श्रोत्र-त्वक्-चक्षू-रसना-घ्राण-वाक्-पाणि-पाद-पायूपस्थाख्यैर्ज्ञान-कर्म-करणैः 'पुष्कलैः' बहिराविर्भूतैश्चन्द्राच्युत-शङ्कर-चतुर्मुख-दिक्-वातार्क-प्रचेतोऽश्वि-वह्नीन्द्रोपेन्द्र-मित्र-ब्रह्मभिरनुगृहीतैः सङ्कल्पाध्यवसाय-चेतनाभिमान-शब्द-स्पर्श-रूप-रस-गन्ध-वक्तव्यादान-गमन-विसर्गानन्दान् स्थूलान् बहिर्भूतान् यदोपलभते, तदा आत्मनो जाग्रद्व्यवहारः ।

तद्वासनारहितश्चतुर्भिः करणैः शब्दाद्यभावेऽपि वासनामयान् शब्दादीन् यदोपलभते तन्मनः स्वप्नम् । चतुर्द्दश-करणोपरमाद्विषय-विशेष-विज्ञानाभावात् यदा, तदा आत्मनः सुषुप्तम् । अवस्थात्रयाभावाद्-भावसाक्षि स्वयं भावरहितं नैरन्तर्य्यं चैतन्यं यदा, तदा तत्तुरीयं चैतन्य-मित्युच्यते ।

तद्वासनारहित इति । देवतानिमित्ते अदृष्टनिमित्ते च स्वप्न इति बोद्धव्यम्, चिन्तास्वप्ने वासनाया निमित्तत्वात्; अतएव वासनामयानित्युक्तम् । अरहित इति वा च्छेदः । देवतादृष्टकृते तु वासनाद्वये वासनाशब्देन देवेच्छा धर्म्माधर्म्मौ च व्याख्येयौ । तन्मनःस्वप्नमिति । सा मनोवृत्तिः स्वप्न इत्यर्थः । तदा आत्मनः स्वप्नमिति, तु युक्तः पाठः जागरण-सुषुप्त्योरात्मशब्दग्रहणात् ।

चतुर्द्दशेति, स्वप्ने तु दशानामेवोपरमः, चतुर्णामन्तःकरणानां व्यापारः करणाभावे विषयाणां शब्दादीनां विशेषतो ज्ञाना-भावात् यदा आत्मनोऽवस्थानमिति शेषः, तदा आत्मनः 'सुषुप्त' सुषुप्तिरित्यर्थः । तत्मनः सुषुप्तमिति क्वचित् पाठः, तदा तन्मनः सुषुप्तम् उपरम इति व्याख्येयम् । 'भावसाक्षि' भावानां साक्षि साक्षाद्द्रष्टृ, साक्षिशब्दः साक्षाद्द्रष्टृवाची, स्वयं भावरहितं निर्लेप-त्वात्, 'नैरन्तर्य्यं' स्वार्थे भावप्रत्ययः, व्यवधायक-वस्त्वन्तर रहितं 'चैतन्यं' ज्ञानमात्रं यदा अवतिष्ठते इति शेषः, तदा तुरीयम् ।

अन्नकार्य्याणां षण्णां कोशानां समूहोऽन्नमयः कोश इत्युच्यते । प्राणादि-चतुर्द्दश वायु-भेदा अन्नमये कोशे यदा वर्त्तन्ते, तदा प्राणमयः कोश इत्युच्यते । एतत्कोश-द्वयसंयुक्तो मनआदिभिश्चतुर्भिः करणैरात्मा शब्दादि-विषयान् सङ्कल्पादि-धर्म्मान् यदा करोति, तदा मनोमयः कोश इत्युच्यते । एतत्-कोशत्रय-संयुक्तस्तद्गत-विशेषा-विशेषज्ञो(१) यदा भासते, तदा विज्ञानमयः कोश इत्यु-च्यते । एतत् कोशचतुष्टय स्वकारण-विज्ञाने वटकणिकाया-मिव वृक्षो यदा वर्त्तते, तदा आनन्दमयः कोश इत्युच्यते ।

---

(१) क, ज्ञानं ।

प्रवेति। षट्कोशा यथा—

"प्रस्थि मज्जा मेद-त्वङ्मांस-शोणितम्। (१)

षट्कोशिकमिदं प्रोक्तं सर्वदेहेषु देहिनाम्"॥ इति।

प्राणादिचतुर्दशेति। प्राणापान-व्यानोदान-समान-नाग-कूर्म-कृकर-देवदत्त-धनञ्जया दश, चत्वारोऽन्ये,—

वैरम्भणः स्थानमुख्यः प्रद्योतः प्रकृतस्तथा।

"वैरम्भणादयस्तत्र सर्ववायु-वशङ्गताः"॥ इति।

एते चतुर्दश वायवो देहे यदा कृतास्पदाः, तदा प्राणमयः कोशः। एतदिति, 'एतौ' अन्नमय-प्राणमयो कोशौ, तयोर्द्दयं, तेन संयुक्तः आत्मा 'शब्दादिविषयान्' शब्दादयः पञ्च विषया येषां ते तान्, सङ्कल्पादयो ये धर्मास्तान्। एतदिति, 'एतेन' पूर्वोक्त-कोश-त्रयेण संयुक्तः 'तद्गत-विशेषा-विशेषज्ञः' तद्गतः सङ्कल्पादिगतः विशेषः ब्राह्मणत्वादिः, 'अविशेषः' मनुष्यत्वादि-सामान्यं, तयो-र्ज्ञाता, स विकल्प-कल्पनादिमान्, 'स्वकारण-विज्ञाने'(२) स्वस्य कारणीभूतं यदा एतत् कोशचतुष्टयं पूर्वोक्तं ज्ञानं ब्रह्म तत्र वर्त्तते। तत्र दृष्टान्तः, वटवीजे यथा वटो वर्त्तते तद्वत्, स च निर्व्विषये जाग्रति मनसि सुषुप्ते च भवति।

सुख-दुःख-बुद्ध्याश्रयो देहान्तःकर्त्ता यदा, तदा इष्ट-विषये बुद्धिः सुखबुद्धिः, अनिष्टविषये बुद्धि र्दुःखबुद्धिः, शब्दस्पर्श-रूप-रस-गन्धाः सुख-दुःख-हेतवः।

---

(१) ख, त्वगस्थिमज्जानः शुक्रत्वङ्मांसशोणितम्। (२) ख, स्वकारण-ज्ञाने।

कर्तृलक्षणमाह, सुखेति । सुखं मे भवतु, दुःखं मे मा भूदिति प्रवृत्तः सुख-दुःखयोरनुभविता देहान्तः स्थूल-सूक्ष्म-देहोपाधिः कर्त्तेत्यर्थः । यदा तदेति पूर्व्वेण सम्बध्यते ; यदा देहोपाधिस्तदा कर्त्तेत्यर्थः ।

सुख दुःखवृत्त्योर्लक्षणे लक्षणाङ्गतया आह, इष्टेति । इष्टानिष्ट-विषयानाह, शब्देति । अनुकूलवेद्याः सुखहेतवः, प्रतिकूलवेद्या दुःखहेतवः ।

**पुण्य-पाप-कर्म्मानुसारी भूत्वा प्राप्त-शरीर-सम्बन्ध-वियोगम् अप्राप्तशरीर-संयोगमिव कुर्व्वाणो यदा दृश्यते, तदोपहितत्वाज्जीव इत्युच्यते ।**

सुख-दुःख-हेतून् निदर्शयन् जीवलक्षणमाह, पुण्येति । पुण्य-पापानुसारित्वं ज्ञान-संस्कारयोरप्युपलक्षणम्, "तमेतं विद्या-कर्म्मणी समन्वारभते पूर्वप्रज्ञा च" इति श्रुतेः । प्राप्तस्य शरीरस्य यः सम्बन्धः, तस्य वियोगमिव कुर्व्वाणः अप्राप्तस्य शरीरस्य संयोगमिव शब्दो वस्तुतोऽसङ्गत्वात् । 'उपहितत्वात्' नाना-शरीरोपाधिमत्त्वात् जीव इत्युच्यते । प्राप्त-शरीर-सन्धियोगमिति पाठे प्राप्तः शरीर-योग-सन्धिः(१) येन सः । एक-शरीरत्यागेन अपर-शरीर-ग्रहणम् । सन्धिर्य्योगमित्यस्यैव व्याख्यानम् अप्राप्त-शरीर-संयोगमिति ।

**मन आदिश्च, प्राणादिश्च, सत्त्वादिश्च, इच्छादिश्च, पुण्यादिश्चैते पञ्च वर्गा इति ।**

---

(१) शरीरयोः सन्धिः ।

क्षेत्रज्ञं लक्षयितुं लिङ्गं लिलक्षयिषुः पञ्च वर्गानाह, मन आदिरिति। मनो बुद्धिश्चित्तमहङ्कारश्च; 'प्राणादिः' पञ्च वायवः; 'सत्त्वादिः' त्रयो गुणाः; 'इच्छादिः' कामः सङ्कल्पो विचिकित्सा, श्रद्धाऽश्रद्धा, धृतिरधृतिर्ह्रीर्धीर्भीश्च; 'पुण्यादिः' पुण्य-पाप-ज्ञान-संस्काराः; पञ्च एते वर्गाः, 'इति' वाक्यसमाप्तौ।

**एतेषां पञ्चवर्गाणां धर्मीभूतात्मज्ञानादृते न विनश्यति। आत्मसन्निधौ नित्यत्वेन प्रतीयमान आत्मोपाधिर्यस्तल्लिङ्गशरीरं हृदयग्रन्थिरित्युच्यते।**

लिङ्गस्य मन आदिसन्धिमाह,(१) एतेषामिति। 'धर्मी(२) भूतात्मज्ञानात्' भूतसिद्धो य आत्मा, तस्य ज्ञानं विना न नश्यति, आत्मज्ञाने तु(३) नश्यति "भिद्यते हृदयग्रन्थिः" इत्यादिश्रुतेः।

इदानीं लिङ्गलक्षणान्तर्भूतमात्मान्तरमाह, आत्मसन्निधाविति। आत्मनो नित्यत्वधर्माध्यासात्(४) नित्य इव भासमान इति स्वरूपकथनम्, एवंविधो य आत्मोपाधिः, तस्य द्वे सञ्ज्ञे, लिङ्गं हृदयग्रन्थिरिति च।

**तत्र यत् प्रकाशते चैतन्यं, स क्षेत्रज्ञ इत्युच्यते। ज्ञातृ-ज्ञान-ज्ञेयानामाविर्भाव-तिरोभाव-ज्ञाता स्वयमेव-**

---

(१) ख, आदिसन्धितामाह। (२) क, धर्मी सन्धि-। ख, धर्मी सन्धी।
(३) ख, आत्मज्ञानेन च। (४) ख, नित्यपरस्पर-धर्माध्यासात।

माविर्भाव-तिरोभाव-हीनः स्वयं ज्योतिः, स साक्षीत्युच्यते। ब्रह्मादि-पिपीलिकापर्य्यन्तः सर्वप्राणि-बुद्धिष्वविशिष्टतयोपलभ्यमानः सर्वप्राणि-बुद्धिस्थो यदा, तदा कूटस्थ इत्युच्यते। कूटस्थाद्युपहित(१) भेदानां स्वरूप-लाभहेतुर्भूत्वा मणिगणसूत्रमिव सर्वक्षेत्रेष्वनुस्यूतत्वेन यदा प्रकाशते आत्मा, तदान्तर्यामीत्युच्यते। सर्वोपाधि-विनिर्मुक्त-सुवर्णघनवद्विज्ञान (२) चिन्मात्र-स्वभाव आत्मा यदावभासते, तदा त्वं पदार्थः प्रत्यगात्मेत्युच्यते।

यदर्थं लिङ्गलक्षणमुक्तं, तल्लक्षणमाह, तत्रेति। 'ज्ञाता' प्रमाता, 'ज्ञानं' चित्तवृत्तिः, 'ज्ञेयाः' विषयाः, तेषामुत्पत्ति-विलयौ जानाति स्वयमेवं ज्ञात्रादिवत् यस्य तौ नस्तः, किन्तु निर्विकारः, स्वप्रकाशश्च, स 'साक्षात्' अव्यवधानेन(३) तद्द्रष्टृत्वात् साक्षी-त्युच्यते। 'अविशिष्टतया' विशेष-रहित-चेतनाकारेण सर्वप्राणि-बुद्धिस्थः ध्यायतीव लेलायतीव सुधीरिति श्रुतेः, 'कूटे' बुद्ध्यादौ मिथ्याभूते तिष्ठति कूटस्थः, कूटस्थादयो ये उपहिताः 'भेदाः' उपाधियुक्ता विशेषाः, तेषां स्वरूपलाभं प्रति हेतुः सन् मणि-गुच्छस्य सूत्रवत् सर्वशरीरेष्वनुगतत्वेन यदा भात्यात्मा, तदान्त-र्यामि-सञ्ज्ञो भवति। तदुक्तम्—

(१) क, ग कूटस्थाद्युपरचित। ख, कूटस्थेत्युपाधिरचितो। (२) क, सर्वोपाधिविनिर्मुक्ता सुवर्णघनवद्विज्ञान। (३) क, ख, व्यवधानेन साक्षी।

"अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव"॥ इति।

त्वम्पदार्थः शोधित इति शेषः, न ह्यशोधिते त्वम्पदार्थे सर्वोपाधि-विनिर्मुक्तत्वादि-विशेषण-सम्भवः।

सत्यं ज्ञानमनन्तमानन्दं ब्रह्म, सत्यमविनाशि, नाम-देश-काल-वस्तु-निमित्तेषु विनश्यत्सु यन्न विनश्यति, तदविनाशि ज्ञानमिति उत्पत्ति-विनाश-रहितं चैतन्यं ज्ञानमित्यभिधीयते। अनन्तं नाम मृद्विकारेषु मृदिव, सुवर्णविकारेषु सुवर्णमिव, तन्तुकार्य्येषु तन्तुरिव, अव्यक्तादिसृष्टिप्रपञ्चेषु पूर्वं व्यापकं चैतन्यमनन्तमित्युच्यते। आनन्दो नाम सुखचैतन्य-स्वरूपोऽपरिमितानन्द-समुद्रः।

परमात्मानं तत्पदार्थं(१) वक्तुं ब्रह्मणो रूप-चतुष्टयमाह, सत्यमिति। चतुष्टयं क्रमेण लक्षयति, सत्यमविनाशीति। अविनाशीत्यस्य कोऽर्थः? इत्यत आह, नामेति। नामादि-पञ्चसु नष्टेष्वपि यत् तत्त्वं स्थिरं, तदविनाशि ज्ञातव्यमितिशेषः। ज्ञानपदार्थमाह, ज्ञानमितीति। आद्यं ज्ञानपदं प्रतीकम्, उत्तरमर्थनिर्देशः। एवमनन्तानन्दयोरपि द्रष्टव्यम्। 'पूर्वं' कार्य्यात् प्राग वर्त्तमानं कार्य्यजातस्य च व्यापकं रूपान्तरं इदं(२) शक्तिरिव

(१) क, तं पदार्थं।

(२) क, कार्य्यात्प्रागपि वर्त्तमानं कार्य्यजातस्य च व्यापकं।

रजत-व्यापिका। सुखेति, सुखात्मकं यथैतस्य तद्रूपं, न तु ध्यानादिवं सुखमस्ति। तस्य निरवधितामाह, अपरिमितेति। दृष्टिसुखं श्रोत्रसुखमितिवत्।

**अविशिष्ट-सुख-स्वरूपस्य आनन्द इत्युच्यते। एतद्वस्तु-चतुष्टयं यस्य लक्षणं देश-काल-निमित्तेष्वव्यभिचारि, स(१) तत्पदार्थः परमात्मा परं ब्रह्मेत्युच्यते। त्वं-पदार्थादौपाधिकात् तत्पदार्थादौपाधिकाद्विलक्षणः आकाशवत् सूक्ष्मः केवलः सत्तामात्रस्तत्पदार्थस्यात्मे-त्युच्यते।**

विशेषोऽत्र नास्तीत्याह। अविशिष्टेति। लक्षणमिति! एतच्चतुष्टयं रूपमित्यर्थः। 'अव्यभिचारि' सदोपलभ्यमानं यद्रूपं, स तत्पदार्थ ईश्वर इत्युच्यते। तस्यैव पुनर्नामद्वयमाह, पर-मिति। परमित्युभयत्राप्यव्ययम्। तत्त्वंपदलक्षितमर्थं(२) लक्षयति, त्वंपदार्थादिति। अतत्पदार्थस्य तत्पदार्थादौपाधिका-द्विलक्षण इत्यर्थः। 'आत्मा'(३) मुख्यं ब्रह्मेत्यर्थः।

**अनादिरन्तवती प्रमाणाप्रमाण-साधारणा, न सती, नासती, न सदसती, स्वयमविकाराद्विकारहेतौ निरूप्य-**

---

(१) ख, ग, सन्। (२) तत्त्वं पदलक्ष्यमर्थं (३) ख, आत्म।

माणे असती, अनिरूप्यमाणे सती, लक्षणशून्या,(१) सा मायेत्युच्यते।

इत्यथर्व्ववेदे सर्व्वोपनिषत् सारः समाप्तः। २५॥

मायालक्षणमाह, अनादिरिति। 'अनादिः' पूर्व्वावधिविधुरा, 'अन्तर्वत्नी' गर्भिणी कार्य्योत्पादनसमर्था। अन्तवतीति पाठे कार्य्य-रूपेण नश्वरा, चिद्रूपेण कारणात्मना तु नित्यैव शक्ति-शक्तिमतोरभेदात् चिच्छक्तित्वाच्चास्याः कदाचिदपि ब्रह्मणो जगज्जननाद्यसामर्थ्यासम्भवात् स्वभावहानिप्रसङ्गात् प्राग्ज्ञानात्(२) सत्त्वात् सान्तेति सम्प्रदायविदः।

प्रमाणेति। उभयोरतत्त्व-विषयत्वात् ब्रह्मणः स्वप्रकाशत्वेन प्रमाणाविषयत्वात् 'न सती' ब्रह्मातिरेकेण 'नासती' उपलब्धविरोधात्, 'न सदसती' विरोधात्, किन्तु सदसद्विलक्षणानिर्व्वचनीया ज्ञानबाध्या इति साम्प्रदायिकाः। वयन्तु ब्रूमः ब्रह्मरूपेण सती, कार्य्यरूपेणासती; तेन सर्व्वात्मना सती, नाप्यसती, नापि सदसती, सद्रूपेणासत्त्वाभावात् असद्रूपेण सत्त्वाभावात्, एतदुपपादितम् अधस्तात् स्वयमधिष्ठानस्य ब्रह्मणोऽविकारात्(३) विकारहेतौ निरूप्यमाणे 'असती' आत्मानमदर्शयन्ती ब्रह्मातिरेकेणानुपलभ्यमाना 'अनिरूप्यमाणे' अविवेक-दशायां 'सती' स्वकार्य्यं दर्शयन्ती 'लक्षणशून्या' ईदृशी तादृशीति

(१) क, ग, लक्षणसती लक्षणशून्या। (२) ख, प्रागात्माभावात्।
(३) ख, ऽविकारात्।

निर्वक्तुमशक्या सा माया। माशब्दो निषेधे, याशब्दः प्राप्तौ,
प्राप्तापि सती या नास्ति, सा माया।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानां सर्व्वोपनिषद्दीपिका॥

इति सर्व्वोपनिषत्सारस्य दीपिका सम्पूर्णा। २५॥

## हंसोपनिषत्।

—•—•—

गौतम उवाच।

भगवन् सर्वधर्मज्ञः सर्वशास्त्रार्थपारगः।
ब्रह्मविद्या-प्रबोधो हि केनोपायेन जायते?॥ १॥

सनत्सुजात उवाच।

विचार्य्य सर्ववेदेषु मतं ज्ञात्वा पिनाकिनः।
पार्वत्या कथित तत्त्वं शृणु गौतम! तन्मम॥ २॥
अनाख्येयमिदं गुह्यं योगिनां कोश-सन्निभम्।
हंसस्यागति-विस्तारं भुक्ति-मुक्ति-फल-प्रदम्॥ ३॥

अथ हंस-परमहंस-निर्णयं व्याख्यास्यामः, ब्रह्मचारिणे

शान्ताय दान्ताय गुरुभक्ताय हंस हंसेति सदा अयं सर्वेषु देहेषु व्याप्तो वर्त्तते, यथा ह्यग्निः काष्ठेषु, तिलेषु तैलमिव। तं विदित्वा न मृत्युमेति। गुदमवष्टभ्य आधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकञ्च गत्वा अनाहतमतिक्रम्य विशुद्धौ(१) प्राणान् निरुध्य आज्ञामनुध्यायन्(२) ब्रह्मरन्ध्रं ध्यायन् त्रिमात्रोऽहमित्येव सर्वदा ध्यायन्। अथो नादमाधाराद् ब्रह्मरन्ध्र-पर्य्यन्तं शुद्धस्फटिक-सङ्काशं स वै ब्रह्म परमात्मेत्युच्यते। १॥

ओं हंसोपनिषदं विद्यादष्टत्रिंशत्तमीं ततः।
आथर्वणे चतुःखण्डां हंसज्ञान-पटीयसीम्॥ १॥

शास्त्रतो ब्रह्मणि ज्ञाते सति तत्साक्षात्-कारायोपाय उपदिश्यते। तत्रापि प्रामाण्य-दार्ढ्याय आख्यायिकारभ्यते, भगवन्निति। ब्रह्मविद्यायाः प्रबोधः "आदिशान्त-दलस्थार्णान्(३) संहरेत् कमलासनः" इत्यादि कुण्डल्यनुसारेण वायोरपि-चोर्द्ध्वं(४) गच्छतः त्रिः परिवृत्तिः, 'मणिपूरकं' नाभिचक्रं 'गत्वा' प्राप्य 'अनाहतम्' अनाहतचक्रं हृदि चक्रं 'अतिक्रम्य' उल्लङ्घ्य 'विशुद्धौ' कण्ठदेशे 'प्राणान्' वायून् निरुध्य 'आज्ञाम्' आज्ञाचक्रं भ्रूमध्यवर्त्ति अनुध्यायन् ब्रह्मरन्ध्रञ्च सहस्रदलपङ्कजे

(१) ख, नित्यशुद्धौ। (२) क, ख, आज्ञामनुध्यायं।
(३) ख, आदिशान्त-दलस्थानान। (४) ख, चाधं।

ध्यायेन् 'त्रिमात्र:' ओङ्कार: अहमित्येव 'सर्वदा' नित्यं ध्यायन् । अथो नादं ध्यायन्, कीदृशं? 'आधारात्' आधारमारभ्य ब्रह्मरन्ध्रपर्य्यन्तं प्रतीयमानं तथा उज्ज्वलं स वै ब्रह्म आत्मा(१) परमात्मैव । १ ।

अथ हंसऋषिः पङ्क्तिश्छन्दःपरमहंसो देवताऽह-मिति बीजं स इति शक्तिः सोऽहमिति कीलकं षट्-सङ्ख्यया(२) अहोरात्रयोरेक-विंशति सहस्राणि षट्शता-न्यधिकानि भवन्ति । सूर्य्याय सोमाय निरञ्जनाय निरा-भासाय तनु(३)सूक्ष्म प्रचोदयादिति, अग्नीषोमाभ्यां वौषट्, हृदयाद्यङ्गन्यास-कराङ्गन्यासौ भवतः, एवं कृत्वा हृदये अष्टदले हंसात्मानं ध्यायेत् ।

हंसमन्त्रस्य ऋष्यादिकमाह, अथ हंस इति । अन्यत्र तु भिन्ना ऋष्यादय उक्ताः, यथा,—

"ऋषिर्ब्रह्मा स्मृतो देवी गायत्री छन्द ईरितम् ।
देवता जगतामादिः सम्प्रोक्त (४) गिरिजापतिः" ॥ इति ।

तत् हंसस्य वाह्यपुरश्चरण-विषयं ज्ञातव्यम् । षट्सङ्ख्यया ऋष्यादया ज्ञेया इति शेषः । यद्वा 'षट्शतानि' षट्सङ्ख्यया

---

(१) क, ब्रह्मआत्मा । ख, ब्रह्माआत्मा । (२) क, ग, ङ, षट्सङ्ख्या ।
(३) क, तनुः । ख, तङ्गः । (४) क, सम्प्रोक्ता ।

अधिकानि भवन्तीत्यर्थः, षट्शतोपरि षट् इत्यर्थः । २१६०६ इत्युक्तः । अमृतविन्दौ तु—

"अशीतिः षट्शतञ्चैव सहस्राणि त्रयोदश ।
लक्षश्चैकोऽपि निश्वासा अहोरात्र-प्रमाणतः" ॥ इति

सङ्ख्याभेद उक्तः, स तत्रैव समाहितः ।

षडङ्गान्याह, ओं सूर्य्याय हृदयाय नमः, ओं सोमाय शिरसे स्वाहा, ओं निरञ्जनाय शिखायै वषट्, ओं निराभासाय कवचाय हुं, ओं तनु सूक्ष्म(१) नेत्रत्रयाय वौषट्, ओं प्रचोदयात् अस्त्राय फट् । एभिरेवादौ करन्यासः । हसां हसोमित्यादिना(२) षड़ङ्गानोत्यपरे । हसं सूर्य्यात्मने हं, हमीं सोमात्मने(३) शिर इत्यादिनेत्यन्ये । अग्नीषोमाभ्यां वौषड़िति षण्णां शेषः । 'हम' अग्निः 'सः' सोमः "हं पुमान् प्रकृतिस्तु सः" इति चोक्तम् । हृदयादीनि यानि अङ्गानि तेषां न्यासः करन्यासश्च तौ भवतः । एवं न्यासं कृत्वा हृदये अष्टदलं, तत्र हंसात्मानं ध्यायेत् ।

**अग्नीषोमौ पक्षावोङ्कारः शिरो विन्दुस्तु नेत्रं मुखं, रुद्रो रुद्राणी चरणौ बाहू कालश्चाग्निश्चोभे पार्श्वे भवतः । पश्यत्यनागारश्च(४) शिष्टोभयपार्श्वे भवतः ।**

ध्येयस्वरूपमाह, अग्नीषोमाविति । हंसस्य पक्षित्वात् पक्षिरूपेण ध्यानं ताभ्यां जगत् प्रवृत्तेः । ओङ्कारः शिरः उत्तमा-

(१) क, तनुः सूक्ष्मः ।

(२) क, सामित्यादिना । (३) क, ह्रां सूर्य्यात्मने ह्, ह्रीं सोमात्मने ।

(४) क, पश्यत्यनागारिच । ख, पश्यति नागारिच ।

ज्ञत्वात्, विन्दुस्तु नेत्रं प्रकाशकत्वात्, मुखं वह्नी वक्तृत्वात्, वह्न्याणी चरणौ सर्वाधारत्वात्, बाहू कालश्च सर्वदाहत्वात्, अग्निश्चोभे पार्श्वे भवतः पूर्वापरे दक्षिणोत्तरे वासौ सत्व-(१) सामान्यात्, 'पश्यति' इत्यधातुः लक्षणया ज्ञानम्, 'अनागारः' अनिकेतः वैराग्यं, ते अवशिष्टे उभयपार्श्वे भवतः पूर्वापरे दक्षिणोत्तरे वा।

एषोऽसौ परमहंसो भानुकोटिप्रतीकाशः, येनेदं व्याप्तम्, तस्याष्टधा वृत्तिर्भवति। पूर्वदले पुण्ये मतिः, आग्नेय्यां निद्रालस्यादयो भवन्ति, याम्ये क्रूरे मतिः, नैर्ऋते पापे मनीषा, वारुण्यां क्रीडा, वायव्ये गमनादौ बुद्धिः, सौम्ये रतिप्रीतिः, ईशाने द्रव्यादान(२) मध्ये वैराग्यं, केशरे जाग्रदवस्था, कर्णिकायां स्वप्नं, लिङ्गे सुषुप्तिः, पद्मत्यागे तुरीयं, यदा हंसो नादे लीनो भवति, तदा तुर्य्यातीतमुन्मनन-(३)मजपोपसंहारमित्यभिधीयते।

ध्यानमुपसंहरति, एषोऽसाविति। तस्याष्टसु दलेषु स्थितस्य अष्टधा वृत्तिमाह, तस्येति। तत्र दिक्पाल-वृत्त्यनुसारेण फलं बोद्धव्यम्। इदञ्च दिगभिप्रायेण सामान्यतः फलमुक्तम्, तत्तद्दला-भिप्रायेण तु विशेषफलमध्यात्मविवेके उक्तम्, तद्यथा—

(१) क, घोतम।

(२) क, ग, द्रव्यादाने। (३) क, मूनमानस, ख, मुन्मनस। घ, मुन्मनं।

गुद-लिङ्गान्तरे चक्रमाधारन्तु चतुर्दलम्।
परमः सहजस्तद्वदानन्दो वीरपूर्वकः॥
योगानन्दश्च तस्य स्यादीशानादिदले फलम्।
स्वाधिष्ठान(१)-लिङ्गमूले षट्पत्रं चक्रमस्य तु॥
पूर्वादिषु दलेष्वाहुः फलान्येतान्यनुक्रमात्।
प्रश्रयः क्रूरता गर्व(२) नाशो मूर्च्छा ततः परम्॥
अवज्ञा स्यादविश्वासो जीवस्य चरतो ध्रुवम्।
नाभौ दशदलं पद्मं मणिपूरक-सञ्ज्ञकम्॥
सुषुप्तिरत्र तृष्णा स्यादीर्षा पिशुनता तथा।
लज्जाभय-घृणा-मोह-कुधियोऽथ विषादिता॥
हृदयेऽनाहतं चक्रं दलैर्द्वादशभिर्युतम्।
लौल्य-प्रणाशः कपटं वितर्कोऽप्यनुतापिता॥
आशाप्रकाशश्चिन्ता च समीहा समता ततः।
क्रमेण दम्भो वैकल्यं विवेको हृङ्कृतिस्तथा॥
फलान्येतानि पूर्वादि-दलस्थस्यात्मनो विदुः।
कण्ठेऽस्ति भारतीस्थानं विशुद्धिः षोडशच्छदम्(३)॥
तत्र प्रणव उद्गीथ हुं फड्वषडथ स्वधा।
स्वाहा नमोऽमृतं सप्तस्वराः षड्जादयो मताः॥
इति पूर्वादिपत्रस्थे फलान्यात्मनि षोडश" ॥ इति ॥ ३ ॥

स्थानान्तरेषु नियममाह, मध्य इति। 'लिङ्गे' नाले 'पद्म-त्यागे' पद्मादूर्द्धं निरालम्ब-प्रदेशे(४) 'नादे' वक्ष्यमाणे 'तुर्य्यातीतं'

---

(१) क, स्वाधिष्ठानां। (२) क, पार्श्वं। (३) क, षोडशदलम्। (४) क, उपदेशे।

तुरीयात्परम्, 'उन्मननम्' मनन-रहितम् 'अजपोपसंहारं' प्राण-व्यापार-रहितम् । त्रय एते पर्य्यायाः ।

एवं सर्वं(१) हंसवशात्; तस्मान्मनो हंसो वय्यिचाते; स एव जपकोटया(२) नादमनुभवति, एवं सर्वं(३) हंस-वशात् ।

एवं सर्वमित्यादि । 'एवं' तुरीयातीतपर्य्यन्तमुक्तं सर्वं फलं 'हंसवशात्' हंसजप-निवेदनाधीनं वेदितव्यम् । 'तस्मात्' सर्व-फलदत्वात् मनो 'हंसः' हन्ति गच्छति हंसः समदर्शकं लिङ्गं मनो विचार्य्यते मनःस्वरूपमेव विचार्य्य निश्चेतव्यम्, येन त्वमर्थो-ऽवभासते, 'स एव' हंसोपासकः 'जपकोट्या' कोटिसङ्ख्यक-जपनिवेदन-पूर्वकमनो-नियमे सति नादं वक्ष्यमाणम् अनु-भवति । तस्यैवेति पाठे हंसस्यैव, पुनरेवमित्यादिरुपसंहारः नादहेतुत्वस्याधिकस्योक्तत्वात् ।

नादो दशविधो जायते। चिणीति प्रथमं, चिञ्चि-णीति द्वितीयं, घण्टानादस्तृतीयः, शङ्खनादस्तुर्थः, पञ्चमस्तन्त्रीनादः, षष्ठस्ताल-नादः, सप्तमो वेणुनादः, अष्टमो मृदङ्गनादः, नवमो भेरीनादः, दशमो मेघनादः; नवमं परित्यज्य दशममेवाभ्यसेत् ।

(१) ख, सर्वे । (२) क, यशाजपकोट्या । (३) ख, सर्वे ।

सप्रकारां नादोत्पत्तिमाह, नाद इति। चिण्यादयोऽनुकरण-शब्दाः; इति शब्दा अनुकरणलक्ष्योतकाः; 'घण्टानादः' घण्टाया इव नादः, एवमग्रेऽपि। नवमं परित्यज्येति, नवमपर्यन्तान् त्यक्त्वा ब्रह्मभवनफलं दशममेव अभ्यसेत्॥

प्रथमे चिञ्चिणी गात्रं, द्वितीये गात्रभञ्जनम्(१)।
तृतीये खेदनं याति, चतुर्थे कम्पते शिरः।
पञ्चमे स्रवते तालु(२) षष्ठेऽमृतनिषेवणम्।
सप्तमे गूढविज्ञानं परा वाचा तथाष्टमे॥
अदृश्यं नवमे देहं दिव्यं चक्षुस्तथामलम्।*
दशमे परमं ब्रह्म भवेद्ब्रह्मात्म-सन्निधौ॥

तस्मिन् मनो विलीयते मनसि सङ्कल्प-विकल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयं ज्योतिः शुद्धो बुद्धो नित्यो निरञ्जनः प्रकाशते इति। २॥

दशानां प्रत्येकं लक्षणानि, फलानि चाह, प्रथमे इति। चिञ्चिणीशब्दाकारं तद्वदिदं(३) भवति। 'गात्र-भञ्जनं' गात्रभङ्गः(४) इव भवति, 'खेदनं' खिन्न इव भवति, 'अमृतनिषेवणम्' अमृत-पानमिव। दशममिति, दशमञ्चेदभ्यस्यति परमं ब्रह्म भवेत्।

---

(१) ख, गोत्रभञ्जनम्। (२) क, स्रवते तालु।
(३) ख, तद्वदिव। (४) ख, गोत्रभञ्जनं गोत्रभङ्गः।

तस्य फलमाह, ब्रह्मात्मेति। तस्मिन् ब्रह्मण आत्मनः सन्निधौ सति मनो 'विलीयते' विलीनं भवति, मनसि सङ्कल्प-विकल्प-रूपे गते सति, पुण्यस्य पापस्य तयोः समाहारे दग्धे सति, सदाशिवो भवति। शक्त्यात्मा च शिवशक्ति-रूपो भूत्वा सर्वत्राव-स्थितादिरूपो ब्रह्मरूपः(१) प्रकाशते ब्रह्मैव भवति। इति शब्दो हंसवर्णन-समाप्त्यर्थः। २॥

सनत्सुजातेन गौतमं प्रति पार्वती-परमेश्वर-संवादे हंस-वर्णनमुक्तम्। स संवादो यथा,—

ओं ईश्वर उवाच।

अजपाराधनं देवि! कथयामि तवानघे!।
यस्य विज्ञानमात्रेण परं ब्रह्माधिगच्छति॥ १॥
हंसं परं महेशानि! प्रत्यहं जपते नरः।
मोहान्धो यो न जानाति(२) मोक्षस्तस्य न विद्यते॥ २॥
श्रीगुरोः कृपया देवि! ज्ञायते जप्यते यदा(३)।
तस्योच्छ्वासैस्तु निश्वासैस्तदा बन्धक्षयो भवेत्॥ ३॥
उच्छ्वासे चैव निश्वासे हंस इत्यक्षर-द्वयम्।
तस्मात् प्राणस्तु हंसाख्य आत्माकारेण संस्थितः॥ ४॥
नाभेरुच्छ्वास निश्वासो(४) हृदयाग्रे व्यवस्थितः।
षष्टिश्वासैर्भवेत् प्राणः षट्प्राणा नाडिका(५) मता॥ ५॥

(१) क, शिवशक्तिरूपो ब्रह्मरूपः। (२) क, दक्षिणामूर्त्ति-संहितायां मोक्षकाङ्क्षं मजानातीति पाठः। (३) क, ततः। (४) दक्षिणामूर्त्तिसंहितायां नाभे-रुच्छ्वास-निश्वासात इति पाठः। (५) क, षट् प्राणैर्घटिका।

षष्टिनाड्या-(१) ह्यहोरात्रं जपसङ्ख्या(२)क्रमो मतः।
एकविंशति-साहस्रं षट्शताधिकमीश्वरि ! ॥ ६ ॥
प्रत्यहं जपते प्राणी सान्द्रानन्दमयीं पराम्(३)।
उत्पत्तिर्जप आरम्भोऽमृतिरस्य(४) निवेदनम् ॥ ७ ॥
विना जपेन देवेशि ! जपो भवति मन्त्रिणः।
अजपेयं ततः प्रोक्ता भवपाश-निकृन्तनी ॥ ८ ॥
एवं जपं महेशानि ! प्रत्यहं विनिवेदयेत्।
गणेश-ब्रह्म-विष्णुभ्यो हराय परमेश्वरि ! ॥ ९ ॥
जीवात्मने क्रमेणैव तथा च परमात्मने।
षट् शतानि सहस्राणि षडेव च तथा पुनः ॥ १० ॥
षट् सहस्राणि च पुनः सहस्रञ्च सहस्रकम्।
पुनः सहस्रं गुरवे क्रमेण विनिवेदयेत् ॥ ११ ॥
आधारे स्वर्णवत् स्मृत्वा वादि-सान्तानि संस्मरेत् ॥ १२ ॥
द्रुतसौवर्ण-वर्णानि दलानि परमेश्वरि ! ।
स्वाधिष्ठाने हि हेमाभे वादिलान्तानि च स्मरेत् ॥ १३ ॥
विद्युत्पुञ्ज-प्रभाभानि सुनीलमणिपूरके।
डफान्तानि(५) महानील-प्रभाणि च विचिन्तयेत् ॥ १४ ॥
पिङ्गवर्ण-महावह्नि-कर्णिकाभानि चिन्तयेत्।
कादिठान्तानि(६) पद्माणि चतुर्थेऽनाहते प्रिये ! ॥ १५ ॥

---

(१) क, षष्टिनाड्या। (२) क, जपा समोः।
(३) क, प्राणः स्वादानन्दमयी परा। (४) दक्षिणामूर्त्तिसंहितायां, मृत्युश्च।
(५) क, डकान्ताभि। (६) क, कादि डान्तानि।

दिग्दले धूम्रवर्णे तु रक्तवर्णान् स्वरान् स्मरेत् ।
आज्ञायां विद्युदाभायां शुभो हस्तो विचिन्तयेत् ॥ १६॥
कर्पूर-द्युति-संराजत्-सहस्रदल-नीरजे ।
नादात्मकं ब्रह्मरन्ध्रं जानीहि परमेश्वरि ! ॥ १७ ॥
एतेषु सप्तचक्रेषु स्थितेभ्यः परमेश्वरि ! ।
जपं निवेदयेदेनमहोरात्र-भवं प्रिये ! ॥ १८ ॥
अजपा नाम गायत्री योगिनां मोक्षदायिनी ।
अस्याः सङ्कल्पमात्रेण नरः पापैः प्रमुच्यते ॥ १९ ॥
अनया(१) सदृशी विद्या अनया सदृशो जपः ।
अनया सदृशं पुण्यं न भूतं न भविष्यति ॥ २० ॥

अस्य पुरश्चरणरूपेणापि सारदातिलके विधानमुक्तम्, तद्यथा—

वियद्(२)बिन्दु-ललितस्तदादिः(३) सर्गसंयुतः ।
अजपाख्यो मनुः प्रोक्तो ह्यक्षरः सुरपादपः ॥ १ ॥
ऋषिर्ब्रह्मा स्मृतो देवी गायत्री च्छन्द ईरितम् ।
देवता जगतामादिः प्रोक्तोऽत्र(४) गिरिजापतिः ।
हंसा षड्दीर्घ-युक्तेन कुर्य्यादङ्ग-क्रियां मनोः ॥ २ ॥
उद्यद्भानु-स्फुरित-तड़िदाकार मर्द्धाम्बिकेशं(५)
पाशाभीती वरद-परशू सन्दधानं कराब्जैः ।
दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं
सौम्याग्नेयं वपुरवतु न-(६) चन्द्रचूडं त्रिनेत्रम् ॥ ३ ॥

(१) क, नानया, एवं सर्व्वत्र । (२) वा, वियद् । (३) ख, तदादिः ।
(४) ख, प्रोक्तो त्र । (५) क, सर्व्वां । ख, सद्धां । (६) क, ख, न- ।

भानुलक्षं जपेन्मन्त्रं पायसेन ससर्पिषा।
दशांशं जुहुयात् सम्यक् ततः सिद्धो भवेन्मनुः॥ ४॥
दोमादीमजिते पीठे प्रागुक्ते प्रयजेद्विभुम्।
मूर्त्तिं मूलेन सङ्कल्प्य यजेदङ्गादिभिः सह॥ ५॥
ऋतुं वत्सर रथारा(१) दिग्दलेषु विदिक्षु च।
अर्च्चयेद्दतजां गोजामब्जाक्षा-मद्रिजां पुनः॥ ६॥
लोकेश्वरांस्तदस्त्राणि पूजयेद्देवमन्वहम्(२)।
अर्घ्यञ्च विधिवद्दद्यात् प्राक् प्रोक्तेनैव वर्त्मना॥ ७॥
मन्त्राद्य मातृकापद्मे पूर्णकुम्भं निधाय तम्।
पिधाय वामहस्तेन ततो(३) मन्त्रेण संयतः॥ ८॥
अष्टोत्तर-शतं मन्त्रं जपेत् तोयं सुधामयम्।
स्नात्वा तेनाभिषिञ्चेद्यं स भवेद्विगतामयः॥ ९॥
आयुरारोग्य-विभवानमिताल्लभते नरः।
अनेनैव विधानेन विषार्त्तो निर्व्विषो भवेत्॥ १०॥
इन्दुभ्यां विगलत्-सुधा परिचितं मन्त्राद्यवीजं ततः
प्रश्नोतत्परमामिताहं-शशिना संसिक्तमाद्यं स्मरन्।
मन्त्री मन्त्रमिमं जपन् विष-गदोन्मादापमृत्यु-ज्वरान्
जित्वा वर्षशतं समग्र-विभवो जीवेत् सुखं बन्धुभिः"
॥ इति ॥ ११ ॥

---

(१) क, ऋजुं वत्संररथारो। ख, ऋतुवत्सं रथारो।
(२) ख, देव सततम्। (३) ख, न्यस्त।

ओं वेदप्रवचनं वेदप्रवचनम् ॥

इत्यथर्ववेदे हंसोपनिषत् समाप्ता ॥ २६ ॥

ओं वेदप्रवचनमिति। इदं हंसनिरूपणम् अकाराद्यात्मकस्य वेदस्य 'प्रवचनं' निर्व्वचनहेतुः(१)। तद्यथा हंसमन्त्रस्यैव पुम्प्रकृत्यात्मकस्य वर्णविपर्य्यासे सोऽहं भवति; स च परमात्ममन्त्रः, तस्य चतुष्टयवद्व्यञ्जन-परित्यागे पूर्वरूपे च(२) ओमिति भवति, स च शुद्धब्रह्मवाची, तत्प्रतीकस्य ओङ्कारात्मतस्रो व्याहृतयः, ताभ्यस्त्रिपदा, त्रिभ्यः पदेभ्यस्त्रयो वेदाः, वेदेभ्यो लोकत्रयमिति। द्विरुक्तिः समाप्त्यर्थां।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानां हंसोपनिषद्दीपिका ॥

इति हंसोपनिषदो दीपिका सम्पूर्णा। २६ ॥

(१) ख, निर्व्वचनं हेतुः। (२) ख, पर रूपेच।

# परमहंसोपनिषत्।



अथ योगिनां परमहंसानां कोऽयं मार्गः? तेषां का स्थितिः? इति नारदो भगवन्तमुपगम्योवाच। तं भगवानाह।

ओँ ब्रह्मात्मा परमो हंसस्तस्योपनिषदुच्यते।
त्रिखण्डाथर्व्वशिखरे चत्वारिंशत्तमी मता॥ १॥

सन्न्यासोपनिषदि(१) परमहंस-सन्न्यास उक्तः, हंसोपनिषदि च योग उक्तः, तत्र प्राप्तयोगस्य स्वामिनः कीदृशी लोके स्थितिः? इति सन्दिह्यते। यदुक्तम्,—

"स्थितप्रज्ञस्य का भाषा? समाधिस्तस्य केशव!।
स्थितधीः किं प्रभाषेत? किमासीत? व्रजेत किम्?"॥ इति।

तथाच, पामरत्व-शङ्कया अवज्ञा स्यात्, ततो महान् प्रत्यवाय इत्येतत् स्वरूपज्ञानार्थं परमहंसोपनिषदारभ्यते। 'योगः' चित्तवृत्ति-निरोधः, तद्वन्तो योगिनः 'परमहंसाश्च' उत्पन्नतत्त्वज्ञानाः, तत्र निरुद्धचित्तोऽप्यणिमादि-सिद्धिषु वियुक्ति-दशायां समासक्तः सन् आत्मनि संलीनो(२) विपर्य्यस्तश्च(३) परम-

(१) क, हंसोपनिषदा। (२) क, संश्लोखी। क, संश्लीनो। (३) क, विपर्य्यासश्च।

पुरुषार्थाद् भ्रश्यतीति परमहंसपदं, परमहंसस्य विवेकेनैश्वर्य्यस्यासारतां बुद्धा विरज्यति। तदुक्तम्,—

"चिदात्मन इमा इत्थं प्रस्फुरन्तीह शक्तयः।
इत्यस्याश्चर्य्य-जालेषु नाभ्युदेति कुतूहलम्" ॥ इति ॥

परमहंसो विद्याबलेन विधि-निषेधान् लङ्घयति, ततः शिष्टविज्ञानं स्यात्। तदुक्तम्,—

"सर्व्वे ब्रह्म वदिष्यन्ति सम्प्राप्ते तु कलौ युगे।
नानुतिष्ठन्ति मैत्रेय! शिश्नोदर-परायणाः" ॥ इति ॥

तदर्थं योगिग्रहणम्। अधिकारप्राप्त-निष्काम-कर्म्मानुष्ठानमपि योग एव। विशेषणद्वयेन स्थितप्रज्ञत्व-गुणातीतत्वासङ्गत्वादयोऽपि विशेषा दर्शिताः। यदुक्तं प्रश्न-प्रतिवचनाभ्यां वाशिष्ठे,(१)

"एवं स्थिते(२) हि भगवन् जीवन्मुक्तस्य सन्मतः।
अपूर्वातिशयः कोऽसौ भवत्यात्मविदांवर!" ॥ १ ॥

वशिष्ठ उवाच।

"नास्य कस्मिंश्चिदेवांशे भवत्यतिशयेन धीः।
नित्यतृप्तः प्रशान्तात्मा स आत्मन्येव तिष्ठति ॥ २ ॥
मन्त्रसिद्धैस्तपःसिद्धैर्योग-(३) सिद्धैश्च भूरिशः।
कृतमाकाश-यानादि तत्र का स्यादपूर्वता ॥ ३ ॥
एक एव विशेषोऽस्य न समो(४) मूढबुद्धिभिः।
सर्व्वत्रास्था-परित्यागः(५) सदा निर्व्वासनं मनः ॥

(१) ख, वशिष्ठ उवाच। (२) ख, स्थितो। (३) ख, मन्त्र। (४) क, ख, न सदृशो। (५) क, परित्यागात्।

एतावदेव खलु लिङ्गमलिङ्ग-मूर्त्तेः
संशान्त-संसृति-चिरभ्रम-निर्वृतस्य ।
तज्ज्ञस्य यन्मदन-कोप-विषाद-मोह-
लोभापदामनुदिनं निपुणं तनुत्वम्" ॥ ५ ॥ इति ॥

को मार्ग इति प्रष्टव्ये अयमिति वचनमदृष्टपूर्वं प्रत्यक्षतो दर्शय इति प्रश्नार्थम्। प्रकृतान्वयेनैव सिद्धे पुनस्तेषामिति वचनं गौरवार्थम्। 'नारदः' ब्रह्मपुत्रो देवर्षिः 'भगवन्तं' सनत्कुमारं, स हि नारदाय शोकतरणाय भूमानमुपदिष्टवान्। यथा "छन्दोगानामाम्नातमधीहि भगव! इति हो ससाद(१) सनत्कुमारं नारदः" इत्यारभ्य "तस्मै मृदितकषायाय॰ तमसः पारं दर्शयति(२) भगवान् सनत्कुमारः" इत्यन्तेन। स ततो लब्धसाक्षात्कारो मार्ग-स्थितौ पृच्छति विज्ञानदार्ढ्याय 'उपगम्य' न्यायेनोपसन्नः सन 'उवाच' पप्रच्छ। उत्तरोपक्रमः, तमिति। 'आह' ब्रवीति ; कालसामान्ये लट्।

**योऽयं परमहंसमार्गो लोकेषु दुर्लभतरो ननु बाहुल्योऽपि, यद्येकोऽपि भवति, स एव नित्य-पूतस्थ इति, स एव वेदपुरुष इति विदुषो मन्यते(३) ॥**

अत्रातिशयाय प्रशंसामाह योऽयमिति। यः पृष्टः सोऽयं मनसि स्फुरन् परमकाष्ठां प्राप्तस्य वैराग्याद्दृष्टचरत्वात् दुर्लभ-

(१) ख, चोपससाद। (२) ख, मृत कषायाय तमसस्तादिरदर्शयति।
(३) क, ग, मन्यन्ते।

तत्त्वम् । अत्यन्तासत्त्वमाशङ्क्याह, नत्विति । बाहुल्यमस्यास्तीति बाहुल्यः अर्शआद्यच्(१) ॥

अयं मार्गोऽतिदुर्लभश्चेन्नादर्त्तव्यः,

"अतिक्लेशेन ये ह्यर्था अनर्थास्ते मता मम" ।

इति न्यायादित्याशङ्क्याह, यदीति ।

"मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।

यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" ॥

इति न्यायेन यद्येकः कश्चिद्-भवति पुरुषधौरेयः । यथा जाबालोपनिषद्युक्तं "तत्र परमहंसा नाम संवर्त्तकारुणि-श्वेत-केतु--दुर्व्वास-ऋभु--निदाघ-जडभरत--दत्तात्रेय-रैवतक--प्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्त" इति । स एव 'नित्यपूतः' परमात्मा, तत्र तिष्ठति नित्यपूतस्थः, स एव न केवलो योगी, नापि केवलः परमहंसः, स एव 'वेदपुरुषः' वेदप्रतिपाद्यः पुरुषो ब्रह्मेति 'विदुषः' विद्वांसः ब्रह्मानुभव-चित्त-विश्रान्ति-प्रतिपादक-शास्त्रपारङ्गताः, मन्यते, वचनव्यत्ययः । तस्य ब्रह्मनिष्ठत्वन्तु अन्येऽपि मन्यन्ते, विद्वांसस्तु ब्रह्मत्वमेव मन्यन्ते । तथाच स्मृतिः,—

"दर्शन-स्पर्शने(२) हित्वा स्वयं केवलरूपतः ॥

यस्तिष्ठति स तु ब्रह्मन्! ब्राह्मणो ब्रह्मवित् स्वयम्" ॥ इति ।

ननु बाहुल्योऽपि यद्येकोऽपि इत्यपिशब्दद्वयमार्थपाठे दृश्यते, तत्र पदार्थे अपिशब्दावल्पतां द्योतयतः,

(१) क, पचाद्यच । (२) ख, दर्शनादर्शने ।

**महापुरुषो यच्चित्तं तत् सदा मय्येवावतिष्ठते; तस्मादहञ्च तस्मिन्नेवावस्थीयते।**

नित्यपूतस्यत्वं वेदपुरुषत्वस्य मुखतो विषदयन् अर्थात् का स्थितिरिति प्रश्नस्योत्तरं सूचयति, महापुरुष इति। महापुरुषत्वे हेतुः 'यत्' यस्मात् चित्तं तदीयं 'मय्येव' भगवत्यात्मनि अवतिष्ठते, तत् तस्मात् महापुरुषः संसारगोचराणां मनोवृत्तीनाम् अभ्यास-वैराग्याभ्यां निरुद्धत्वादात्मन्येव(¹) स्थापनात् भगवान् शास्त्रसिद्धं परमात्मानं स्वानुभवेन परामृशन् मयीति व्यपदिशति, यस्मात् योगी मय्येव चित्तं स्थापयति, तस्मात् 'अहञ्च' अहमपि परमात्म-स्वरूपत्वेन 'तस्मिन्नेव' योगिनि प्रादुर्भूतः 'अवस्थीयते' अवतिष्ठे, पुरुषादिव्यत्ययः, नान्येषु योग्यताहीनेषु।

**असौ स्वपुत्र-मित्र-कलत्र बन्ध्वादीन् शिखां यज्ञोपवीतञ्च यागञ्च स्वाध्यायञ्च सर्व्वकर्म्माणि सन्न्यस्यायं ब्रह्माण्डञ्च हित्वा कौपीनं दण्डमाच्छादनञ्च स्वशरीरस्योपभोगार्थाय च लोकस्योपकारार्थाय च परिग्रहेत्।**

इदानीं पृष्टमार्गमुपदिशति, असाविति। 'असौ' जनकयाज्ञवल्क्यादिन्यायेन गार्हस्थ्य एवोत्पन्न-ज्ञानोऽयं विद्वान् चित्तविश्रान्ति-सिद्धये स्वपुत्रादि सन्न्यस्य कौपीनादि परिग्रहेत्।

---

(१) क, आत्मन्येव।

यद्यपि विदुषोऽर्थसिद्ध एव सन्न्यासः, तथापि ज्योतिष्टोमे कृष्ण-विषाणया कण्डूयेदिति(१) प्रतिपत्तिवदयं लौकिको वैदिकश्च त्यागः। न च(२)

"ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।

नैवास्ति किञ्चित् कर्त्तव्यमस्ति चेन्न स तत्त्ववित्" ॥

इत्यादि-स्मृति-विरोधः, सत्यपि ज्ञाने विश्रान्ति-रहितस्य तृप्त्य-भावेन विश्रान्ति-सम्पादन-लक्षण-कर्त्तव्य-सद्भावेन कृतकृत्यत्वा-भावात् चित्त-विश्रान्ति-प्रतिबन्ध-वारणस्य(३) दृष्टफलस्य सम्भवेन श्रवणादि-विधिवन्नानादृष्ट(४) फलकल्पना; तस्मात् विवि-दिषुरिव विद्वानपि गृहस्थो नान्दीमुख-श्राद्धोपवास-जागरणादि विधिपूर्बकमेव सन्न्यसेत; प्रकृतिवद्विकृतिरिति न्यायेनात्र विवि-दिषा सन्न्यासवत् प्रैषमन्त्रेणैव पुत्रवित्तादि त्यागः*। बन्ध्वादी-त्यादिशब्देन भृत्य-पशु-क्षेत्रादि-लौकिक-परिग्रहादि--विशेषाः सङ्गृह्यन्ते। शिखां यज्ञोपवीतञ्च यागञ्च स्वाध्यायञ्चेति चकारेण तदर्थोपयुक्तानि पद-वाक्य-प्रमाण-शास्त्राणि, वेदोप-बृंहणादीनि, इतिहास-पुराणानि च समुच्चिनोति। औत्सुक्य-निवृत्तिमात्र-प्रयोजनानां काव्य-नाटकादीनां त्यागः कैमुतिक-न्याय-सिद्धः। सर्वकर्म्माणीति सर्वशब्देन लौकिक-वैदिक-नित्य-नैमित्तिक-निषिद्ध-काम्यानि सङ्गृह्यन्ते। पुत्रादित्यागेनैहिक-

---

(१) क, कण्डूयतीति। (२) ख, तेषां। (३) ख, वारणाय। (४) ख, ज्ञानादृष्ट।

* पुत्रवित्तादित्याग इति दर्शनात् मूले स्वपुत्र-मित्र इत्यत्र स्वपुत्रवित्त-इति पाठो दीपिकाकारसम्मत इति ज्ञायते।

भोगाः परिहृताः। सर्व्वकर्म्मत्यागेन आमुष्मिक-भोगाशा चित्त-विक्षेप-कारिणी परिहृता। अयमसौ परिग्रहैरित्यन्वयः, अयमसौ अहमागम(१)मितिवत्। ब्रह्माण्डञ्चेति ब्रह्माण्ड-त्यागेन तत्प्राप्ति-हेतोर्विराडुपासनस्य त्यागः। चकारेण सूत्राव्याकृतात्म-प्राप्ति-हेतोर्हिरण्यगर्भोपासनस्य(२); तत्त्वज्ञान-हेतूनां श्रवणादीनां समुच्चयस्य। पुत्रादि अव्याकृतोपासनान्त-(३) मैहिक-मामुष्मिकञ्च सर्व्वं प्रैषमन्त्रोच्चारणेन परित्यज्य कौपीनादिकं परिगृह्णीयात्। आच्छादनञ्चेति चकारेण पादुकादि-परिग्रहः समुच्चितः। स्मृतिश्च,—

"कौपीनं युगलं वासः कन्थां शीत-निवारिणीम्।
पादुके चापि गृह्णीयात् कुर्य्यान्नान्यस्य सङ्ग्रहम्" ॥इति।

स्वशरीरोपभोगो नाम कौपीनेन लज्जाव्यावृत्तिः, दण्डेन गो-सर्पाद्युपद्रव-परिहारः, आच्छादनेन शीतादि-परिहारः। चकारेण. पादुकाभ्यामुच्छिष्टदेश-स्पर्शादि-परिहारं समुच्चिनोति। लोकस्योपकारो नाम दण्डादि-लिङ्गैनैतदीयमुत्तम-माश्रमं परिज्ञाय तदुचिताभिवन्दन-भिक्षा--प्रदानादि-प्रवृत्त्या सुकृतसिद्धिः। चकारात् सन्न्यास-मर्य्यादायाः शिष्टाचार-प्राप्तायाः पालनं समुच्चीयते।

**तच्च न मुख्योऽस्ति, को मुख्यः? इतिचेदयं मुख्यो न दण्डं न कमण्डलुं न शिखं न यज्ञोपवीतं न स्वाध्यायं नाच्छादनं चरति परमहंसः, न च शीतं नचोष्णम्।**

---

(१) ख, अहवागम। (२) क, हिरण्यगर्भाव्याकृतोपासनस्य।
(३) ख, पुत्रादि हिरण्यगर्भोपासनान्त-।

कौपीनादि-परिग्रहस्यानुकल्पत्वमभिप्रेत्य मुख्यत्वं प्रतिषेधति, तत्र न मुख्योऽस्तीति । यत् कौपीनादि-परिग्रहणमस्ति तदस्य योगिनः परमहंसस्य मुख्यः कल्पो न भवति ; किन्त्वनुकल्पएव, विविदिषा सन्न्यासिनस्तु दण्डग्रहणं मुख्यमिति, दण्ड-वियोगस्य निषेधः स्मर्य्यते,—

"दण्डात्मनोस्तु संयोगः सर्व्वदैव विधीयते (१) ।
न दण्डेन विना गच्छेदिषुक्षेपत्रयाद्बुधः" ॥ इति ॥

प्रायश्चित्तमपि दण्डत्यागे प्राणायामशतं स्मर्य्यते, "दण्डत्यागे शतं चरेत्" इति । योगिनः परमहंसस्य मुख्यं कल्पं पृच्छति, कोऽयंमुख्य इति चेदिति । उत्तरमाह, अयं मुख्य इति । अयं कः? इत्यत आह, न दण्डमित्यादिना । शिखम् इति छान्दसी ह्रस्वः । न स्वाध्यायमिति पाठः । 'चरति' गच्छति निरुद्धाशेष-(२) चित्तवृत्तेर्योगिनः शीतादि(३) नास्ति तत्प्रत्ययाभावात् । यथा बालस्य लीलासक्तस्य शीताद्यभावः तथा परमात्मन्यासक्तस्य योगिनः । न चोष्णमिति वर्षाभाव-समुच्चयार्थश्चकारः, शीतादि-निषेधे तज्जन्यसुखादेरप्यभावात् ।

**न सुखं न दुःखं न मानापमानञ्च(४) षडूर्म्मि-रहितं न शब्दं न स्पर्शं न रूपं न रसं न गन्धं न च मनोऽप्येवं निन्दा-गर्व्व-मत्सर-दम्भ-दर्पेच्छा-द्वेष-सुख-दुःख-**

---

(१) ख, सर्व्वदेवादि धार्यते । (२) ख, चादि निरुद्धाशेष ।
(३) ख, शान्तादि । (४) ख, नमो नारायणञ्च ।

काम-क्रोध-रोष-लोभ-मोह-मद-हर्षासूयाहङ्कारादींश्च हित्वा स्वं वपुः कुणपमिव दृश्यते।

नसुखमित्यादि(१)। 'मानः' पुरुषान्तरेण सम्पादितः सत्कारः, 'अपमानः' तिरस्कारः, यदा योगिनः स्वात्म-व्यतिरिक्तं पुरुषान्तरमेव(२) न प्रतीयते, तदा मानापमानौ दूरापास्तौ। चकारः शत्रु-मित्र-राग-द्वेषादि-द्वन्द्वाभावं समुच्चिनोति। 'षडूर्मयः'—

"क्षुत्-पिपासे शोक-मोहौ जरा-मरणमेव च"।

तेषां त्रयाणां द्वन्द्वानां प्राण-मनो-देह-धर्मत्वादात्मतत्त्वाभिमुखस्य योगिनः(३) तद्वर्जनं युज्यते। न शब्दं न स्पर्शं न रूपं न रसं न गन्धं न च मनोऽप्येवमित्यादिग्रन्थः शिष्टैर्व्याख्यातः(४)। अस्त्वेवं समाधि-दशायां शीताद्यभावो व्युत्थानदशायां(५) निन्दादि-क्लेशः संसारिणा—(६) मिवैनं वाधतैव इत्यत आह, निन्देति। रोष-मदावनार्थ्यौ, विरोधिभिः पुरुषैः स्वस्मिन्नापादित-दोषोक्तिर्निन्दा, अन्येभ्योऽहमधिक इति चित्तवृत्तिर्गर्व्वः, विद्या-धनादिभिरस्य सदृशो भवामीति बुद्धिर्मत्सरः, परेषामग्रे जप-ध्यानादि-प्रकाशनं दम्भः, भत्सर्नादिषु बुद्धिर्दर्पः, धनाद्यभिलाष इच्छा, शत्रुवधादि-बुद्धिर्द्वेषः, अनुकूल-लाभेन बुद्धि-स्वास्थ्यं सुख, तद्विपर्य्ययो दुःखं, योषिदाद्यभिलाषः कामः, कामितार्थ-विघातजन्यो बुद्धिविक्षोभः क्रोधः, प्राप्तस्य धनस्य

(१) क, हित्वा। (२) ख, मेवं। (३) क, योगः। (४) क, शिष्टैर्व्याख्याततत्वात्। ख, शिष्टो र्व्याख्याततत्वात्। (५) क, व्युत्थानदशायां। (६) क, ख, संसारिणा।

त्यागासहिष्णुत्वं लोभः, हितेष्वहितबुद्धिरहितेषु हितबुद्धिर्मोहः, चित्तगत-तुष्टभि-(१) व्यक्ति-मुख-विकाशादि-हेतुर्धीवृत्तिर्हर्षः, परगुणेषु दोषारोपण-(२) मसूया, देहेन्द्रियादि-सङ्घातेष्वात्मत्वभ्रमोऽहङ्कारः। आदिशब्देन भोग्यवस्तुषु ममत्वाकार-समीचीनत्वादि बुद्धयो गृह्यन्ते। चकारो यथोक्त-निन्दादिविपरीत-स्तुत्यादि-समुच्चयार्थः। एतान् निन्दादीन् 'हित्वा' पूर्वोक्त-वासनाक्षयाभ्यासेन परित्यज्य अवतिष्ठते इति पूर्वेणान्वयः।

ननु विद्यमाने देहे कथं निन्दादि-परित्यागः? अत आह, स्वं वपुः कुणपमिव दृश्यते इति। पूर्वं यत् स्वकीयं वपुः तदानीं योगिना(३) चैतन्यभूतेन मृतकमिवालोक्यते इत्यर्थः। लोक स्पर्शभीत्या कुणपं यथा दूरस्थोऽवलोकयति, तथा योगी तादात्म्यबुद्धय-भिया तटस्थो देहं नित्यमात्मनो विविनक्तीति भावः।

**यतस्तद्वपुरपध्वस्तं(४) संशय-विपरीत-मिथ्याज्ञानानां यो हेतुस्तेन नित्यनिवृत्तः।**

तत्र हेतुमाह, यतस्तद्वपुरपध्वस्तमिति। 'यतः' हेतोः, तद्वपुः आचार्योपदेशानुभवैः 'अपध्वस्तं' चिदात्मभावान्निराकृतम्, 'अतः' चैतन्य-वियुक्तस्य देहस्य शवतुल्यतया दृश्यमानत्वात् सत्यपि देहे निन्दादित्यागो घटते इत्यर्थः।

ननु उत्पन्नो दिग्भ्रमो यथा सूर्योदय-दर्शनेन विनष्टोऽपि कदाचिदनुवर्त्तते, तथा चिदात्मनि संशयाद्यनुवृत्तौ(५) निन्दादि-

(१) क, तुष्टाभि। ख, तुष्टभि। (२) क, दोषस्यारोपण।
(३) क, योगिना। ख, योगिनां। (४) ख, ग, एतद्वपुरपध्वस्ता। (५) क वृत्तौ।

शेषः पुनः प्रसज्येत इत्याशङ्क्याह, संशयेति। आत्मा कर्तृत्वादि-धर्मोपेत स्तद्रहितो वा इत्यादि संशयज्ञानं, देहादिरूप आत्मेति विपरीतज्ञानम्(१)। तद्धेतुश्चतुर्विधः, अनित्याशुचि-दुःखानात्मसु नित्य-शुचि-सुखात्म-ख्यातिरविद्येति पतञ्जलिसूत्रात्। 'अनित्ये' गिरि-नदी-समुद्रादौ नित्यत्व-मिथ्याभ्रान्तिरेका अविद्या, 'अशुचौ' पुत्र-कलत्रादौ शुचित्वबुद्धिर्द्वितीया, 'दुःखे' कृषि-वाणिज्यादौ सुखत्व-भ्रान्तिस्तृतीया, 'गौणात्मनि' पुत्रादौ अन्नमयादिके तु(२) मुख्यात्मत्व-भ्रान्तिश्चतुर्थी; एषां संशयादीनां 'हेतुः' अद्वितीय-ब्रह्मतत्त्वावरक—मज्ञानं, तद्वासना च; तत्राज्ञानं तत्त्व महावाक्यार्थ-बोधेन निवृत्तम्; वासना च योगाभ्यासेन निवृत्ता। दिग्भ्रान्तौ त्वज्ञाने निवृत्तेऽपि तद्वासनायाः सद्भावात् यथापूर्वं व्यवहारः; योगिनस्तु भ्रान्तिहेतु-राहित्यात् कुतः संशयादीन्यनुवर्त्तेरन्। तदयमर्थः, संशयादीनां यो हेतुरज्ञानं तद्वासना च, तेन हेतुद्वयेन योगी 'नित्यनिवृत्तः, अधिकरणे क्तः, अज्ञान-तद्वासनयोर्निवृत्तिस्तत्र नित्या, पुनस्तयोरनुद्भवात्; इति; तेन नित्यनिवृत्तः अज्ञान-रहित(३) इति यावत्।

**तन्नित्यबोधः, तत्स्वयमेवावस्थिति-(४) रिति।**

सवासनाऽज्ञान-निवृत्तेर्नित्यत्वे हेतुमाह, तन्नित्य-बोध इति। 'तस्मिन्' परमात्मनि नित्यो बोधो यस्य सः; नित्यपूतस्य

---

(१) क, आत्मेति क्वचित् इत्येकविध सङ्कल्प प्रभवान् कामानित्यादिनोक्तं।

(२) क, अन्नमयादिके (३) क, तेन नित्य निवृत्ति-रहित। ख, नित्यं निवृत्तो नत्तो रहित। (४) ख, ग, तन्नित्य पूतस्य; तत्र स्वयमवस्थिति।

इत्यर्थः(१)। योगी हि विज्ञाय प्रज्ञां कुर्व्वीतेति मनमनुसृत्य चित्तविक्षेपान् योगेन परिहृत्य नैरन्तर्य्येणात्मगोचर-(२) विषयामेव प्रज्ञां करोति; तेन बोधस्य नित्यत्वम्, तन्नित्यत्वात्

तद्विनाश्वरयोरज्ञान-तद्वासनयोरपि निवृत्तिर्नित्येत्यर्थः। "तन्नित्य-पूतस्थः" इति केषाञ्चित् पाठः। 'तत्र' तस्मिन् 'नित्य-पूते' परमात्मनि स्थित इत्यर्थः।

बुध्यमानस्य परमात्मनस्तार्किकेश्वरवत् तटस्थत्व-शङ्कां वारयति, तत् स्वयमिति। यत् वेदान्तवेद्यं परं ब्रह्मास्ति, तत् स्वरूपं, नतु स्वस्मादन्य इत्येवं निश्चित्य योगिनोऽवस्थितिर्भवति।

**तं शान्त-मचल-मद्वयानन्द-विज्ञानघन एवास्मि; तदेव मे(३) परम धाम, तदेव शिखा च, तदेवोपवीतञ्च, यदा पदे नित्यपूतस्थः(४) तदेवावस्थानम्।**

अनुभव-प्रकारमाह, तं शान्तमिति। पदत्रये द्वितीया प्रथमार्थे द्रष्टव्या। यः परमात्मा 'शान्तः' क्रोधादि विक्षेप-रहितः, 'अचलः' गमनादि--क्रिया--रहितः, 'अद्वयः' स्वगत--सजातीय--विजातीयभेद--रहितः, सच्चिदानन्दैक-रसोऽस्ति, स एवाहमस्मि 'तदेव' ब्रह्मतत्त्वं 'मे' मम योगिनः 'परमं धाम' वास्तवं स्वरूपं, नत्वेतत् कर्तृत्व-भोक्तृत्वादि-युक्तं तस्य मायिकत्वात्।

---

(१) क, नित्यो बोध इत्यर्थः।
(२) नैरन्तर्य्येण परमात्म।
(३) ग, घ, एवास्मि तदेवमो।
(४) क, ग, निरन्तरः पूतस्थः।

आचार-त्यागे दोषमाशङ्का निरस्यति, तदेव शिखा च तदेवोपवीतञ्चेति। 'तदेव' ज्ञानमेव शिखा चोपवीतञ्च। चकाराभ्यां मन्त्र-द्रव्यरूपे अपि कर्म्माङ्गे। ज्ञानमेव यदाम्नातमाथर्व्वणिकैर्ब्रह्मोपनिषदि, "सशिखं वपनं कृत्वा" इत्यादि। अत्र "यदा पदे नित्यपूतस्यस्तदेवावस्थानम्" इति ग्रन्थः शिष्टैर्नादृतः।

परमात्मात्मनोरेकत्व-ज्ञानेन तयोर्भेद एव विभग्नः,(१) या सा सन्ध्या। सर्व्वान् कामान् परित्यज्याद्वैते परमस्थितिः। २॥

सन्ध्यालोपे दोषमाशङ्क्याह, परमात्मात्मनोरेकत्व-ज्ञानेन तयोर्भेद एव विभङ्गः, या सा सन्ध्येति। जीव-ब्रह्मणोरैक्य-ज्ञानेन महावाक्यत्वेन(२) तयोर्यः प्रतीतो भेदः विशेषेण भग्नः पुनर्भ्रान्त्यनुदयात्, 'या' इयमेकत्व-बुद्धिः सैवोभयोरात्मनोः सन्धौ जातत्वात् सन्ध्या, अहोरात्रयोः सन्धावनुष्ठीयमाना क्रिया सन्ध्या यथा, तद्वत्, तथा च नास्य प्रत्यवायः।

कोऽयं मार्ग इत्यस्य असौ स्वपुत्रेत्यादिना उत्तरमुक्तम्। का स्थितिरित्येतस्य महापुरुष इत्यादिना सङ्क्षिप्योत्तरमुक्तम्। संशय-विपर्य्ययेत्यादिना तदेव प्रपञ्च्य इदानीमुपसंहरति, सर्व्वान् कामान् परित्यज्याद्वैते परमस्थितिरिति। क्रोध-लोभादीनां कामपूर्ब्बकत्वात् काम-परित्यागेन चित्तदोषाः सर्व्वे त्यज्यन्ते। अत एव वाजसनेयिनाम् "अथो खल्वाहुः काममयः स एवायं पुरुषः" इति॥ २॥

---

(१) क, ग, ङ, भेद एक एव विभग्नः। (२) ङ, महावाक्यजेन।

ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते।
काष्ठदण्डो धृतो येन सर्वाशी ज्ञान-वर्जितः।
स याति नरकान् घोरान् महारौरव-सञ्ज्ञकान्(१)*॥
इदमन्तरं ज्ञात्वा स परमहंसः।

ननु माभूत् कर्म्ममार्ग-त्यागे दोषः, चतुर्थाश्रम-लिङ्गत्याग-निमित्तो दोषस्तस्य स्यादेव इत्यत आह, ज्ञानदण्ड इत्यादि। त्रिदण्डिनो यथा वाग्दण्डो मनोदण्डः कायदण्डश्चेति त्रिविधो दण्डः; एवमेकदण्डिनो द्विविधः, ज्ञानदण्डः, काष्ठदण्डश्चेति। तेषां स्वरूपञ्च दक्षेणोक्तम्,

"वाग्दण्डे मौनमातिष्ठेत् कर्म्मदण्डे त्वनीहता।
मानसस्य तु दण्डस्य प्राणायामो विधीयते" ॥ इति ॥

एवं सति मौनादीनां वागादि-दमनहेतुत्वात् यथा दण्डत्वं, तथैव अज्ञान-तत्कार्य्ययोर्दमन-हेतोर्ज्ञानस्यापि दण्डत्वम्। अयं ज्ञानदण्डो 'येन' परमहंसेन धृतः, स एव मुख्य एकदण्डीत्युच्यते। मानसस्य ज्ञानदण्डस्य चित्तविक्षेपेण विस्मृतिर्माभूदिति स्मारकः काष्ठदण्डो ध्रियते। एतदेव ज्ञात्वा(२) वेष-

(१) क, ग, रौरवमेव च। * गचिह्नित मूलपुस्तके अतिरिक्तः श्लोक एको वर्त्तते। स यथा,

"तितिक्षा-ज्ञान-वैराग्य—शमादिगुण-वर्जितः।
भिक्षामात्रेण यो जीवेत् स पापी यतिवृत्तिहा" ॥ इति ॥

(२) ख, एतद्ज्ञात्वा।

मात्रेण पुरुषार्थ-सिद्धिमभिप्रेत्य येन परमहंसेन काष्ठदण्डो धृतः, स बहुविध-यातनोपेतत्वात् घोरान् महारौरव-सञ्ज्ञकान् नरकान् 'याति' प्राप्नोति। तत्र हेतुः, यतः 'सर्व्वाशी' वर्ज्यावर्ज्य-मज्ञात्वा सर्व्वमश्नाति। 'इदं' ज्ञानदण्ड-काष्ठदण्डयोर्यत् 'अन्तरम्' उत्तमत्वाधमत्व-लक्षणमुक्तं, तज्ज्ञात्वा उत्तमं ज्ञानदण्डं यो धारयति, स एव परमहंसो मुख्यो ज्ञेय इत्यर्थः।

**आशाम्बरो ननमस्कारो नस्वधाकारो ननिन्दा-स्तुति-र्नवषट्कारो याहच्छिको भवेद्भिक्षुः।**

ननु मा भूदस्य काष्ठदण्डः, अस्या तु चर्य्या कीदृशी? इत्याशङ्क्याह, आशाम्बर इत्यादि। आशा एवाम्बरं यस्य सः दिग्वासाः, न नमस्कारः कर्त्तव्यो यस्य स ननमस्कारः। निषेधार्थ-नकारस्य समासत्वान्नलोपाभावः। तदुक्तं, "निर्नमस्कारमस्तुतिम्" इति। श्राद्धादावपि(१) न स्वधाकारोऽस्य स तथा, न निन्दास्तुतिः। निन्दागर्व्वेत्यादि-(२) वाक्ये परैः कृतया निन्दया अस्य क्लेशो निवारितः; अत्र तु स्वकर्तृके निन्दा-स्तुती निषिध्येते। 'याहच्छिकः' निर्बन्ध-रहितः 'भवेत्' स्यात् 'भिक्षुः' परमहंसः।

**नावाहनं न विसर्जनं न मन्त्रो न ध्यानं नोपासनञ्च,(३) न लक्ष्यं, नालक्ष्यं, न पृथक्, नापृथक्, नाहं, नत्वम्(४)**

---

(१) क, श्राद्धमपि। ख, गवादावपि। (२) ख, निन्दाधर्मेत्यादि।

(३) क, ख, ग, घ, नोपवासनञ्च। (४) क, ग, नाहमेनत्वं। घ, नाहं नैनत्वं।

**नसर्व्वञ्चानिकेत-स्थितिरेव सभिक्षु र्हाटकादीनां नैव परि-ग्रहेत्, न लोकं नावलोकनञ्च।**

नन्वस्ति निर्बन्धः,

"भिक्षाटनं जपः शौचं स्नानं ध्यानं सुरार्च्चनम्।
कर्त्तव्यानि षडेतानि सर्व्वदा नृपदण्डवत्" ॥

इति मुख्यस्य भेदादृशित्वात्तन्न सम्भवति इत्यभिप्रायेणाह, नावाहनमित्यादि। 'ध्यानं' स्मरणम् 'उपासनं' परिचर्य्येति भेदः। यथा स्तुति-निन्दादि लौकिकं न, यथा देवपूजादि धर्म्म-शास्त्रीयं न, तथैव तत्त्वमस्यादि ज्ञानशास्त्रीयमपि।

लक्ष्य—(१) वाच्यादि व्यवहार्य्यं योगिनामित्याह, न लक्ष्य-मिति। साक्षिचैतन्यं त्वंपदेन लक्ष्यं, देहादि-विशिष्टं चैतन्यं त्वं-पदेन वाच्यं, न लक्ष्यं नालक्ष्यं तदपि तस्य न व्यवहार्य्यमित्यर्थः। चित्पदार्थो जडात् पृथक्, तत्त्वंपदयोर्वाच्यं पृथक्, लक्ष्यं पृथक् इत्यपि योगिनो नास्ति; स्वदेह-निष्ठो वाच्योऽर्थोऽहं, परदेह—निष्ठस्त्वं, तदप्यस्य नास्ति; सर्वं खल्विदं ब्रह्मेत्यपि न, चकाराद्-सर्वं न किञ्चिदस्तीत्यपि तस्य नास्ति, तच्चित्तस्य ब्रह्मणि विश्रान्त-त्वात्; अतएव अनिकेत-स्थितिरेव स भिक्षुः यदि नियत-वासार्थं कञ्चिन्मठं(२) सम्पादयेत्, तदा तस्मिन् ममत्वे सति तदीयहानौ वृद्धौ वा चित्तं विक्षिपेत्। मठवत् 'हाटकादीनां' सुवर्ण-रजतादि-पात्राणां भिक्षाचमनाद्यर्थानामेकमपि 'नैव परि-ग्रहेत्' नापि गृह्णीयात् विकरण(३) व्यत्ययः। यदाह यमः,—

(१) ख, लक्षण। (२) ख, किञ्चिन्मतं।
(३) क, गृह्णीयादि करण। ख, गृह्णीयादिकर।

"हिरण्मयानि पात्राणि कृष्णायस-म... ।
यतीनां तान्यपात्राणि वर्जयेज्ज्ञानि-भिक्षुकः" ॥इति ॥

तथा न 'लोकं' जनं शिष्यवर्गं परिग्रहेत्। न केवलं लोकं त्यजेत्, किन्तु नावलोकनञ्च सान्निध्याल्लोकस्यैवावलोकनञ्च न कुर्य्यात् ।

अथावलोकनमात्रेण अवाधक(१) इति चेत्, तद्-वाधकोऽस्त्येव। यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टञ्च स ब्रह्महा भवेत्। यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टञ्च स पौल्कसो(२) भवेत्। यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यञ्च स आत्महा भवेत्। यस्माद्भिक्षुर्हिरण्यं यो(३) न दृष्टञ्च न स्पृष्टञ्च न ग्राह्यञ्च(४) सर्व्वे कामा मनोगता व्यावर्त्तन्ते(५)।

योगिनो लौकिक-वैदिक-व्यवहार-गतानां वाधकानां वर्जन-मभिहितम्। अथ प्रश्नोत्तराभ्यामत्यन्त—वाधकं प्रदर्श्य तद्वर्जन-माह, अवाधक इति चेत् तद्वाधकोऽस्त्येवेति। अथावलोकन-मात्रेणेति प्रश्निमम्, वाक्योपक्रम आकरः(६)। तत्रापि हिरण्य-स्यात्यन्त-वाधकत्वमाह, यस्माद्भिक्षुरित्यादिना। 'रसेन' प्रेम्णा। ब्रह्महा इति, ब्रह्मैव सत्यमन्यत् मिथ्या इत्यनङ्गीकारात् ब्रह्म तेन हतमिव भवति, तेन ब्रह्महा भवेत्। यत् स्मृतिः,

---

(१) क, न वाधक- (२) क, पौल्कसो। (३) घ, रसेन।

(४) ध, न दृष्टश्चेदिति। न स्पृष्टश्चेदिति। न ग्राह्यश्चेदिति। (५) क, ग, सर्व्वान् कामानात्मनो गतान् व्यावर्त्तेरन्। (६) क, आकारः।

"ब्रह्म नास्तीति यो ब्रूयात् द्वेष्टि ब्रह्मविदश्च यः ।
अभूतब्रह्मवादी च(१) त्रयस्ते ब्रह्म-घातकाः" ॥ इति ॥

यद्वा ब्रह्मघ्न इति तस्य नरको भवति। पौल्कस इति, निषादाच्छूद्रायां जातः पुक्कसः, प्रज्ञादित्वात् पौक्कसः, वर्ण-व्यत्ययेन पौल्कसः, तत्तुल्य इति यावत्। यत् स्मृतिः,

"पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्हृदयं भवेत् ।
धीपूर्वं रेत उत्सर्गो द्रव्यसङ्ग्रह एव च" ॥इति॥

आत्महा इति, असङ्गस्याभोक्तुरात्मनो हिरण्यसङ्गित्व--भोक्तृ-त्वाङ्गीकारात्। यत् स्मृतिः,

"अन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा" ॥ इति ॥

श्रुतिरपि तस्यान्धतामिस्र-लोकानाह,-

"असूर्य्या नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" ॥ इति ॥

न दृष्टञ्च न स्पृष्टञ्च न ग्राह्यञ्चेति इच्छेदिति शेषः। चकारैः श्रुतञ्च कथितञ्च व्यवहृतञ्च नेच्छेदिति समुच्चयः। दर्शन-स्पर्शन-ग्रहण-तदभिलाष-पूर्वक--हिरण्य--वृत्तान्त--श्रवण--तद्गुण-कथन-तदीय--क्रियादि--व्यवहारा अपि प्रत्यवाय--हेतव इत्यर्थः। हिरण्य-वर्जनस्य फलमाह, सर्वे कामा मनोगता इति। पुत्र-भार्य्यादीनां हिरण्य-मूलकत्वादिति भावः।

---

(१) ख, चारी च।

दुःखे नोद्विग्नः,(१) सुखे निस्पृहः, त्यागी रागे, सर्व्वत्र शुभाशुभयोरनभिस्नेहः, न द्वेष्टि, न प्रमोदश्च, सर्व्वेषामिन्द्रियाणां गतिरुपरमते, ज्ञाने स्थिरस्थः, य आत्मन्येवावस्थीयते,(२) स एव योगी च, स एव ज्ञानी च।

कामनिवृत्तेः स्थितप्रज्ञत्वं फल-(३) माह, दुःखेनोद्विग्न इति। दुःखे सति उद्वेगं न गतः, सुखे अभिलाषरहितः स्थितप्रज्ञ इत्यर्थः। सुख-दुःखयोरविक्षेपकत्वेन तत्साधनयोरप्यविक्षेपकत्वमाह, त्यागी रागे इति। 'रागे' रञ्जनहेतौ, ऐहिकामुष्मिके त्वस्य त्यागो भवति फलानपेक्षत्वात्। रागत्यागं विवृणोति, सर्व्वत्र शुभाशुभयोरिति। अनभिस्नेहोऽनभिद्वेष इत्यपि ज्ञेयम्।

रागत्यागस्य फलमाह, न द्वेष्टि, न प्रमोदश्चेति। प्रतिकूलान् न द्वेष्टि, अनुकूलं दृष्ट्वा प्रमोदञ्च न याति। ततः किं स्यादत आह, सर्व्वेषामिन्द्रियाणां गतिरुपरमते इति। सुखप्राप्तये दुःखपरिहाराय च इन्द्रिय-प्रवृत्तिः, तद्द्वयस्य योगिनोऽनुद्देश्यत्वादिन्द्रियोपरम इति भावः।

ननु निर्व्वीजो योगी दुःसाध्य इत्याशङ्क्य परमप्रेमास्पदात्मावलम्बत्वात् सुसाध्य एवेत्याशयेन आत्मनिष्ठामुपसंहरति, य आत्मन्येवावस्थीयते इति। अवतिष्ठते इति वाच्ये व्यत्ययः। तदुक्तम्,

"न सुखं देवराजस्य न सुखं चक्रवर्त्तिनः।
यत् सुखं वीतरागस्य ज्ञाननिष्ठस्य योगिनः" ॥ इति।

---

(१) घ, नोद्वेगः। (२) क, सदा आत्मा आत्मन्येवावतिष्ठते, स यतिः कथ्यते।
(३) ख, स्थितफलं।

इन्द्रियोपरतौ च न कदाचिदात्मनि निर्विकल्पक-समाधिर्विघ्ना भवन्ति, तेषां का स्थितिरिति प्रश्नस्य सङ्क्षेप-विस्ताराभ्यांमुत्तरं पूर्वमुक्तं, तदेवात्र पुनरपि हिरण्य-निषेध-प्रसङ्गेन स्पष्टीकृतम्।

**यत् पूर्णानन्दैकरस-बोधः(१) तद्ब्रह्माहमस्मीति कृतकृत्यो भवति, तद् ब्रह्माहमस्मीति कृतकृत्यो भवति।**

**इत्यथर्व्ववेदे परमहंसोपनिषत् समाप्ता। २७॥**

अथ विद्वत्सन्न्यास-मुपसंहरति, यत् पूर्णानन्दैक-रसबोधः तद्ब्रह्माहमस्मीति कृतकृत्यो भवति, तद्ब्रह्माहमस्मीति कृतकृत्यो भवतीति। अधिक-प्रक्षिप्त ग्रन्थ-(२)निरासाय सम्पूर्ण-प्रतीकोपादानम्। 'यत्' ब्रह्म वेदान्तेषु 'पूर्णानन्दैकरसबोध'(३) परमात्मेति निरूपितं, तद्ब्रह्माहमस्मीति अनुभवन् योगी परमहंसः 'कृतकृत्यः' कृतार्थो भवतीत्यर्थः। यत् स्मृतिः।

"ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
नैवास्ति किञ्चित् कर्त्तव्यमस्ति चेन्न स तत्त्ववित्"॥इति।

द्विरुक्तिः समाप्त्यर्था।

नारायणेन रचिता जीवन्मुक्ति-विवेकतः।
श्रुत्यर्थापार-परम-हंसोपनिषद्दीपिका॥ १॥
सच्चिदानन्द-पूर्णोऽहं कूटस्थाद्वैत-रूपतः।
महावाक्य-प्रबोधेन कृतकृत्यो भवेन्मुनिः॥ २॥

इति परमहंसोपनिषदो दीपिका सम्पूर्णा॥ २७॥

---

(१) क, पूर्णानन्दैकरूप रस बोधः। ग, पूर्णानन्दैकरसो बोधः।
(२) क, ख, प्रक्षेपग्रन्थ-। (३) क, ख, पूर्णानन्दैकबोधः।

# अथ जावालोपनिषत्।



ओं वृहस्पतिरुवाच याज्ञवल्क्यं, यदनु कुरुक्षेत्रं देवानां देवजयनं सर्व्वेषां भूतानां ब्रह्मसदनम्। अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्व्वेषां भूतानां ब्रह्मसदनम्; तस्मात् यत्र क्वचन गच्छति तदेव मन्येत, तदविमुक्तमेव; इदं(१) वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्।

ओं जावालोपनिषत् खण्ड-षट्क-युक्ता हि याजुषी।
एकचत्वारिंशत्तमी वर्ण्या(२) मुनिजन-प्रिया ॥ १ ॥

परमहंसोपनिषदि योगिनां परमहंसानां मार्ग-स्थिती उक्ते। इदानीं तादृशेन परमहंसेनात्मा कथं ज्ञेयः? तदुपासना च कस्मिन् देशे कस्मिंश्च देहभागे कर्त्तव्या? कीदृशि च वयसि पारमहंस्याधिकारः? तदङ्गीकारे कश्च विधिः? तेषां क आचारः? किञ्च फलं? कुतो वायं सम्प्रदायः प्रवृत्तः? के च सम्प्रदायिकाः? कथं वा देहं त्यजेत्? इति ज्ञातुं सत्यकाम-नामक-जावाल-पुत्रोपज्ञातोपनिषदारभ्यते, वृहस्पतिरित्यादि। आख्यायिका सम्प्रदाय-प्रदर्शनार्था, 'उवाच' पप्रच्छ। किं पप्रच्छेत्यत आह, यदन्विति।

(१) ख, मन्यते इतीदं। (२) ख, चत्वारि सप्तमी चुद्रा मध्ये।

यतो ह्येनं कुरुक्षेत्रं यच्च देवानामपि देवपूजास्थानं सर्व्वमोक्ष-प्रदञ्च, तत् पप्रच्छेत्यर्थः। याज्ञवल्क्य(१) उत्तरयति, अविमुक्तं वै कुरुक्षेत्रमिति। अविमुक्तं नामतस्तत् क्षेत्रं मुक्तये कुर्व्विति देवैः प्रार्थितेन शिवेन स्वीकृतम, अतोऽविमुक्तं कुरुक्षेत्रं देवानामिति, देवैः पुरुषार्थमधिष्ठितं सर्व्वप्राणि-ब्रह्मप्राप्ति-स्थानञ्चाविमुक्तमेव विद्धि इत्युत्तरमत्र तस्मादित्यादि ग्रन्थः।

**अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे, येनासावमृतीभूत्वा मोक्षीभवति; तस्मादविमुक्त-मेव निषेवेत; अविमुक्तं न विमुञ्चेत्; एवमेवैतद्-याज्ञवल्क्य! ॥ १ ॥**

वाराणस्या अन्येभ्योऽतिशयमाह, अत्र हीति। 'तारकं' षड़-क्षरं रामिति वीजं 'व्याचष्टे' शब्दतोऽर्थतश्च उपदिशति। 'अमृती' अमृतवान् ज्ञानी 'मोक्षी' मोक्षवान्। फलितमाह, तस्मादिति। परमहंसः कर्त्ता। एवकारेण देशान्तर-सेवने निषिद्धेऽपि तत्-सेवा न कण्ठोक्ता इत्यत आह, अविमुक्तं न विमुञ्चेदिति। वाक्पतिरङ्गी करोति, एवमेवैतद्-याज्ञवल्क्येति। १ ॥

**अथ हैनमत्रिः(२) पप्रच्छ याज्ञवल्क्यं, य एषोऽनन्तो-ऽव्यक्त आत्मा, तं कथ-(३) महं विजानीयामिति। स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्यः, य एषोऽनन्तो-ऽव्यक्त आत्मा, सोऽविमुक्ते प्रतिष्ठित इति।**

(१) ख, याज्ञवल्क्यो नाम प्राहम्। (२) ख, मैत्रिः। (३) घ, आत्मा कथं।

नामतो देशे ज्ञातेऽपि लिङ्गतोऽपि ज्ञानार्थं पृच्छत्यत्रिरित्याह, अथ हैनमत्रिरिति। अत्र हि बृहदारण्यक इव ऋषिसङ्घः प्रष्टा, याज्ञवल्क्यः समाधाता, जनकः सभ्यः; परन्तु नात्र जल्पः, किन्तु वाद इति ज्ञेयम्। अनन्ताव्यक्त-विशेषणे दुर्बोधत्व-ख्यापनाय; कथमिति अधिकरणप्रश्नः। इतरो विदिताभिप्राय आह, सोऽविमुक्त इति। तत्र हेतुः सोऽविमुक्ते प्रतिष्ठित इति। 'सः' आत्मा परम-शिवाख्यः अविमुक्ते नित्यं सन्निहित इत्यर्थः।

सो ऽविमुक्तः कस्मिन् प्रतिष्ठित इति। वरणायां नाश्याञ्च मध्ये प्रतिष्ठित इति। का वै वरणा, का च नाशीति। सर्व्वानिन्द्रिय-कृतान् दोषान् वारयतीति; तेन वरणा भवतीति। सर्व्वानिन्द्रिय-कृतान् पापान् नाशयतीति; तेन नाशी भवतीति।

इदानीं साक्षाल्लिङ्गं पृच्छति, स इति(१)। उत्तरं वरणायां नाश्याञ्चेति। यत् स्कान्दे,

"अशी-वरणयोर्मध्ये पञ्चक्रोशं महत्तरम्(२)।

अमरा मरणमिच्छन्ति का कथा इतरे जनाः" ॥ इति।

वरणा-नाशी-शब्दयोः प्रवृत्ति-निमित्तं पृच्छति, का वै इति। अन्वर्थ-निर्वचनेनोत्तरयति, सर्व्वानिति।

---

(१) क, इतीति। ख, य इति। (२) क, महत्तमम्।

**कतमच्चास्य(१) स्थानं भवतीति । भ्रुवोर्घ्राणस्य च यः सन्धिः स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति ।**

लोक-पुराण-प्रसिद्धयाधिभूतमविमुक्तं ज्ञातम्; सम्प्रत्यध्यात्माभिप्रायेणाविमुक्त-स्थानं पृच्छति, कतमच्चास्येति । 'च' पुनः, उक्तादन्यदप्यविमुक्तस्य किं स्थानमिति प्रश्नः, इतरो विदिताभिप्राय आह, भ्रुवोर्घ्राणस्य चेति । भ्रुवोर्घ्राणस्य च यः 'सन्धिः' कूर्पाख्यः, तदविमुक्तस्य स्थानमित्यर्थः । तदुक्तम्,

"इडा भगवती गङ्गा पिङ्गला यमुना नदी ।
तयो-(२) र्मध्ये प्रयागस्तु यस्तं वेद स वेदवित्" ॥ इति ।

तस्मात्तच्च प्रयागः, तेन ततः पूर्वभागे भ्रूमध्ये अविमुक्तमिति ज्ञेयम् । भ्रू-घ्राण सन्धेः सन्धित्वे निमित्तान्तरमाह, स एष इति । 'द्यौर्लोकस्य' द्युलोकस्य स्वर्गस्य परस्य च यत् परो दिवो(३) ज्योतिर्दीप्यते, तस्य च एष एव सन्धिः । घ्राणमूलादर्वाक् द्युलोकः, ललाटादारभ्य परः सत्यलोकः(४) । अनेन शरीरेऽपि ब्रह्माण्ड-सन्निवेशोऽस्तीति सूचितम् । तदुक्तं गरुड़-पुराणे,—

"ब्रह्माण्डे ये गुणाः सन्ति शरीरे तेऽप्यवस्थिताः ।
पातालं भूधरा लोकास्ततोऽन्ये द्वीप-सागराः ॥ १ ॥
आदित्याद्या ग्रहाः सर्वे पिण्डमध्ये व्यवस्थिताः ।
पदोऽधस्तु तलं प्रोक्तं पादोर्द्धं वितलं स्मृतम् ॥ २ ॥

(१) ख, कतमच्चास्य । (२) ख, ययो । (३) ख, ऽपि वो ।
(४) ख, दर्व्वागुच्यं लोकः तपोलोकान्तः ललाटाचारभ्य परः सत्यं लोकः ।

जानुभ्यां सुतलं विद्धि वितलं सर्व-बन्धने(१) ।
तथा तलातलश्चोर्द्धं गुह्यदेशे रसातलम् ॥ ३ ॥
पातालं कटिसंस्थन्तु पादादौ(२) लक्षयेद्बुधः ।
भूर्लोकं नाभिमध्ये तु भुवर्लोकं तदूर्द्धकम् ॥ ४ ॥
स्वर्लोकं हृदये विद्यात् कण्ठदेशे महस्तथा ।
जनलोकं वक्त्रदेशे तपोलोकं ललाटतः ॥ ५ ॥
सत्यलोकं महारन्ध्रे भुवनानि चतुर्द्दश ।
त्रिकोणे संस्थितो मेरुरधः कोणे च मन्दरः ॥ ६ ॥
दक्षिणे चैव कैलासो वामे कोणे हिमाचलः ।
निषधश्चोर्द्धभागे तु दक्षिणे गन्धमादनः ॥ ७ ॥
रमणो वामरेखायां सप्तैते कुलपर्व्वताः ।
कुशद्वीपं स्थितं मांसे क्रौञ्चद्वीपं शिरास्थितम् ॥ ८ ॥
अस्थि-स्थान-स्थितं जम्बु शाकं मज्जासु संस्थितम् ।
त्वचायां शाल्मलिद्वीपं प्लक्षं केशे प्रतिष्ठितम् । ॥९॥
नखस्थं पुष्करद्वीपं गोमेदं रोमसञ्चये ।
क्षीरोदश्च तथा मूत्रे क्षीरे क्षीरोद-सागरः ॥ १० ॥
सुरोदधिः श्लेष्मसंस्थो(३) मज्जायां घृतसागरः ।
रसोदधिं रसे विद्याच्छोणिते दधिसागरम् ॥ ११ ॥
स्वादूदं(४) लम्बिकास्थाने गर्भोदं शुक्र-संस्थितम् ।
नादचक्रे स्थितः सूर्य्यो बिन्दुचक्रे च चन्द्रमाः ॥ १२ ॥

---

(१) ख, जिह्वां सर्व्वंच बन्धने । (२) क, पादैः । ख, पादाद्दे ।
(३) ख, सुरोदधि श्लेष्मसंस्थं । (४) स्वादूदकं ।

लोचनाभ्यां कुजो ज्ञेयो हृदये च बुधः स्मृतः।
कण्ठदेशे गुरुं विद्यात् शुक्रः शुक्रे व्यवस्थितः॥ १३॥
नाभिस्थाने स्थितो मन्दो मुखे राहुः स्थितः स्मृतः(१)।
वायुस्थाने स्थितः केतुः शरीरे ग्रह-मण्डलम्॥ १४॥
विभक्तञ्च समाख्यातमापाद-तल-मस्तकम्"॥ इति।
तेन द्युलोक-(२) परलोकयोः सन्धिः।

**एतद्वै सन्धिं सन्ध्यां(३) ब्रह्मविद उपासते इति, सोऽविमुक्त उपास्य इति। सोऽविमुक्तं ज्ञानमाचष्टे, यो वैतदेवं वेद॥ २॥**

ननु सन्ध्यादि-कर्म्महीनस्य योगिनः कथं ब्राह्मणत्वम्? अत आह, एतद्वै सन्धिं सन्ध्यामिति। एतदिति क्रियाविशेषणम्, सन्धिं सन्धेयमित्येतदुपासनं कुर्व्वन्ति। तत्रत्य-परम-ज्योतिर्ध्यानमेव ब्रह्मविदां सन्ध्यादि-फलदमित्यर्थः। सर्व्वस्य कर्म्मफल-सुखस्य ब्रह्मसुखेऽन्तर्भावात्। तदुक्तं गीतायाम्,—

"यावानर्थ उदपाने सर्व्वतः सम्प्लुतोदके।
तावान् सर्व्वेषु वेदेषु ब्राह्मणस्य विजानतः"॥ इति॥

उपसंहरति, स इति। 'सः' आत्मा 'अविमुक्ते' वाराणस्यां स्थितः 'अविमुक्ते' भ्रूमध्ये 'उपास्यः' ध्येय इत्यावृत्त्या योज्यः। 'इति' उपादेश-समाप्तौ।

---

(१) क, सदा। (२) ख, भ-प्राण-स्थान। (३) क, ख, सन्धि सन्ध्यां।

उपासनाङ्गानि फलमाह, सोऽविमुक्तमिति। 'यो वा' यश्च 'एतत्' आत्मोपासनम् 'एवम्' अविमुक्ताधिकरणकं 'वेद' जानाति, सः 'अविमुक्त'' मित्यसम्बद्धं ज्ञानम् 'आचष्टे' शिष्येभ्यः उपदेष्टुं क्षमो भवति ॥ २ ॥

अथ हैनं ब्रह्मचारिण ऊचुः, किं जप्येनामृतत्वं ब्रूहीति। स होवाच जाज्ञवल्क्यः। शतरुद्रियेणेत्येतान्येव(१) ह वा अमृतस्य नामानि,(२) एतैर्ह वा अमृतो भवतीति,(३) एव-मेवैतद्याज्ञवल्क्यः ॥ ३ ॥

अव्यक्तानन्तमात्मानं ज्ञातुं चिन्तयितुञ्चाशक्ताः प्रथमाधिकारिणः सरलोपायं पृच्छन्तीत्याह, अथ हैनं ब्रह्मचारिण इति। 'ऊचुः' पप्रच्छुः 'किं जप्येन' केन जपनीयेन 'अमृतत्वं' मोक्षं सत्व-(४) शुद्धिद्वारा गच्छतीति तत् जाप्यं वदेति शेषः। ब्रूहीति पाठे स्पष्टम्। यथाधिकारमुत्तरयति, शतरुद्रियेणेतीति।

"षट्षष्टिर्नील-सूक्तञ्च षोड़शर्क्षस्तथैव च।
एष ते द्वे नमस्ते द्वे नतं विद्द-द्वयमेव च(५) ॥
मीढुष्टय-चतुष्कञ्च(६) एतद्धि शतरुद्रियम्" ॥

---

(१) ख, शतरुद्रियेणैतान्येव। (२) क, ह वा अमृतानि नामानि। ख, ह वा अमृत नामध्येयानि ॥ (३) क, अमृतो भवामि। कथं वै जानीयामिति। स होवाच याज्ञवल्क्यः, स एषोऽनन्तोऽव्यक्त आत्मा।
(४) ख, स च। (५) ख, विद्द्वयमेव च। (६) ख, मीढुष्टमचतुष्कञ्च।

नमस्ते इत्यादिः षट् षष्टिः, नीलसूक्तञ्च यः सोमित्यष्टौ, षोडशर्चो नमस्ते(१) इत्यादिरेवाहुत्या, ततो द्विकत्रयं, ततश्चतुष्कमिति शतऋचो रुद्रजाप्यं यजुर्विदाम्, "रुद्रजापी दहेत् पापम्" इति स्मृतेः। ज्ञानं सत्वशुद्ध्या प्राप्य अमृता भवन्तीत्यर्थः। द्रोणपर्व-पठितं वा स्तोत्रं परम-हंसानान्तु कैवल्योपनिषदाम्नातमेव शतरुद्रियमुचितम्। तत्र हेतुमाह, एतान्येव ह वा इति।

'अमृतस्य' ब्रह्मणः 'एतैः' जपैः, 'इति' वाक्यसमाप्तौ। एवमेवैतद्-याज्ञवल्क्येति ब्रह्मचारिणामङ्गीकार-वाक्यम्। याज्ञवल्क्यः इति पाठे याज्ञवल्क्येन यदाह, एवमेवैतदिति श्रुतेर्वचः॥ २॥

**अथ हैनं (२)जनको वैदेहो याज्ञवल्क्यमुपसमेत्योवाच, भगवन्! सन्न्यासं ब्रूहीति(३)। स होवाच याज्ञवल्क्यः, ब्रह्मचर्य्यं परिसमाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्।**

ननु सन्न्यासिनामेव अविमुक्तोपासन-द्वारा मुक्तिः, तर्ह्याश्रमान्तर-परिग्रहं न कोऽपि कुर्य्यादित्याशङ्क्य जनकः पृच्छति, अथेति। पितृव्यावृत्त्यर्थं वैदेह इति विशेषणम्। 'उपसमेत्य' समीपमागत्येति विनय-प्रदर्शनार्थम्। असत्यपि सन्न्यासे भवतः सिद्धिं पश्यामीति प्रदर्शनार्थं भगवन्निति सम्बोधनम्। 'सन्न्यासं' सन्न्यासाधिकारं, तद्विधिञ्च। इतरो विदिताभिप्रायः क्रमेणो-

(१) ख, नम। (२) क, अथ ह। (३) ख, भगवन् ब्रूहीति।

तत्त्ववादौ(१) क्रमसन्न्यासमाह, स होवाचेति। ब्रह्मचर्य्यं परिसमाप्येति, अन्यथा अनधीत-वेदस्य कर्म्मण्यनधिकारात्। गृही भूत्वेति, अन्यथा सन्तत्यभावे पितृऋणानपाकरणात्। वनी भूत्वेति, "तपसा हन्ति किल्बिषम्" इति सकिल्बिषस्यानधिकारात्। अतएव स्मृतिः,

"ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत्" ॥ इति।

तथा। "अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान्।
शक्त्या तु यज्ञकृन्मोक्षे मनः कुर्य्यात्तु नान्यथा" ॥ इति च।
"न्यायागत-धनस्तत्त्व-ज्ञान-निष्ठोऽतिथि-प्रियः।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि विमुच्यते" ॥

इति स्मृतेराश्रमान्तरस्यापि ज्ञानसाधनत्वात् ज्ञानिनोऽपि याज्ञवल्क्यादेः क्रमसन्न्यासो न विरुद्ध इति भावः।

**यदि वेतरथा, ब्रह्मचर्य्यादेव प्रव्रजेत्, गृहाद्-वनाद्वा। अथ पुनरव्रती वा व्रती वा(२) स्नातको वाऽस्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्।**

ननु तृतीयखण्डे ब्रह्मचारिभिरात्म-ज्ञानोपायः पृष्टः; ब्रह्मचारिणाञ्च विवाहादि-कर्म्म-व्यग्राणां कथमात्मज्ञानावसरः? इत्याशङ्क्य वैराग्यपाटवे क्रमातिक्रमेणापि सन्न्यास-सम्भवात् ज्ञान-प्रश्नोपपत्ति-रित्याशयेनाह, यदि वेति। 'यदि वा' इत्य-

(१) विदिताभिक्रमेणोक्त-यत्नादौ।　　(२) क, ख, गृहाद्वा वनाद्वा।
(३) घ, रव्रती वा व्रती वा।

नियमे; 'इतरथा' गार्हस्थाद्यनङ्गीकृत्य व्युत्क्रम-प्रकारेणापि परम-विरक्तस्य(१) कर्म्मणि प्रवृत्त्यनुपपत्तेरर्थात् सन्न्यास-सिद्धिरिति भावः। गृहाद्वनाद्वेति वा शब्दः प्रत्येक-मभिसम्बध्यते। 'वनात्' तृतीयाश्रमात्। एतज्जन्मावच्छिन्नमेव व्रतादि न सन्न्यासाङ्गमित्याह, अथ पुनरिति। 'अव्रती'(२) अचीर्णाध्ययनाङ्ग-व्रतः(३) 'स्नातकः' कृतविद्यो व्रतान्त-स्नातः, 'उत्सन्नाग्निः' मृतदारः, 'अनग्निकः' अगृहीताग्निकः। यदहरेवेत्येवकारो ऽविलम्बार्थः "हेतु-हेतुमतो लिङ्" इति लिङ्।

**तद्धैके(४) प्राजापत्यामेवेष्टिं कुर्व्वन्ति। तदुतथा न कुर्य्यादाग्नेयीमेव कुर्य्यात्; अग्नि र्ह वै प्राणः प्राणमेव तथा(५) करोति। त्रैधातवीयामेव कुर्य्यात्; एतयैव त्रयो धातवो यदुत सत्त्वं रजस्तम इति(६)।**

सन्न्यासविधिमाह, तद्धैक इति॥ तदुक्तं याज्ञवल्कोन,

"वनाद् गृहाद्वा कृत्वेष्टिं सर्ववेद सदक्षिणाम्।

प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि"॥ इति।

मोक्षे मनः कुर्य्यादिति दूषयति,(७) तदुतथा न कुर्य्यादिति। तर्हि किं कुर्य्यादत आह, आग्नेयीमेव कुर्य्यादिति। प्रजापतये

---

(१) ख, परम-विरम विरक्तस्य। (२) क, अव्रती। (३) क व्रतः।

(४) क, एतद्धैके। (५) क, ख, प्राणमेवैतया। (६) कचित्क्वचित-पुस्तके, कुर्य्यादित्यनन्तरम् 'इत्येवमेवैष भगवन्निति याज्ञवल्क्यः' इति पाठः।

(७) ख, कुर्य्यादित्यपेक्षते, दूषयति।

इत्यपदाय अग्नये त्वा जुष्टं निर्वपामीति प्रयोगः। आग्नेयेष्टि-करणे हेतुः अग्निर्ह वै प्राण इति। प्राजापतीष्टिस्तु(१) मनः प्राण-मनसोश्च प्राण एव बलीयान् सुहय-(२) दृष्टान्तेन छान्दोग्ये तथोपपादानात्। आग्नेयेष्टेः सामर्थ्यमाह, प्राणमेव तथा करोतीति। यत्र प्राणस्तत्र मनः, यत्र मनस्तत्र सर्वेन्द्रियाणि, तत्र विषयाः इत्याग्नेय्यां सर्वं सिध्यति।

ततोऽधिक-वीर्य्यमाह, त्रैधातवीयामेव कुर्य्यादिति। त्रयाणां वेदानां धातवः रसगर्भाख्य(३) इव शेरतेऽस्यां त्रैधातवीया इष्टिः, तस्यां ऐन्द्रो वैष्णवो द्वादशकपालः पुरोडाशो हविः, तच्च तण्डुल-पिष्ट-वेष्टित-यवपिष्टरूपं, सर्वस्वदानात् दृश्यः(४) सत्रासाधिकारः। तदुक्तं शतपथब्राह्मणे,

"द्वे सहस्रे भूयो वा दद्यात्, स एतया यजेत" इति।

तस्याः सामर्थ्यमाह, एतयैव त्रयो धातव इति, वर्द्धन्ते इति शेषः। के ते इत्यपेक्षायां तान् धातून् निष्कृष्य(५) दर्शयति, यदुत सत्त्वं रजस्तम इति। त्रिविधा अपि त्रैविधा रसा. अनया वर्द्धन्ते इत्यर्थः। तिसृणामिष्टीनां यथोत्तरमधिक-वीर्य्यत्वं द्रष्टव्यम्।

अथ ते योनि र्ऋत्विजो यतो जातः प्राणाद्रोचथाः(६)। तं प्राणं जानन्नग्ने! आरोह, अथा नो वर्द्धय रयिम् इत्यनेन

---

(१) क, प्रजापतिस्तु। (२) क, सद्वयत्। (३) ख, रसगर्भाराय।
(४) ख, दानादृश्यः। (५) क, ख 'निष्कृत्य। (६) ख, यातो यरोचथाः।

मन्त्रेणाग्निमाजिघ्रेत्। एष ह वा अग्नेर्योनि र्यः प्राणः प्राणं गच्छ स्वाहेत्येवमेवैतदाह। ग्रामादग्निमाहृत्य पूर्ववदग्निमाघ्रापयेत्(१)।

आघ्राणेनाग्नेरात्मनि समारोप-लक्षण-मन्त्रमाह, अयं ते योनिरिति। 'अयं' प्राणः 'ते' तव अग्नेः 'योनिः' उत्पत्तिस्थानम्, "वायोरग्निः" इति श्रुतेरनुभवाच्च। 'ऋत्विजः' ऋतुगर्भाधान-समयः प्राप्तोऽस्य इति वसन्तः समयः "तदस्य प्राप्तम्" इत्यधिकृत्य ऋतोरणच्छन्दसि घस्। अग्नेः प्राण-योनित्वे प्रमाणमाह, यत इति। जातः सन् 'यतः' प्राणात् 'अरोचथाः' रुचिर्दीप्ती, दीप्तिमापद्यसे, पितुः संयोगेनेव पुत्रः; तेन ते प्राणयोनित्वमिति गम्यते। तं 'प्राणं' स्वयोनिं जानन् अग्ने! 'आरोह' मत्प्राणारूढो भव मत्प्राणमाविशेत्यर्थः। अथ प्राणमाविष्टः सन् 'नः' अस्माकं कुले 'रयिं'(२) धनम् ऐश्वर्यं 'वर्द्धय' पोषयेति(३)। पुत्रादि-श्रेयसे प्रार्थनामन्त्रं व्याचष्टे, एष ह वा इति। तृतीयं पादं व्याचष्टे, प्राणं गच्छेति। एतन्मन्त्ररूपमग्निं प्रति गच्छ स्वाहेत्येवमेव 'आह' प्रतिपादयति।

यद्यनग्निकः स्यात्, तदा इष्ट्यनधिकारात् किं कार्यम्? अत आह, ग्रामादिति। 'पूर्ववत्' अयं ते इति मन्त्रेण; अत्रापि सन्न्यासोपनिषदुक्तो होमविधिर्द्रष्टव्यः, प्राणापानेत्यादिनापि होमश्च।

---

(१) ख, माघापयेत्। (२) ख, रयि। (३) क, श्रेषयति। ख, पोषयेति।

यद्यग्निं न विन्देदप्सु जुहुयात्; आपो वै सर्व्वा देवताः; सर्व्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वा, उद्धृत्य प्राश्नीयात् साज्यं हविरनामयं मोक्षमन्त्रः, त्रय्येवं वदेत्, एतद्ब्रह्मैतदुपासितव्यम्, एवमेवैतद्भगवन्निति वै याज्ञवल्क्यः ॥ ४ ॥

ननु महावनादौ यदि सन्न्यासेच्छा स्यात्, तदा तदह-(१), रेवेति नियम-विधानात् तत्कालञ्च अग्न्यलाभात् किं कार्य्यम्? अत आह, यद्यग्निं न विन्देदिति। आपो वा इति। "आपो वा इदमग्र आसन्" इति श्रुतेरपां सर्वदेवता-कारणत्वात् कार्य्यस्य च कारणानतिरेकादाप एव सर्व्वा देवताः। तत्र मन्त्रः सर्व्वाभ्य इति।

हविःशेषस्य प्रतिपत्तिमाह, हुत्वेति। 'उद्धृत्य'(२) पात्राद्गृहीत्वा 'प्राश्नीयात्' भुञ्जीत, 'साज्यम्' आज्यसहितं 'हविः' चरुम्। सन्न्यासस्य फलमाह, अनामयं मोक्षमन्त्र इति। सन्न्यासो निष्प्रत्यूह-मोक्षोपाय इत्यर्थः। तत्र प्रमाणमाह, त्रय्येवं वदेदिति। वेदत्रयी एव सन्न्यासिनामनामयं(३) मोक्षमन्त्र इत्येवं 'वदेत्' वदतीत्यर्थः। वेदेति क्वचित् पाठः। एतद्ब्रह्मेति(४)। 'एतत्' सन्न्यासलक्षणवस्तु ब्रह्म ज्ञातव्यं ब्रह्म-प्राप्ति-हेतुत्वात्; अत एव सन्न्यासानन्तरं ब्रह्मेति सन्न्यासिनं व्यवहरन्ति। एतदुपासितव्यमिति। मोक्षार्थिभिः 'एतत्'

(१) तदहः। (२) ख, उपोद्धृत्य। (३) क, सन्न्यासिनामयं। (४) क, ख, तद्ब्रह्मेति।

मोक्षस्वरूपम् उपायम् अङ्गीकृत्य "त्यागेनैके अमृतत्वमानशुः" इति श्रुतेः । एवमेवैतदित्यादि पूर्ववत् ॥ ४ ॥

**अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यम्, पृच्छामि त्वा याज्ञवल्क्य ! अयज्ञोपवीती कथं ब्राह्मण इति । स होवाच याज्ञवल्क्यः, इदमेवास्य तद्यज्ञोपवीतं य आत्मा प्राश्याचम्यायं विधिः परिव्राजकानाम् ।**

उपवीतत्यागे ब्राह्मण-सन्देहं प्रश्नपूर्वकं निराकरोति, अथ हैनमत्रिरिति । उक्तं यज्ञोपवीतं किमित्यत आह, य आत्मेति । आत्मध्याने सर्वं कर्म्मफलमन्तर्भूतमित्यर्थः । तदुक्तं याज्ञवल्क्येन,—

"ध्यानमेव हि जन्तूनां कारणं बन्धमोक्षयो" । इति ।

यज्ञं निवर्त्त्य प्राश्नीयादिति पूर्वोक्तमनुसरति, प्राश्याचम्येति । प्राशनमन्वाचमने विधिः, आचम्य अग्निमाघ्रापयेदिति(१) पूर्वेणान्वयः । अग्न्यभावे जल(२)मेवोपसंहरति, अयं विधिः परिव्राजकानामिति । एवं परिव्रज्या कर्त्तव्येत्यर्थः ।

**वीराध्वाने वा अनाशके(३) वा अपां प्रवेशे वा अग्निप्रवेशे वा महाप्रस्थाने वा ।**

इमं विधिं पञ्चत्वतिदिशति, वीराध्वाने वेत्यादिना ।

---

(१) क, मैथीपयेदिति । ख, माघ्रापयेदिति । (२) क, तत्र- (३) घ, अनाशकेन ।

वाशब्द-पञ्चकं समुच्चये। एतेष्वपि पञ्चसु यथाधिकारम् कर्म्म
इत्यादिविधिः। ते चोक्ता आदित्यपुराणे;—

"समायुक्तो भवेद्यस्तु पातकैर्महदादिभिः।
दुश्चिकित्सैर्महारोगैः पीड़ितो वा भवेत्तु यः॥ १॥
स्वयं देहविनाशस्य काले प्राप्ते महामतिः।
अब्राह्मणो वा स्वर्गादि-महाफल-जिगीषया॥ २॥
प्रविशेज्ज्वलनं दीप्तं करोत्यनशनं तथा।
अगाध-तोयराशिं वा भृगोः पतनमेव वा॥ ३॥
गच्छेन्महापथं वापि तुषारगिरि-मादरात्।
प्रयाग-वट-शाखाग्रात् देहत्यागं करोतु वा॥ ४॥
उत्तमान् प्राप्नुयाल्लोकान् नात्मघाती भवेत् क्वचित्।
महापाप-क्षयात् सद्यो दिव्यान् भोगान् समश्नुते॥ ५॥
एतेषामधिकारस्तु तपसां(१) सर्वजन्तुषु।
नराणामथ नारीणां सर्ववर्णेषु सर्व्वदा"॥ ६॥ इति।

वीराध्वाने अग्निपुराणे फलमुक्तम्,—

"यस्तु शास्त्रमनुस्मृत्य वीर्य्यवान् वाहिनी-(२) मुखे।
सम्मुखे वर्त्तते शूरः स स्वर्गान्न निवर्त्तते।
वीरशय्या च वीराध्वा वीरस्थान-स्थितिः स्थिरा"॥ इति।

अध्वान-शब्दोऽध्वपर्य्यायः।

अनाशके फलमुक्तं भविष्योत्तरे,—

(१) ख, तपसा। (२) ख, वाहिनी।

समाः सहस्राणि तु सप्त वै जले दशैकमग्नौ(१) पतने च षोड़श।
महाहवे षष्टि-रशीति गोग्रहे अनाशके भारत! चाक्षया गतिः"।
इति।

अनेनापां प्रवेशे अग्निप्रवेशे वा फलमुक्तम्।

महाप्रस्थाने ब्रह्मपुराणोक्तं फलमाह,—

"महाप्रस्थान-यात्रा तु कर्त्तव्या निहितोपरि(२)।
आश्रित्य सत्यं धैर्य्यञ्च सद्यः स्वर्गप्रदा च सा"॥ इति॥

**अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षणो(३) ब्रह्मभूयाय भवतीति। यद्यातुरः स्यान्मनसा वाचा सन्न्यसेत्।**

आनुषङ्गिकमुक्त्वा प्रकृत-परिव्राजमाह, अथ परिव्राडिति। 'विवर्ण' गैरिकादिना त्यक्त-(४) स्वाभाविकवर्णं वासो यस्य स विवर्णवासाः 'मुण्डः' मुण्डितशिराः। अत्रामतोऽपि(५) क्वचित् पाठः। अपरिग्रह इति, स्त्रिया सन्न्यासिना सह न गन्तव्यमित्यर्थः। 'शुचिः' बाह्याभ्यन्तर-शौचवान् 'भैक्षणः' नित्यमागमशासनमिति कामनशब्दवत् युङ्गभावः(६) सार्थिकोऽण्। 'ब्रह्मभूयाय' ब्रह्मभावाय 'भवति' सम्पद्यते। नानेनानशनादिना

---

(१) क, माग्नौ। (२) ख, नहितोपरि। (३) ख, भैक्षाणो।
(४) क, इत्युक्तं भाविकं विवर्णं। ख, इत्युक्त स्वाभाविकवर्णं।
(५) ख, अत्रामत्यपि। (६) ख, कमयामशब्दवत् युगमाभाव:।

पूर्वकर्ईहसन्न्याख्यः। आतुरसन्न्यास-विधिमाह, यदीति। कर्मर्-मनसयोरेव सामर्थ्यादैहिक-सामर्थ्याभावात्।

**एष पन्था ब्रह्मणा ह्यानुचितः(१) तेनैवैति सन्न्यासी ब्रह्म विदित्येवमेवैष भगवन्(२) याज्ञवल्क्य! ॥ ५ ॥**

सन्न्यासमार्गस्य कल्पितत्व-शङ्कां निराकरोति, एष पन्था इति। 'ब्रह्मणा' विरिञ्चिना 'ह' प्रसिद्धौ 'अनुचितः' बोधितः(३) 'तेन' मार्गेण 'एति' प्राप्नोति, सन्न्यासी 'ब्रह्म' सच्चिदानन्दाख्यं; कथं भूतः? 'वित्' तत्त्ववेत्ता 'इति' उपदेशसमाप्तौ, एवमेव 'एषः' अर्थः। याज्ञवल्क्येति अत्रेरङ्गीकार-वाक्यम्। सविसर्गपाठे एवमेवैषोऽर्थ इति याज्ञवल्क्योक्तमिति श्रुतेर्वचः॥ ५॥

**तत्र परमहंसा नाम संवर्त्तकारुणि-श्वेतकेतु-दुर्व्वासा-ऋभु-(४) निदाघ-जड़भरत-दत्तात्रेय-रैवतक-(५) प्रभृतयो ऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः।**

परमहंस-सन्न्यास एव नास्तीति विप्रतिपन्नं प्रति सत्सम्प्रदायं(६) दर्शयति, अत्रेति। संवर्त्तकादयोऽष्टौ पुराणप्रसिद्धाः। अरुणस्यापत्य श्वेतकेतुः। प्रभृति-ग्रहणात् इतरे पञ्चदश-

---

(१) क, ब्रह्मणाह्यनुविन्नः। ख, ब्रह्मणा ह्यनुविन्नः। (२) क, ख, भगविति।
(३) क, सोधितः। (४) क, ऋतुभु। (५) ख, रैवर्त्तक।
(६) क, सत्यं सम्प्रदायं। ख, सत्सम्प्रदायं।

शैवादयः । ' अव्यक्तानि 'लिङ्गानि' उपवीतादीनि येषां ते अव्यक्तलिङ्गाः 'अव्यक्ताः' आश्रमाविरुद्धः आचारो येषां ते अव्यक्ताचाराः । तदेवाह, उन्मत्तवदिति । यथा दत्तात्रेयस्य मदिरा-(१) स्त्री-निषेवणादि ।

त्रिदण्डं कमण्डलुं शिक्यं जलपवित्रं पात्रं शिखां यज्ञोपवीतञ्च, इत्येतत्(२) सर्व्वं भूःस्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत् ।

त्रिदण्डी यदा परमहंस-पदवीमधितिष्ठति, तदा दण्डादीनां का प्रतिपत्तिः? अत आह, त्रिदण्डमिति । त्रयाणां दण्डानां समाहारः पात्रादि(३) 'जलपवित्रं' जलशोधितं वस्त्रम् । चकारात् कुण्डिका-चमस-त्रिविष्टाध्वकोपानत्-कन्था-कौपीन-स्नानवस्त्राद्युत्तरासङ्गानां ग्रहणम् ।

यथा-जातरूपधरो निर्ग्रन्थो(४) निष्परिग्रहः तत्तद्-ब्रह्ममार्गे सम्यक् सम्पन्नः शुद्धमानसः प्राणसन्धारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन् उदर-पात्रेण(५) लाभालाभयोः समो(६) भूत्वा शून्यागार-देवगृह-तृण-

(१) क, मन्दिरा- । (२) ख, ग, यज्ञोपवीतं तत् । (३) क, पात्रादिः ।
(४) ख, निर्द्वन्द्वो । (५) ख, उदपात्रेण । (६) क, लाभालाभौ समौ ।
ख, लाभालाभ-समौ ।

कूट-वल्मीक-वृक्षमूल-कुलालशाला-ग्निहोत्रगृह-नदी-पुलिन-गिरिकुहर-कन्दर-कोटर-निर्झर-स्थण्डिलेषु तेष्व-निकेतवास्य-(१) प्रयत्नो निर्म्मम: शुक्लध्यान-परायणो ऽध्यात्मनिष्ठो ऽशुभकर्म्म-निर्मूलनपर: सन्न्यासेन देहत्यागं करोति, स परमहंसो नाम, परमहंसो नामेति। ६ ॥

इत्यथर्व्ववेदे जावालोपनिषत् समाप्ता ॥ २८ ॥

ओं तत्सत्।

'यथाजातरूपधर:' यथाजातो निर्वस्त्र: तथारूपस्य धरो धर्त्ता 'सम्पन्न:' कुशल: 'यथोक्तकाले' "निवृत्ते धूमसञ्चारे मन्दीभूते दिवाकरे" इत्यादि स्मृत्युक्ते काले 'विमुक्त:' अप्रतिबन्ध:, अथवा जीवन्मुक्त:। तस्य स्थानान्याह, शून्येति। 'शुक्लं' ब्रह्म, तच्चिन्तन-पर:। अशुभेति, शुभस्याप्युपलक्षणम्। सन्न्यासेन देहत्यागं करोति न वीराध्वानादिना। स परमहंसो नाम प्रसिद्ध: सेति शब्दात्, द्विरुक्ति: समाप्त्यर्था।

नारायणेन रचिता श्रुति-मात्रोपजीविना।
अस्पष्ट-पद-वाक्यानां जावालस्य प्रदीपिका(२) ॥

इत्यथर्व्ववेदे(३) जावालोपनिषदो दीपिका सम्पूर्णा ॥ २८ ॥

ओं तत्सत् ॥

---

(१) ख, स्थण्डिले केतवासस्य। ग, स्थण्डिलेष्वनिकेतवास्य।

(२) क, जावालस्य च दीपिका। (३) ख, इति यजुःशाखायां।

# कैवल्योपनिषत् ।



ओं अथाश्वलायनो भगवन्तं
परमेष्ठिनमुप(१)समेत्योवाच ।

ओं कैवल्योपनिषद् ब्रह्म शतरुद्रिय-सञ्ज्ञिका ।
एकचत्वारिंशत्तमी मध्ये(२) खण्डद्वयान्विता ॥ १ ॥

साधनोपदेश-प्रकरणत्वात् जाबाले शतरुद्रियं ब्रह्म ज्ञान-साधनत्वेन विनियुक्तम्; तत् किं स्वरूपम्? इत्यपेक्षायां सेतिहासं तत् कैवल्योपनिषदि प्रदर्श्यते, अथाश्वलायन इति। अश्वलस्यापत्यम्(३) आश्वलायनः नड़ादिफगन्तः(४)। परमे तिष्ठतीति 'परमेष्ठी' ब्रह्मा तम्।

अधीहि भगवन्(५) ब्रह्मविद्यां वरिष्ठां
सदा सद्भिः(६)सेव्यमानां निगूढाम्।
यथा चिरात् सर्व्वपापं(७) व्यपोह्य
परात्परं पुरुषं याति(८) विद्वान्॥ १ ॥

(१) क, परमेष्ठिनं परि-। (२) क, षष्ठ्यो। (३) ख, अश्वलस्याधिपत्यम्।
(४) क, ख, फगन्तः। (५) घ, भगवो। (६) क, ख, यतिभिः।
(७) क, सर्वपापं। (८) क, प्रयाति।

तस्मै स होवाच पितामहश्च
श्रद्धा-भक्ति-ध्यान-योगादवेहि ।
न कर्म्मणा न प्रजया धनेन
त्यागेनैके अमृतत्वमानशुः ॥ २ ॥

अधीहि इत्यादिः विद्वानित्यन्त एको मन्त्रः । एतदादयः(१) सप्त वृत्तमन्त्राः; ततश्चतस्रोऽनुष्टुभः;(२) पुनस्त्रीणि सार्धानि वृत्तानि; एतावच्छ्रुतरुद्रियमिति। अस्य फलावबोधको द्वितीयः खण्डः। तत्र अस्पष्टपदानि स्पष्टीक्रियन्ते। सदा 'सद्भिः' साधुभिः। यतिभिरिति क्वचित् पाठः। 'अचिरात्' अविलम्बेन 'सर्व्वपापं'(३) सर्व्वबन्धनं 'व्यपोह्य' निराकृत्य 'याति' प्राप्नोति। क्वचिदुपैतीति पाठः। 'अवेहि' जानीहि। अवेहीति युक्तः पाठः। 'एके' मुख्याः।

परेण नाकं निहितं गुहायां
विभ्राजते यद्यतयो विशन्ति ।
वेदान्त-विज्ञान-सुनिश्चितार्थाः
सन्न्यासयोगाद्-यतयः शुद्धसत्त्वाः ॥ ३ ॥

परेण नाकमित्यनया द्वितीया इति परेण योगे द्वितीया। 'गुहायाम्' अज्ञानगह्वरे।

---

(१) ख, एतदारभ्य । (२) ख, ततः पश्चानुष्टुभः । (३) ख, सर्व्वमार्गं ।

ते ब्रह्मलोकेषु परान्तकाले
परामृताः(१) परिमुच्यन्ति सर्व्वे ।
विविक्त-देशे च सुखासनस्थः
शुचिः समग्रीव-शिरः-शरीरः ॥ ४ ॥

'परान्तकाले' कल्पान्तसमये ।

"ब्रह्मणा सह मुच्यन्ति सम्प्राप्ते युगपर्य्यये" इति स्मृतेः ।

सन्न्यासयोगादित्युक्तम्, तत्र गुहानिहित-प्रकाशनाय योग-स्वरूपमाह, विविक्तेति । समानि ग्रीवा-शिरः-शरीराणि यस्य स समग्रीव-शिरः-शरीरः । आप इति(२) ग्रीवाशब्दस्य ह्रस्वः । समा ग्रीवा यस्य तत् समग्रीवं, तादृशं शिरो यस्मिन् तत् समग्रीव-शिरः, तादृशं शरीरं यस्य स तथेति वा ।

अन्त्याश्रमस्थः सकलेन्द्रियाणि
निरुध्य भक्त्या स्वगुरुं प्रणम्य ।
हृत्पुण्डरीकं विरजं विशुद्धं
विचिन्त्य मध्ये विशदं विशोकम् ॥ ५ ॥

अचिन्त्य-मव्यक्त-मनन्तरूपं
शिवं प्रशान्तममृतं ब्रह्मयोनिम् ।
तमादि-मध्यान्त-विहीनमेकं
विभुं चिदानन्द-मरूप-मद्भुतम् ॥ ६ ॥

---

(१) ख, परामृतात् । (२) क, प्राप इति । ख, आपोरिति ।

उमा-सहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम्।
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्त-साक्षिं तमसः परस्तात्॥ ७॥

'अन्त्याश्रमः' चतुर्थाश्रमः, 'ब्रह्मयोनिं' वेदकारणं, 'समस्त-साक्षिं' सर्व्वसाक्षिणम्। इकारान्तः साक्षिशब्दश्छान्दसः।

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः(१) ॥ ८॥
स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये॥ ९॥
सर्व्वभूतस्थ-मात्मानं सर्व्वभूतानि चात्मनि।
सम्पश्यन् ब्रह्म परमं याति नान्येन हेतुना॥ १०॥
आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम्।
ज्ञान-निर्मथनाभ्यासात् पापं(२) दहति पण्डितः॥ ११॥

'सेन्द्रः' स इन्द्रः, छान्दसः सन्धिः।

---

(१) क, स आत्मा परमेश्वरः। (२) क, पाशं।

स एव माया-परिमोहितात्मा
शरीरमास्थाय करोति सर्वम्।
स्त्रियन्न-पानादि-विचित्रभोगैः
स एव जाग्रत् परितृप्तिमेति ॥ १२ ॥

स्त्रियन्नेति छान्दस इयङ्।

स्वप्ने स जीवः सुख-दुःख-भोक्ता
स्वमायया कल्पित-जीव-लोके(१)।
सुषुप्तिकाले सकले विलीने
तमोऽभिभूतः सुखरूपमेति ॥ १३ ॥
पुनश्च जन्मान्तर-कर्म्म-योगात्
स एव जीवः स्वपिति प्रबुद्धः।
पुरत्रये क्रीड़ति यश्च जीव-
स्ततः सुजातं(२) सकलं विचित्रम् ॥ १४ ॥
आधार-मानन्द-मखण्ड-बोधं
यस्मिन् लयं याति पुरत्रयञ्च ॥ *

(१) ख, ग, विश्वलोके। (२) ख, ततस्तु जातं। * कश्चिन्निज-मूलपुस्तके, "यत्रैव तेजांसि मनांसि विश्वं मत्वांस भावं विरहेण योगिनाम्" ॥ इत्यतिरिक्तं श्लोकार्द्धं विद्यते। तच्च पुस्तकान्तरेष्वदर्शनात्, पुनश्चापि शाङ्करानि व्याख्यानानि दीपिकायामव्याख्यानात्, अशुद्धत्वाच्च, मूलमध्ये न निवेशितम्।

'स्वमायया' स्वाज्ञानेन कल्पिते जीवलोके सुख-दुःख-भोक्ता इत्यन्वयः। 'सकले' जगति 'विलीने' कारणभावमापन्ने 'तमोऽभिभूतः' अज्ञानावृतः स्वपिति, 'प्रबुद्धः' स्वप्नादुत्थितः 'पुरत्रये' विश्व-तैजस-प्राज्ञैरभिमते अवस्थात्रये सकलं 'ततः सुजातं' तस्मात् जीवात् सम्यगुत्पन्नम्। ततस्तु जातमिति युक्तः पाठः। तुरीयमाधारमिति, पुरत्रयञ्च यस्मिन् लयं याति।

एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी(१) ॥ १५ ॥
यत् परं ब्रह्म सर्व्वात्मा विश्वस्यायतनं महत्।
सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्(२) ॥ १६ ॥
जाग्रत्-स्वप्न-सुषुप्त्यादि प्रपञ्चं यत् प्रकाशते।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ १७ ॥
त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदा शिवः ॥ १८ ॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम्।
मयि सर्व्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्(३) ॥१९॥

प्रथमः खण्डः ॥ १ ॥

---

(१) क, पृथिवी विश्वधारिणी।

(२) क, तस्मात् तस्माधिकञ्च तत्। (३) कं, ख, तद्ब्रह्माऽस्म्यहमद्वयम्।

'एतस्मात्' तुरीयावस्थात् ब्रह्मणः ।

तत्त्वमेवेति । ब्रह्मणस्त्वदनन्यत्वं बध्यते ; त्वमेव तदिति, तदेव ब्रह्मानन्यत्वम् । प्रपञ्चमिति छान्दस नपुंसकत्वम् । नचास्ति वेत्ता ममेति, नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोतेति श्रुत्यन्तरात् ।

अणोरणीयानहमेव तद्‌-
न्महानहं विश्वमहं(१) विचित्रम् ।
पुरातनोऽहं पुरुषोऽहमीशो
हिरण्मयोऽहं शिवरूपमस्मि ॥ २० ॥*

अपाणि-पादोऽहमचिन्त्य-शक्तिः
पश्याम्यचक्षुः स शृणोम्यकर्णः ।
अहं विजानामि विविक्तरूपो
न चास्ति वेत्ता मम चित् सदाहम्(२) ॥ २१ ॥

---

(१) क, ग, विश्वमिदं ।

* क, चिह्नित मूलपुस्तके अनन्तरमतिरिक्तः श्लोकैको विद्यते ; यथा, "नारायणोऽहं पुरुषः शिवोऽहं ब्रह्माहमस्मि सकलोऽहमस्मि । पूर्णोऽहमस्मि पुरुषोऽहमस्मि ज्ञानोऽहमस्मि सत्योऽहमस्मि" ॥ इति ।

(२) क, सदैवम् ।

वेदैरनेकैरहमेव वेद्यो
वेदान्तकृत् वेदविदेव चाहम् ।
न पुण्य-पापे मम नास्ति नाशो
न जन्म देहेन्द्रिय-बुद्धिरस्ति ॥ २२ ॥

न भूमिरापो नच(१) वह्निरस्ति
न चानिलो मेऽस्ति न चाम्बरञ्च ।
एवं विदित्वा परमात्मरूपं
गुहाशयं निष्कलमद्वितीयम् ॥ २३ ॥

समस्त-साक्षिं सदसद्विहीनं
प्रयाति शुद्धं परमात्मरूपम् ।*

न पुण्य-पापे मम स्तः; नास्ति नाशो ममेत्येव; न जन्म ममेत्येव; देहेन्द्रिययुक्ता बुद्धिर्मम नेत्येव। आपो नचेति वाक्यम्; वह्निरस्ति नचेति वाक्यम्; अनिलो नास्तीति वाक्यम्; अम्बरञ्च नास्तीति वाक्यम्। एकं फलमाह, एवमिति। एवं विदित्वा शुद्धं परमात्मरूपं प्रयातीत्यन्वयः।

---

(१) घ, मम ।

* क चिह्नित मूलपुस्तके अतिरिक्तं श्लोकार्द्धं दृश्यते; तद्यथा,
"आद्येन्द्रमद्वीज जगन्निवासं विश्वं गुणोति वसुधादि शिवावसानम्" । इति ॥

यः शतरुद्रियमधीते सोऽग्निपूतो भवति स वायु-पूतो भवति, स आत्मपूतो भवति, स सुरापानात् पूतो भवति, स ब्रह्महत्यायाः(१) पूतो भवति, स सुवर्णस्तेयात् पूतो भवति, स कृत्याकृत्यात् पूतो भवति ; तस्मादविमुक्त-माश्रितो भवत्यित्याश्रमी, सर्व्वदा सकृद्वा जपेत् ।

अनेन ज्ञानमाप्नोति संसारार्णव-नाशनम् ।

तस्मादेवं विदित्वैनं कैवल्यं पद-(२)मश्नुते ।

कैवल्यं पदमश्नुते ॥ २४ ॥

द्वितीयः खण्डः ॥ २ ॥

इत्यथर्ववेदे कैवल्योपनिषत् समाप्ता ॥ २९ ॥

ओँ तत्सत् ॥

वेदने फलमुक्त्वा पाठफलमाह, य इति । सकृद्वा इति प्रत्यहमिति शेषः । 'कैवल्यं' केवलभावं मोक्षं परम्, 'अश्नुते' प्राप्नोति । द्विरुक्तिः समाप्त्यर्था । 'इति' स्वरूप-कथने ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्ट-पद-वाक्यानां कैवल्यस्य प्रदीपिका ॥

इत्यथर्ववेदे कैवल्योपनिषदो दीपिका सम्पूर्णा ॥ २९ ॥

---

(१) ख, हत्यात् । (२) क, ख, पद ।

# कैवल्योपनिषद्

## शङ्करानन्दकृत-दीपिका।

—— ❦ ❦ ——

कैवल्योपनिषत् खलु नारायणभट्ट-कृतया दीपिकया सह मुद्रिता। नारायणकृता हि दीपिका अतिसङ्क्षिप्तत्वादकृतेव प्रतिभाति। समाप्ते च मुद्रणव्यापारे यत्नकृत एतमपि लभ्यते इति शिष्टवाक्यानुसारात् नानास्थानतः समाहृतानि खण्डितत्वादि-दोषेणोपेक्षितानि कतिपय-पुस्तकानि यत्नतः पुनरालोड्य तद्गर्भतेषु कतिपय-पुस्तकेषु [illegible] शङ्करानन्द-विरचिता कैवल्योपनिषदो दीपिका मया समासादिता। तामादरेण परीक्ष्य, शङ्करकृतया दीपिकया विना कोऽपि ग्रन्थो नैव विशदार्थो भवतीति परिभाव्य, समस्तपदार्थस्य भावार्थस्य च स्पष्टतया प्रकाशनादियं सहृदय-हृदय-हारिणी भविष्यतीति मत्वा च, मुद्रितस्य मूलस्यान्ते एव निवेश्यते। इमां मालोक्य सभ्य निरतिशयं पाठसुखमनुभूयतामिति।

कैवल्याख्योपनिषदं कैवल्यार्थावबोधिनीम्।
व्याख्यास्ये केवलस्तेन कैवल्यात्मा प्रसीदतु ॥ १ ॥

भगवती श्रुतिर्मातेव सुखप्रतिपत्त्यर्थं कञ्चनाश्वलायनगुरवी-कृत्य आख्यायिकामवतारयति ब्रह्मविद्यायामास्तिक्यं जनयितुम्। 'अथ' साधन-चतुष्टय-सम्पत्त्यनन्तरम्, 'आश्वलायनः' ऋग्वेदाचार्य्यः 'भगवन्तं' पूजावन्तं 'परमेष्ठिनं' सर्व्वोत्कृष्टस्थान-निवासं 'परिसमेत्य' शास्त्रीयेण विधिना समीपमागत्य 'उवाच' उक्तवान्।

'अधीहि' मदनुग्रहार्थं स्मर, भगवन्! समग्र-धर्म्म-ज्ञान-वैराग्यैश्वर्य्य-यशः-श्रीमन्! 'ब्रह्मविद्यां' ब्रह्मणः देश-काल-वस्तु-परिच्छेद-शून्यस्य विद्या बुद्धिः साक्षात्कार-कारणं तां, 'वरिष्ठाम्' अतिशयेन श्रेष्ठां, 'सदा' नित्यं 'सद्भिः' देहादिष्वात्म-बुद्धि-शून्यैः, 'सेव्यमानां' हृदये ध्रियमाणां 'निगूढां' सर्व्वभूतेष्वात्मतो

विद्यमानत्वेन विद्यमानामप्यविद्यया नितरां संहताम्, 'यथा'(१) ब्रह्मविद्यया 'अचिरात्' अदीर्घेण कालेन 'सर्व्वपापं' निखिलं दुःखकारणम् अज्ञानं ससंस्कारं 'व्यपोह्य' विविधं परित्यज्य विनाश्येत्यर्थः। 'परात्' सर्व्वजगत्-कारणादव्याकृतात् 'परम्' उत्कृष्टम् अज्ञानाश्रय-विषयत्वाभ्यां, 'पुरुषं' परिपूर्णं 'याति' प्राप्नोति, 'विद्वान्' अहमेव सोऽस्मीति साक्षात्कारवान् ॥ १ ॥

एवं पृष्टः 'तस्मै' स्वशिष्याय ब्रह्मविद्यार्थिने 'सः' गुरुः सर्व्वज्ञः 'ह' किल 'उवाच' उक्तवान्,- 'पितामहश्च' जगत्-पितॄणां दक्षा-दीनां पिता पितामहः कमलासनः, 'चकारः' अपिकारार्थः; स पितामहोऽप्युवाच, न तूष्णीं कृतवानित्यर्थः। ब्रह्मविद्यायाः साक्षादकृमयकत्वात्, तदर्थस्य च ब्रह्मणो वाङ्मनसातीतत्वात्, अतः सोपायां तामाह, 'श्रद्धा-भक्ति-ध्यान-(२) योगात्' श्रद्धा आस्तिक्य-बुद्धिः, भक्तिः भजनं तदेकतात्पर्य्य-बुद्धिः, ध्यानं विजातीय-प्रत्यय-शून्य-सजातीय-प्रत्यय-प्रवाहः, एतेषां 'योगः' सम्बन्धः एतत्-कारणमिति यावत्, तस्मात्, 'अवेहि' जानीहि।

इदानीं यथा श्रद्धा-भक्ति-ध्यान-योगो ब्रह्मविद्यायां कारणं, तद्वत् सन्न्यासोऽपीत्याह, न 'कर्म्मणा' श्रौतेन स्मार्त्तेन वा, न 'प्रजया' पुत्रादिना, 'धनेन' दैवेन मानुषेण वा वित्तेन, नेति पूर्व्वमनुषज्यते; अमृतत्वमिति वक्ष्यमाणानुषङ्गः कर्म्म—प्रजा-धन-पदेष्ववगन्तव्यः; 'त्यागेन' निखिल-श्रौत-स्मार्त्त—कर्म्म-परि-

---

(१) यथा इत्यत्र यथा इति पाठस्य पूर्व्वदृष्टेषु पुस्तकेषु विद्यमानत्वात् स एव मूले निवेशितः। (२) ज्ञान।

त्यागेन पारम-हंस्याश्रम-रूपेण, 'एके' महात्मानः सम्प्रदायविदः 'अमृतत्वम्' अविद्या-मरणभाव-राहित्यं 'आनशुः' आनशिरे प्राप्ताः ॥ २ ॥

एवं कृते सन्न्यासे 'परेण' परस्तात् 'नाकं' कं सुखं, तद्विरोधि दुःखम् अकम्, न अकं यस्मिन् स नाकः तं, स्वर्गस्योपरीत्यर्थः। अथ वा, 'परेण' परं, 'नाकम्' आनन्दात्मानं 'निहितं' प्रविष्टं धात्रा 'गुहायां' बुद्धौ 'विभ्राजते' विशेषेण स्वयंप्रकाशत्वेन दीप्यते, 'यत्' प्रसिद्धं विश्वव्यापिस्वरूपं 'यतयः' कृतसन्न्यासाः प्रयत्नवन्तो ब्रह्मसाक्षात्कार—सम्पन्नाः 'प्रविशन्ति' इदं वयं स्म इति साक्षात्कारेण तदेव भवन्तीत्यर्थः।

यतीनां विशेषणान्याह, 'वेदान्त--विज्ञान-सुनिश्चितार्थाः' वेदान्ताः प्रसिद्धाः, तेभ्यो जातं विशिष्टम् अहं ब्रह्मास्मीति ज्ञानं, तस्मिन्नेव सुनिश्चितः अर्थः प्रयोजनं येषां ते। अथवा सुनिश्चितः अयमित्थमेवेति सम्यगवधारितो ब्रह्मलक्षणः अर्थो विषयो येषां ते वेदान्त-विज्ञान-सुनिश्चितार्थाः। 'सन्न्यासयोगात्' सम्यक् वान्तविष्ठादिवत् लोकद्वय-भोगस्य न्यासः त्यागः सन्न्यासः, तस्य योगः अहं सन्न्यास्यस्मीति बोधः, तस्मात्, 'यतयः' व्याख्यातम्, पुनरादानं विशेष्यत्व-कथनार्थम्। 'शुद्धसत्त्वाः' शुद्धं रागादि-कषाय-रहितं सत्त्वम् अन्तःकरणं येषां ते शुद्धसत्त्वा ॥ २ ॥

एवम्भूता अपि कुतश्चित् प्रतिबन्धादस्मिन् शरीरे अनुत्पन्नसाक्षात्काराश्चेत्, तदा 'ते' उक्ता यतयः 'ब्रह्मलोकेषु' ब्रह्मणः कार्य्यस्यैक एव लोकोऽनेक-भूमिका-प्रासादवदध उपर्य्यादिभागेनावस्थिता बहव एव तेनाभिधीयन्ते, तेषु ब्रह्मलोकेषु 'परान्त-

कालें' परस्य कार्य्यस्य ब्रह्मणः अन्तकालो विनाशकालः द्वि-परार्द्धावसानः परान्तकालः, तस्मिन्, 'परामृतात्' उत्कृष्टात् अमरण-धर्म्मिणोऽव्याकृतात् 'परिमुच्यन्ति' परिमुच्यन्ते सर्व्वतो विमुक्ता भवन्ति, 'सर्व्वे' निखिलाः।

इदानीं ब्रह्मज्ञानार्त्थमुपासनं कर्त्तुम् उपवेशनार्थं देशविशेषादिकमाह, 'विविक्तदेशे' एकान्तदेशे, चशब्दादव्याकुल-कालेऽपि, 'सुखासनस्थः सुखम् अनुद्वेगकरं दर्भाद्यासनं सुखासनं, तस्मिन् तिष्ठतीति सुखासनस्थः, 'शुचिः' बहिरन्तः-शौचवान्, 'समग्रीव-शिरः-शरीरः' समं ग्रीवा च शिरश्च शरीरञ्च यस्य स समग्रीव शिरः-शरीरः, ऋजुकायः पद्म-स्वस्तिकाद्यासनस्थ इत्यर्थः ॥ ४ ॥

'अत्याश्रमस्थः'* अति अधिकः ब्रह्मचारि-गृहस्थ-वानप्रस्थ-कुटीचक बहूदक-हंसेभ्य आश्रमः पारमहंस्य-लक्षणः अत्याश्रमः, तस्मिन् तिष्ठतीति अत्याश्रमस्थः, 'सकलेन्द्रियाणि' निखिलानि समनस्कानि ज्ञान-कर्मेन्द्रियाणि 'निरुध्य' स्व-स्व-प्रकारेभ्योऽवरुध्य 'भक्त्या' देववत् देवादाधिक्याद्वा 'स्वगुरुं' स्वस्य तत्त्वमस्यर्थस्यावबोधकं 'प्रणम्य' प्रकर्षेण नत्वा, अनन्तरं हृत्पुण्डरीकं हृदय-कमलं पञ्च-छिद्रादि-विशेषणं 'विरजं' विरजस्कम् अपगत--राग-द्वेषादिकं, 'विशुद्धं' विगत--समस्त--दुःखादिदोषं 'विचिन्त्य' विशेषेण ध्यात्वा, 'मध्ये' हृदयपुण्डरीकस्यान्तः, 'विशदं' निर्म्मलं

---

* मूले निहितः 'अत्याश्रमस्थः' इति पाठो बहुषु पुस्तकेषु दृष्टः, नारायणभट्टसम्मतश्च।

शुद्धस्फटिक-सङ्काशमित्यर्थः, 'विशोकं' विगत-शोक-दुःखं विशोकम् आनन्दपूर्ण-हृदयं सोरामनस्वित्यर्थः ॥ ५ ॥

वस्तुतस्तु, 'अचिन्त्य' वाङ्मनसातीतत्वेन प्रत्यय-सन्तत्य-विषयम्। वाङ्मनसातीतत्वे हेतुः 'अव्यक्तं' शब्दाद्यशेष-शून्यत्वा-दस्पष्टमव्यक्तम्। अन्नत्वं परिच्छेदस्य वारयति, 'अनन्तरूपं' न विद्यते अन्तः इयत्ता रूपाणां शरीराणां यस्य सोऽनन्तरूपः तं, देश-काल-वस्तु-परिच्छेद-शून्यं वा अनन्तरूपं, 'शिवं' मङ्गलरूपं 'प्रशान्तम्' अविद्यादिदोष-रहितम्, 'अमृतं' कालत्रयासंस्पृष्टम्, अमृतवद्वा निरतिशयानन्द-रूपत्वेन, 'ब्रह्म' वृहत् सर्व्वस्मादभ्य-धिकं, 'योनिं' जगज्जन्मादि-कारणं, 'तथा'* यथैतद्विशेषेण जातं, तद्वत् स्वरूपमपि, 'आदि-मध्यान्त-विहीनम्' उत्पत्ति-परिच्छेद-विनाश-वर्ज्जितम्, तत्र हेतुः, 'एकं' द्वितीय-वस्तुमात्र-रहितं 'विभुं' समर्थं व्यापिनं वा, 'चिदानन्दं' स्वयं प्रकाशमान निरति-शयानन्दम्, 'अरूपं' चिदानन्द-व्यतिरिक्त-रूप-रहितं, ततः 'अद्भुतम्'† आश्चर्य्यकरम् ॥ ६ ॥

'उमासहायं' ब्रह्मविद्या भवानी, सहायः कामादि-पाटच्चर-भञ्जकः(१) अर्द्धनारी-शरीरत्वेन वामाङ्ग-(२) स्थितानुपम-युवति-रूपत्वेन वा यस्य स उमासहायः तं, 'परमेश्वरम्' उत्कृष्ट-ब्रह्मादि-नियन्तारं 'प्रभुं' समर्थं 'त्रिलोचनं' त्रीणि सोम-सूर्य्या-

---

* तथादि इत्यत्र तमादि इति पाठो बहुषु पुस्तकेषु विद्यते।

† अद्भुतमित्यत्र अस्तुत मिति पाठो बहुषु पुस्तकेषु दृश्यते।

(१) दीपिकायां भञ्जकं। (२) वामाङ्क।

त्रय्यात्मकानि लोचनानि यस्य स त्रिलोचनः तं, 'नीलकण्ठं' कृष्णकण्ठं 'प्रशान्तं' प्रसन्नवदनेन्द्रियं, 'ध्यात्वा' प्रत्यक्-प्रवाहेण साक्षात् कृत्य 'मुनिः' मननशीलः 'गच्छति' प्राप्नोति 'भूत-योनिम्' आकाशादि-महाभूत-कारणम्।

तर्हि किं कारणत्वोपाधिकमित्याशङ्क्य नेत्याह, 'समस्त-साक्षिं, समस्त-साक्षिणं सर्व्वबुद्धि-प्रचार-द्रष्टारम्। साक्षित्व-मपि न केवलस्य इत्यत आह, 'तमसः' आवरण-शक्ति-विक्षेप-रूपाया अविद्यायाः, 'परस्तात्' परतः अविद्या-सम्बन्ध-शून्य-मित्यर्थः, उमासहायोपासनातः प्राप्यो निरवद्यो विद्यादशायां सर्व्वात्मेत्यर्थः ॥ ७ ॥

'सः' उक्तः 'ब्रह्मा' प्रथमशरीरी कार्य्य-कारणभूतः, 'सः' उक्तः 'शिवः' उमासहायः, 'सेन्द्रः' सः उक्तः 'इन्द्रः' त्रिलोकी-पतिः, 'सः' उक्तः 'अक्षरः' विनाश-रहितः, 'परमः' उत्कृष्टः 'स्वराट्' अन्यानपेक्षत्वेन स्वेनैव राजते इति स्वराट्, 'स एव' उक्त एव 'विष्णुः' व्यापन-शीलः शङ्ख-चक्र-गदा-धरः, 'सः' उक्तः 'प्राणः' प्राणादि-पञ्च-वृत्तिरूपः, 'सः' उक्तः 'कालाग्निः' कालरूपी वैश्वानरः, 'सः' उक्तः 'चन्द्रमाः' शशाङ्कः ॥ ८ ॥

'स एव' उक्त एव 'सर्वं' निखिलं 'यत्' प्रसिद्धं 'भूतम्' अतीतं, 'यच्च' यदपि 'भव्यं' भावि, चकारात् वर्त्तमानमपि, 'सनातनं' चिरन्तनं 'ज्ञात्वा' अहं ब्रह्मास्मीति साक्षात्कृत्य, 'तम्' उक्तमानन्दात्मानं 'मृत्युम्' अविद्यां ससंस्काराम् 'अत्येति' अतीत्य गच्छति। 'नान्यः' उक्ताद्ब्रह्मज्ञानाद्-व्यतिरिक्तः 'पन्थाः' मार्गः 'विमुक्तये' विमुक्त्यर्थं नास्तीति शेषः।

यद्वा त्रयाणां विश्व-तैजस-प्राज्ञानां, विराड्-हिरण्यगर्भेश्वराणां वा स्वयंप्रकाशत्वेन लोचनं प्रकाश-स्वरूपं त्रिलोचनं नीलं तमोऽज्ञानं कण्ठे कण्ठवच्चिदेकदेशे अधिकव्याप्तत्वेन चैतन्यस्य वर्त्तते यस्य स नीलकण्ठः तमिति व्याख्यातं, तदा 'विषयम्' अविद्या-रहितं 'विशोकं' दुःखसंस्कार-रहितम्, 'उमासहायं' ब्रह्मविद्या-सहायं 'प्रशान्तं' पुनरुत्थान-संस्कार-वर्जितमिति निर्गुणपरत्वेन समग्रं वाक्यमवगन्तव्यम्, निर्गुणस्याप्युपलब्धत्वेन हृदयप्रदेश-मध्यस्थत्वमविरुद्धम्; तथा च ध्यात्वा मनन-निदिध्यासने कृत्वा इत्येतदप्युपपन्नमेव ॥ ९ ॥

'सर्वभूतस्थं निखिलेषु स्थावर-जङ्गमेषु तिष्ठतीति सर्वभूतस्थः, तम्, 'आत्मानम्, अस्मत्-प्रत्यय-व्यवहार-योग्यं, 'सर्वभूतानि च' निखिलानि स्थावर-जङ्गमानि च, 'चकारः' आधाराधेय-भाव-व्युत्क्रमार्थः। 'आत्मनि' आनन्दात्मनि अहम्प्रत्यय-योग्ये, 'सम्पश्यन्' सम्यक् संशय-विपर्य्यय-मन्तरेणावलोकयन् 'ब्रह्म' बृहत् देश-काल-वस्तु-परिच्छेद-शून्यं 'परमम्' उत्कृष्टम् अनुपचरित-(१) मित्यर्थः; 'याति' प्राप्नोति, न यातीति देहली-प्रदीप-न्यायेन सम्बध्यते, 'न याति' न प्राप्नोति, 'अन्येन' उक्तबोध-व्यतिरिक्तेन 'हेतुना' कारणेन ॥ १० ॥

ध्यात्वा गच्छतीत्यस्य व्याख्यानं ज्ञात्वा तमित्यादि; नान्यः पन्था विमुक्तये इत्यस्य व्याख्यानन्तु इदं सर्वभूतस्थमित्यादि। यदा तु एवं ज्ञानं नोपपद्यते, तदा तदुत्पादनोपायमाह,

---

(१) अनुपपचरत ।

'आत्मानम्' अन्तःकरणम् 'अरणिं' वह्निजनकं मन्थ-संस्कृतं काष्ठं 'कृत्वा' अधो निधाय अधरारणित्वेन चिन्तयित्वेत्यर्थः। 'प्रणवम्' ओङ्कारम् उत्तरारणिमपि, 'चकारः' कृत्वेत्येतदनुकर्षणार्थः। 'ज्ञान-निर्मथनाभ्यासात्' ज्ञानस्य सर्व्वात्मकोऽहमस्मीत्येवं रूपस्य 'निर्म्मथनं'(१) युक्तिभिर्विलोडनं, तस्य 'अभ्यासः' आवृत्तिरूपः, ज्ञान-निर्म्मथनाभ्यासः, तस्मात्, उत्पन्नेनाहं ब्रह्मास्मीति साक्षात्-काराग्निना 'पाशम्' आत्मनो बन्धनरूपम् अज्ञानरज्जु-रचितम् अहमादिग्रन्थिं 'दहति' भस्मीकरोति, 'पण्डितः' पण्डा अहं ब्रह्मास्मीति बुद्धिः, ताम् 'इतः' प्राप्तः पण्डितः॥ ११॥

नन्वस्यासङ्गोदासीनस्याद्वितीयस्य कुतः संसार-पाशरूपः? इत्यत आह, 'स एव' उक्तोऽसङ्गोदासीन एव, नत्वन्यः, 'माया-परिमोहितात्मा' माया अविद्या आवरण-विक्षेपकरी शक्तिः, तया परिमोहितः स्वप्रकाशः(२) आनन्दात्मा स्वस्वरूपः माया-परिमोहितात्मा, 'शरीरं' स्थूलादि-भेदभिन्नं मनुष्यादि-कलेवरम् 'आस्थाय' अहं मनुष्य इत्याद्यभिमानम् आसमन्तात् स्वीकृत्य 'करोति सर्व्वं' निखिलं व्यापारजातं कुरुते। 'स्त्रियन्न-पानादि-विचित्रभोगैः' 'स्त्रियः' मनोऽनुकूला युवत्यः, 'अन्नपाने' मनोऽनुकूले, आदिशब्देन वासनाच्छादनादीनि मनोऽनुकूलानि, तैः स्त्र्यन्न-पानादिभिः विचित्रैः भोगैः(३) स्त्रियन्नेति छान्दसम्। 'स एव' माया-परिमूढ एव नत्वन्यः, 'जाग्रत्' जागरणम् इन्द्रियै-

---

(१) दीपिकायां मन्था निर्म्मथनं। (२) दीपिकायां, स्वयं का प्रेशः।

(३) दीपिकायां भागैरित्यनन्तरं "नवाक्रान्तो पामानि विचित्र भोगैः" इत्यतिरिक्तः पाठो विद्यते।

बोद्धृ-विषयोपलब्धिरूपं कुर्वन्, 'परितृप्तिः' सर्वतो विषय-सुखात् तृप्तिः परितृप्तिः, ताम् 'एति' गच्छति, सुखं दुःखञ्च प्राप्नोतीत्यर्थः ॥ १२ ॥

इदानीं स्वप्न-सुषुप्त्यो र्विक्षेप-तदभाव-कथनेन संसार-मोक्षयोरर्थात् दृष्टान्तमाह, 'स्वप्ने' इन्द्रिय-ग्रामोपरम-रूपायां स्वप्नावस्थायां, सः 'जीवः' प्राणानां धारयिता विविध-वासना-वासितः 'सुख-दुःख-भोक्ता' सुख-दुःखयोः प्रसिद्धयोः 'भोक्ता' अहं सुखी, अहं दुःखीत्येवंरूप-प्रत्ययवान् सुख-दुःख-भोक्ता।

तत्र संसारस्य दृष्टान्तेन वास्तवत्वं वारयति, 'स्वमायया' स्वस्य तत्तद्देहाभिमानिनः माया अज्ञानं, विपरीत-ज्ञानञ्च, तया 'कल्पितविश्वलोके' कल्पिते वासनारूपे विश्वस्मिन् एव रथयोगे पथादिके(?) निखिले लोके भुवने जने च कल्पित-विश्वलोके। स्वप्ने यथा, तद्वज्जागरणे ऽपीत्यर्थः। 'सुषुप्तिकाले' आनन्दभोगावसरे 'सकले' निखिले 'विलीने' विशेष-विज्ञाने स्वकारणे लयं गते; एतावत् सुषुप्तौ मोक्षे च समम्; इयांस्तु विशेषः, 'तमोऽभिभूतः' अज्ञानावृतः 'सुखरूपं' स्वस्वरूपं स्वयं प्रकाशमानम् आनन्दात्म-स्वरूपम् 'एति' गच्छति ॥ १३ ॥

पुनश्च आनन्दात्म-स्वरूपं प्राप्य भूयोऽपि 'जन्मान्तर-कर्म-योगात्' प्रागभवीय—कर्मानुसारात् 'स एव' आनन्दात्म-स्वरूपं प्राप्त एव सुषुप्तिं गतः, नत्वन्यः, 'जीवः' प्राणविधारकः 'स्वपिति' स्वप्नावस्थां गच्छति। अथवा, सुषुप्तात् 'प्रबुद्धः' प्रबोधं जागरणं प्राप्तः भवतीति विशेषः ॥

इदानीं जीव-ब्रह्मणो-रैक्यमाह, 'पुरत्रये' स्थूल-सूक्ष्म-ज्ञानाख्ये

शरीरत्रये 'क्रीडति' विहरति, यत्र जीवः 'चत्वारः' एवकारोऽर्थः, प्रसिद्धः परमात्मैव प्राणधारकः, 'ततस्तु' तस्मादेव जीवाभिपन्नः, नान्यः, तस्मात् 'जातम्' उत्पन्नम्, 'सकलं' निखिलं 'विचित्रं' विविधकर्म्म-नाम-रूपं विश्वम् ॥ १४ ॥

'आधारं' रज्जुरिव सर्पधारा-बलीवर्द्द-मूत्रितत्वादेः, सकलस्य विश्वस्याधारभूतम् 'आनन्दं' निरतिशयानन्द-स्वरूपम्, 'अखण्ड-बोधम्' आनन्दरूपत्वेऽपि स्वयं प्रकाशैकस्वभावम्। 'यस्मिन्' अखण्डबोधे 'लयं' विनाशं 'याति' गच्छति, पुरत्रयस्य व्याख्यातम्, च शब्दादन्यदपि ॥

'एतस्मात्' पुरत्रयाधिष्ठानात् बुद्धेर्दुष्टः, 'जायते' उत्पद्यते, 'प्राणः' क्रियाशक्तिः, 'मनः' अन्तःकरणं ज्ञानशक्तिः, 'सर्वे-न्द्रियाणि च' सर्वज्ञान-कर्म्मेन्द्रियाण्यपि, च शब्दाद्देहादिकमपि, 'खं' नभः, 'वायुः' नभस्वान्, 'ज्योतिः' धातुः, 'आपः' नीराणि, 'पृथिवी' भूमिः, 'विश्वस्य' निखिलस्य स्थावर-जङ्गमात्मकस्य प्राणिजातस्य 'धारिणी' विधारिणी ॥ १५ ॥

इदानीं महावाक्यार्थमाह, 'यत्' प्रसिद्धं 'परम्' उत्कृष्टं 'ब्रह्म' बृहत् देश-काल-वस्तु-परिच्छेद-शून्यं 'सर्व्वात्मा' सर्वप्राणि-हृदिस्थितः, सर्व्वात्मत्वस्य 'विश्वस्य' सर्वस्य कार्य्य-कारण-जातस्य 'आयतनम्' आधारभूतम्, 'महत्' प्रौढं सर्व्वाधारत्वेन; एवं 'सूक्ष्मात्' अणुपरिमाणात् 'सूक्ष्मतरं' महदप्यतिशयेन अणु, 'नित्यं' विनाशशून्यं 'तत्' उक्तं परं ब्रह्म 'त्वमेव' त्वदनुगतमेव(१) नान्यत्।

(१) दीपिकायां, तदनुगतैव

ननु तत् मत्तोऽन्यत्, अहन्तु तस्मादन्यः, मयि कर्त्तृत्वादि-विशेषोपलब्धादित्यत आह, 'त्वमेव तत्' त्वं कर्त्ता भोक्ता अविद्यया, वस्तुतः परं ब्रह्मैव, नत्वन्यः॥ १६॥

इदानीमेवं ज्ञाने फलमाह, 'जाग्रत्-स्वप्न-सुषुप्त्यादि-प्रपञ्चं' जाग्रत्-स्वप्न-सुषुप्त्यादयः उक्ताः, तदादयः विश्व-विराडादयः, त एव प्रपञ्चो जाग्रत्-स्वप्न-सुषुप्त्यादि-प्रपञ्चः तं, 'यत्' प्रसिद्धं स्वयं प्रकाशमानं 'प्रकाशते' प्रकाशयति। 'तत्' उक्तं स्वयं प्रकाशं 'ब्रह्म' सत्य-ज्ञानादि--लक्षणम्। 'अहं' ब्रह्मावगन्ता चिदानन्दात्मा, 'इति' अनेन प्रकारेण 'ज्ञात्वा' साक्षात् कृत्य 'सर्वबन्धैः' निखिलबन्धैः अहं ममाद्यैश्च सकारणैः 'प्रमुच्यते' प्रकर्षेण मुक्तो भवतीति॥ १७॥

इदानीं सर्व्वस्मात् प्रपञ्चाद्वैलक्षण्यमाह, 'त्रिषु' जागरण-स्वप्न-सुषुप्तेषु 'धामसु' स्थानेषु 'यत्' प्रसिद्धं 'भोग्यं' स्थूलं प्रविविक्तानन्दरूपं 'भोक्ता' विश्व-तैजस-प्राज्ञाख्यः, 'भोगश्च' स्थूल-प्रविविक्तानन्द-भोगोऽपि, चशब्दादधिदैवादि-विभागोऽपि, 'यत्' उक्तं त्रिधाम भोग्यादि-प्रपञ्चजातं, 'भवेत्' स्पष्टम्; 'तेभ्यः' त्रिधामादिभ्यः 'विलक्षणः' विपरीतलक्षणः, वैलक्षण्यमाह, 'साक्षी' साक्ष्यः(?) तस्य विश्वस्य द्रष्टा 'चिन्मात्रः' चिदेकरसः 'अहं' अहं-प्रत्यय-व्यवहार-योग्यः 'सदाशिवः' कैवल्यात्मा नित्य-कल्याणरूपो महेश्वरः॥ १८॥

प्रपञ्च-वैलक्षण्यं स्वस्योक्त्वा इदानीं जगज्जन्मादि-कारणत्वमपि स्वस्याह, 'मय्येव' मत्त एव ब्रह्माभिन्नात्, नत्वन्यस्मात्, 'सकलं' निखिलं भूत-भौतिक-प्रपञ्चजातं 'जातम्' उत्पन्नम्; 'मयि' ब्रह्मा-

भिन्ने 'सर्व्वं' निखिलं विश्वं 'प्रतिष्ठितं' प्रकर्षेण स्थितिमाप्तम्; 'मयि सर्व्वं' व्याख्यातम्; 'लयं याति' नाशं गच्छति; 'तत्' तस्मात् सर्व्वजगज्जन्म-स्थिति-ध्वंस-कारणत्वात् 'ब्रह्म' बृहत् देश-काल-वस्तु-परिच्छेद--शून्यम् 'अद्वयं' ग्राह्य--ग्रेयादि--विभाग-शून्यम् 'अस्मि' भवामि । 'अहं' ब्रह्मणोऽवगन्ता ॥ १८ ॥

'अणोः' अणुपरिमाणात्(१) 'अणीयान्' अतिशयेनाणुः 'अह-मेव' जगत्कारणम् अहंप्रत्यय-व्यवहारस्य योग्यः, नत्वन्यः, 'तद्वत्' यथा अणुः, तथा महान् सर्व्वस्मादभ्यधिकः, अहं व्याख्यातम्; अणीयसां महताञ्च कारणानां यथा भेदः, तथा तत्रापि स्या-दित्यत आह, 'विश्वं' साविद्यं भूत-भौतिकं प्रपञ्चजातम्, अहं व्याख्यातम्; अस्य तत्त्वाभेद-राहित्ये स्वस्मादप्यभेदः स्यादित्यत आह, 'विचित्र' विविधं स्वयमनन्तभेदवदित्यर्थः ।

तदभिन्नस्य तस्य तवाप्याधुनिकत्वं स्यादित्यत आह, 'पुरातनः' चिरन्तनः आधुनिक-सर्पधारा-बलीवर्द-कल्पितत्वाद-भिन्ना चिरन्तनी रज्जुरिव, अहं व्याख्यातम्; 'पुरुषः' परिपूर्णो वस्तुतः, अहं व्याख्यातम्; अविद्यादशायाम् 'ईशः' नियन्ता, नियन्तृत्वे सामर्थ्यमाह, 'हिरण्मयः' ज्ञानप्रचुरः तत्प्रधानो वा आदित्यस्थः सर्व्वकार्य्यकारणात्मा, अहं व्याख्यातम्, 'शिवरूपं' मङ्गल-स्वरूपं ब्रह्म 'अस्मि' भवामि ॥ २० ॥

इदानीं सर्व्वकारण-हीनस्य सर्व्वज्ञतां स्वस्याह, 'अपाणिपादः' पाणि-पाद-हीनः, अहं व्याख्यातम्; 'अचिन्त्यशक्तिः' दुर्बोधशक्तिः, एवम्भूतोऽपि जवनो गृहीतवेगइत्यर्थः,(२) 'पश्यामि' अवलोकयामि,

---

(१) दीपिकायां, अणुपरिमाणत्वात् । (२) दीपिकायां जवनो ग्रहीतेत्यर्थः ।

सः. 'अचक्षुः' चक्षुषा हीनः, सः अचक्षुः द्रष्टा, 'शृणोमि' श्रवणं करोमि 'अकर्णः' कर्णरहितः, अहं व्याख्यातम्; 'विजानामि' विविधं प्रपञ्चजातम् अवगच्छामि, 'विविक्तरूपः' बुद्ध्यादि-पृथग्-रूपः, 'नचास्ति' नास्त्येव, 'वेत्ता' कर्म्म-कर्त्तृ-भावनावगन्ता, 'मम' आनन्दात्मनो भेदरहितस्य 'चित्' स्वयं-प्रकाश-बोध-स्वभावः 'सदा' सर्व्वदा, अहं व्याख्यातम् ॥ २१ ॥

इदानीं सर्व्वशास्त्र-प्रतिपाद्यस्यात्मनः सर्व्वविकाराभावं दर्शयति, 'वेदैः' ऋगादिभिः 'अनेकैः' बहुभिः, अहमेव व्याख्यातम्; 'वेद्यः' प्रतिपाद्यः, 'वेदान्तकृत्' वेदान्त-सूत्रकृत् वेदव्यासरूपः, 'वेदविदेव च' वेदान्तकृतो विशेषणम्; वेदानां साङ्गानां साङ्ग-विद्या-स्थानानां वेत्ता वेदवित् स एव, नलब्धः, चशब्दादनेक-तपःसम्पन्नश्च, अहं व्याख्यातम्; अनेन विभूतिमत्सत्त्वेष्विदमेव प्रधानमित्युक्तम्। 'न पुण्य-पापे' मम स्पष्टम्; न स्त इति शेषः; 'नास्ति नाशः' विनाशो न विद्यते ममेत्यनुषङ्गः; 'न जन्म' जनिः न मम अस्तीत्यनुषङ्गः; 'देहेन्द्रिय बुद्धिः' देहश्च इन्द्रियाणि च बुद्धयश्च देहेन्द्रिय बुद्धिः 'नास्ति' न विद्यते, ममेत्यनुषङ्गः ॥ २२ ॥

'न भूमिरापो मम' पृथिवी सोदका मम नास्तीत्यनुषङ्गः; 'वह्निः' प्रसिद्धः 'नास्ति' न विद्यते, ममेत्यनुषङ्गः; 'न चानिलो मेऽस्ति' वायुरपि मम न विद्यते; चकारात् वायवीयं कार्य्यमपि; 'नचाम्बरञ्च' आकाशमपि मम नास्तीत्यर्थः; 'चकारौ' आकाश-कार्य्य-तद्व्यतिरिक्तोक्तानुक्त-भावार्थौ। 'एवम्' उक्तप्रकारेण 'विदित्वा' साक्षात्कृत्य 'परमात्मरूपम्' उत्कृष्टानन्दात्मरूपम, 'गुहाशयं' बुद्धौ शयानं 'निष्कलं' निर्गत-प्राण-श्रद्धा-खं-वायु

ज्योति-राप:-पृथ्वीन्द्रिय-मनोन्यद्दीर्य्य-(१) तपो-मन्त्र-कर्म्म-लोक-नामाख्यकल: तम्, 'अद्वितीयं' सजातीय-विजातीय-वस्तु-शून्यं, 'समस्तसाक्षिं' समस्त-साक्षिणं सर्व्वद्रष्टारं, 'सदसद्विहीनं' भावाभाव-विवर्जितम्। तदेव निरवद्यं गच्छतीत्याह, 'प्रयाति शुद्धं परमात्म-रूपं' स्पष्टम् ॥ २३ ॥

एवम्भूतं परमात्मानं प्रतिपत्तुमशक्तस्य अशुद्धान्तःकरणस्य अन्तःकरण-शुद्ध्यर्थमाह, 'यः' प्रसिद्धः मुमुक्षुः अनुत्पन्न-साक्षात्कारः, 'शतरुद्रियं' नमस्ते रुद्र इत्यादि रुद्राध्यायम् 'अधीते' पठति 'यथाशक्ति' नित्यं, 'सः' शतरुद्रियाध्यापकः 'अग्निभिः' श्रौतैः स्मार्त्तैः पवित्रीकृतः 'पूतो भवति' स्पष्टम्; 'सुरापानात्' मदिरापानात् महापातक-दोषात् 'पूतो भवति' स्पष्टम् ; 'ब्रह्म-हत्यात्' ब्रह्महत्यायाः ब्रह्महत्यारूपात् महापातक-दोषात् 'पूतो भवति' स्पष्टम् ; 'कृत्याकृत्यात्' कृत्यं करणीयं बुद्धिपूर्वकं पापम्, 'अकृत्यम्' अबुद्धिपूर्वकं पापं, कृत्यम् अकृत्यञ्च कृत्याकृत्यं, तस्मात्, पुतो भवतीति स्पष्टम्; 'तस्मात्' शतरुद्रियाध्यापनात् अविमुक्त-विरुद्धत्वेन मुक्ताः विमुक्ताः पशवः, तेभ्यो व्यतिरिक्तः 'अवि-मुक्तः' पशुपतिः, तम् 'आश्रितो भवति' स्पष्टम्; 'अत्याश्रमी'* अत्याश्रमः उक्त-परमहंस-लक्षणः, स यस्यास्तीति, सोऽत्याश्रमी, 'सर्वदा' निरन्तरम्, 'सकृदा' कदाचिद्वा दिवसे दिवसे एकवारमित्यर्थः।

---

(१) दीपिकायां मनोन्यद्दीर्य्यं। * मूले भवत्यत्याश्रमी इत्यत्र भवत्यत्याश्रमी इति पाठः शङ्कर-सम्मतः, स एव सङ्गतश्च।

'अनेन' रुद्राध्यायजपेन 'ज्ञानम्' अहं ब्रह्मास्मीति सा[illegible]
कारूपम् 'आप्नोति' प्राप्नोति 'संसारार्णव-नाशनं' संसार-सा[illegible]
शोषणम्।

यस्मात् रुद्राध्यायजपः अशेषपाप-निर्हरणद्वारा ब्रह्मज्ञानहेतुः,
'तस्मात्' ततः 'एवम्' उक्तेन प्रकारेण त्रिनेत्रध्यान-रुद्राध्याया-
ध्ययनेन 'विदित्वा' साक्षात्कृत्य 'एनं' परमात्मानं 'कैवल्यं'
केवलस्य आत्मनो भावः कैवल्यं, तत 'फलं' पुरुषाभिलाष-विषय
सर्वपुरुषार्थ-समाप्तिभूतम् 'अश्नुते' प्राप्नोति, 'कैवल्यं फलमश्नुते'
व्याख्यातम्। पदाभ्यासः उपनिषत्-समाप्त्यर्थः।

इति श्रीपरमहंस-परिव्राजकाचार्यानन्दात्म-(१)पूज्यपाद-[illegible]
शिष्यस्य श्रीशङ्करानन्द-भगवतः कृतिः
कैवल्योपनिषद्दीपिका समाप्ता।

---

(१) दीपिकायां, चार्य्यनन्दात्म-

# गारुड़ोपनिषत्।



ओं ब्रह्मविद्यां प्रवक्ष्यामि ; ब्रह्मा नारदाय, नारदो बृहत्सेनाय, बृहत्सेनो बृहस्पतये, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाजो(१) जीवितु-कामेभ्यः शिष्येभ्यः प्रायच्छत्।

प्रथमः खण्डः ॥ १ ॥

ओं गारुड़ोपनिषद् ब्रह्म-प्रोक्ता खण्डत्रयान्विता।
चतुश्चत्वारिंशत्तमी ग्रन्थसन्ध्येऽधुनोच्यते ॥ १ ॥

अथ गारुड़ोपनिषन्महामन्त्रस्य ब्रह्म ऋषिः अमृता गायत्री छन्दः श्रीमहाविष्णुर्गरुड़ात्मा देवता हलो बीजानि स्वराः शक्तयः, यद्वा जं बीजं क्ष्ट शक्तिः दं कीलकं मन्त्रोक्त-विषनाशार्थे जपे विनियोगः। ओं खगोत्तमाय विद्महे वैनतेयाय धीमहि तन्नस्तार्क्ष्यं प्रचोदयात्। अथ न्यासः। ओं गरुड़ाय अङ्गुष्ठाभ्यां नमः, ओं वैनतेयाय तर्जनीभ्यां नमः, ओं महातार्क्ष्याय मध्यमाभ्यां नमः, ओं खगोत्तमाय अनामिकाभ्यां नमः, ओं छन्दोमयाय कनिष्ठाभ्यां नमः, ओं नागालङ्कृत-शरीराय करतल

---

(१) क, ख, बृहत्सेन इन्द्राय, इन्द्रो भारद्वाजाय भारद्वाजो।